# काशीविद्यासुधानिधिः

# THE PANDIT.

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE,

DEVOTED TO

SANSKRIT LITERATURE.

NEW SERIES.

VOL. II.

BENARES:

PRINTED AND PUBLISHED BY THE PROPRIÉTORS,

E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS.

1878.




# INDEX TO VOLUME II. NEW SERIES.




॥ काशिकायाः ॥

षष्ठाध्यायस्य चतुर्थः पादः ।

---

### हुझल्भ्यो हेर्धिः ॥ १०१ ॥

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः । भिन्द्धि । छिन्द्धि । हुझल्भ्य इति किम् । क्रीणीहि । प्रीणीहि । हेरिति किम् । जुहुतात् । हलीत्येव । रुदिहि । स्वपिहि । इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पुनर्धिभावो न भवति । भिन्द्धकि छिन्द्धकीत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते ॥

### श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु शृणु पॄ कृ वृ इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये । श्रुधी हवमिन्द्र । शृणुधी गिरः । पूर्धि । उरुणस्कृधि । अपावृधि । शृणुधीत्यत्र धिभावविधानसामर्थ्यादुतश्च प्रत्ययादिति हेर्लुग्न भवति । अन्येषामपि दृश्यत इति दीर्घत्वम् । अतोऽन्यत्र व्यत्ययो बहुलमिति शप् । तस्य बहुलं छन्दसीति लुक् ॥

### अङितश्च ॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति । वा छन्दसीति पित्त्वेनास्याङित्त्वम् । सोम रारन्धि । अस्मभ्यं तद्धर्यश्व प्रयन्धि । युयोध्यस्मज्जुहुराणमेनः । अङित इति किम् । हव्यं प्रीणीहि । रारन्धीति रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावश्च अङित्त्वादेव । प्रयन्धीति यमेः शपो लुक् । युयोधीति यौतेः शपः श्लुः ॥

### चिणो लुक् ॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य लुग्भवति । अकारि । अहारि । अलावि ।

॥ काशिकायाः ॥

षष्ठाध्यायस्य चतुर्थः पादः ।

## हुझल्भ्यो हेर्धिः ॥ १०१ ॥

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः । भिन्द्धि । छिन्द्धि । हुझल्भ्य इति किम् । क्रीणीहि । प्रीणीहि । हेरिति किम् । जुहुताम् । हलीत्येव । रुदिहि । स्वपिहि । इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पुनर्धिभावो न भवति । भिन्द्धकि छिन्द्धकीत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते ॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु शृणु पृ कृ वृ इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये । श्रुधी हवमिन्द्र । शृणुधी गिरः । पूर्धि । उरुणस्कृधि । अपावृधि । शृणुधीत्यत्र धिभावविधानसामर्थ्यादुतश्च प्रत्ययादिति हेर्लुग्नभवति । अन्येषामपि दृश्यत इति दीर्घत्वम् । अतोऽन्यत्र व्यत्ययो बहुलमिति शप् । तस्य बहुलं छन्दसीति लुक् ॥

## अङितश्च ॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति । वा छन्दसीति पित्त्वेनास्याङित्त्वम् । सोम रारन्धि । अस्मभ्यं तद्धर्यश्व प्रयन्धि । युयोध्यस्मज्जुहुराणमेनः । अङित इति किम् । हव्यं प्रीणीहि । रारन्धीति रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावश्च अङित्त्वादेव । प्रयन्धीति यमेः शपो लुक् । युयोधीति यौतेः शपः श्लुः ॥

## चिणो लुक् ॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य लुग्भवति । अकारि । अहारि । अलावि ।

अपाचि । अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति, चिणो लुगित्येतद्विषयभेदाद्भिद्यते ॥

अतो हेः ॥ १०५ ॥

अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ । धाव । अत इति किम् । युहि । रुहि । तपरकरणं किम् । लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ॥

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उकारो यो ऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु । उत इति किम् । लुनीहि । सुनीहि । प्रत्ययादिति किम् । रुहि । युहि । असंयोगपूर्वादिति किम् । प्राप्नुहि । राध्नुहि । तक्ष्णुहि ॥ उतश्च प्रत्ययाच्छन्दो वा वचनम् ॥ * ॥ उतश्च प्रत्ययादित्यत्र छन्दसि वेति वक्तव्यम् । आतनुहि यातुधानान् । धिनुहि यज्ञपतिम् । तेन मा भागिनं कृणुहि ॥

लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

योयमुकारो ऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः । सुन्वः । सुनुवः । सुन्मः । सुनुमः । तन्वः । तनुवः । तन्मः । तनुमः । प्रत्ययस्येत्येव । युवः । युमः । असंयोगपूर्वस्येत्येव । शक्नुवः । शक्नुमः । लुगिति वर्त्तमाने लोपग्रहणमन्त्यलोपार्थम् ॥

नित्यं करोतेः ॥ १०८ ॥

करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति । कुर्व्वः । कुर्म्मः । उकारलोपस्य दीर्घविधौ अस्यानिवद्भावाद् हलिचेति दीर्घत्वं प्राप्तं न भकुर्छुरामिति प्रतिषिध्यते ॥

ये च ॥ १०९ ॥

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात् । कुर्यातात् । कुर्युः ॥



अत उत्सार्वधातुके ॥ ११० ॥

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति। सार्वधातुके क्ङिति परतः। कुरुतः। कुर्वन्ति। सार्वधातुकग्रहणं किम्। भूतपूर्वेऽपि सार्वधातुके यथा स्यात्। कुरु। तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम्। क्ङितीत्येव। करोति। करोषि। करोमि ॥

श्नसोरल्लोपः ॥ १११ ॥

श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। रुन्धः। रुन्धन्ति। भिन्तः। भिन्दन्ति। अस्तेः। स्तः। सन्ति। क्ङितीत्येव। भिनत्ति। अस्ति। श्नसोरिति पररूपं शकन्ध्वादिषु द्रष्टव्यम् ॥

श्नाभ्यस्तयोरातः ॥ ११२ ॥

श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। लुनते। लुनताम्। अलुनत *। अभ्यस्तानाम्। मिमते। मिमताम्। अमिमत। संजिहते। संजिहताम्। समजिहत। श्नाभ्यस्तयोरिति किम्। यान्ति। वान्ति। आत इति किम्। बिभ्रति। क्ङितीत्येव। अलुनात्। अजहात् ॥

ई हल्यघोः ॥ ११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः। लुनीतः। पुनीतः। लुनीथः। पुनीथः। लुनीते। पुनीते। अभ्यस्तानाम्। मिमीते। मिमीषे। मिमीध्वे। संजिहीते। संजिहीषे। संजिहीध्वे। हलीति किम्। लुनन्ति। मिमते। अघोरिति किम्। दत्तः। धत्तः। क्ङितीत्येव। लुनाति। जहाति ॥

इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति। दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। हलीत्येव। दरिद्रति।

* पुनते। पुनताम्। अपुनत। इत्यधिकं पुस्तकान्तरे।

क्ङितीत्येव । दरिद्राति ॥ दरिद्रातेरार्धधातुके लोपो वक्तव्यः ॥ * ॥ सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् ॥ * ॥ दरिद्रातीति दरिद्रः । आकारान्तलक्षणो णप्रत्ययो न भवति । पचादित्वादजेव भवति ।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

अद्यतन्यां * वेति वक्तव्यम् ॥ * ॥ अदरिद्रीत् । अदरिद्रासीत् । दरिद्रस्येति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ॥

## भियोऽन्यतरस्याम् ॥ ११५ ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः । बिभीतः । बिभिथः । बिभीथः । बिभिवः । बिभीवः । बिभिमः । बिभीमः । हलीत्येव । बिभ्यति । क्ङितीत्येव । बिभेति । सार्वधातुकइत्येव । भीयते † ॥

## जहातेश्च ॥ ११६ ॥

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः । जहितः । जहीतः । जहिथः । जहीथः । हलादावित्येव । जहति । क्ङितीत्येव । जहाति । सार्वधातुकइत्येव । हीयते । जेहीयते ‡ । पृथग्योगकरणमुत्तरार्थम् ॥

## आ च हौ ॥ ११७ ॥

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि । जहिहि । जहीहि ॥

## लोपो यि ॥ ११८ ॥

* लुङ् सञ्ज्ञा पूर्वाचार्यसंज्ञा ॥

† हलीत्येवेत्यारभ्य भीयतइत्यन्तं बहुषु पुस्तकेषु नास्ति । युक्तं चैतत्, पदमञ्जर्यां हलादौ क्ङिति सार्वधातुकइत्येतेषां नात्रोपयोग इत्युक्तत्वात् ।

‡ सार्वधातुके इत्येव हीयते जेहीयते इत्येतत्पुस्तकेषु बहुषु नास्ति । पदमञ्जर्यां नास्योपयोग इत्युक्ततेयेदमेव युक्तम् ।

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात् । जह्याताम् । जह्युः ॥

घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतो ऽभ्यासलोपश्च । देहि । धेहि । अस्तेः । श्नसोरल्लोप इत्यकारलोपः । एधि । शिदयं लोपस्तेन सर्वस्याभ्यासस्य भवति ॥

अत एकहल्मध्ये ऽनादेशादेर्लिटि ॥ १२० ॥

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये यो ऽकारस्तस्य एकारादेशो भवति अभ्यासलोपश्च लिटि क्ङिति परतः । रेणतुः । रेणुः । येमतुः । येमुः । पेचतुः । पेचुः । देभतुः । देभुः । अत इति किम् । दिदिवतुः । दिदिवुः । तपरकरणं किम् । ररासे । ररासाते । ररासिरे । एकहल्मध्यइति किम् । ररक्षतुः । ररक्षुः * । तत्सरतुः । तत्सरुः । अनादेशादेरिति किम् । चकणतुः । चकणुः । जगणतुः । बभणतुः । जगणुः । बभणुः । लिट आदेशविशेषणं किम् । इहापि यथा स्यात् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे । अनैमित्तिके नत्वसत्वे तदादिर्लिट्यादेशादिर्न भवति । इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति । तेन तदादिरप्यादेशादिर्भवति । तथा च फलिभजोरेत्वं विधीयते । रूपाभेदे त्वादेशादिर्नाश्रीयतइति शसिददोः प्रतिषेधवचनं ज्ञापकम् । अन्यथा हि पेचतुः पेचुः, देमतुः देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात् । क्ङितीत्येव । अहं पपच । अहं पपठ ॥ दम्भेरेत्वं वक्तव्यम् ॥ * ॥ देभतुः । देभुः । नलोपस्यासिद्धत्वाच्च प्राप्नोति ॥ नशिमन्योरलिट्येत्वं वक्तव्यम् ॥ * ॥ अनेशम् । मेनका । अनेशमिति नशेर्लुङि पुषादित्वादङ् । मेनकेति मनेराशिषि चेति वुन् । क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ॥ छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् ॥ * ॥ व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते ।

* इदमयुक्तं संयोगात्परत्वेन लिटः कित्त्वाभावात् ॥

क्ङितीत्येव । दरिद्राति ॥ दरिद्रातेरार्धधातुके लोपो वक्तव्यः ॥ * ॥ सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् ॥ * ॥ दरिद्रातीति दरिद्रः । आकारान्तलक्षणो णप्रत्ययो न भवति । पचादित्वादजेव भवति ।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

अद्यतन्यां * वेति वक्तव्यम् ॥ * ॥ अदरिद्रीत् । अदरिद्रासीत् । दरिद्रस्येति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ॥

## भियो ऽन्यतरस्याम् ॥ ११५ ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः । बिभीतः । बिभिथः । बिभीथः । बिभिवः । बिभीवः । बिभिमः । बिभीमः । हलीत्येव । बिभ्यति । क्ङितीत्येव । बिभेति । सार्वधातुकइत्येव । भीयते † ॥

## जहातेश्च ॥ ११६ ॥

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः । जहितः । जहीतः । जहिथः । जहीथः । हलादावित्येव । जहति । क्ङितीत्येव । जहाति । सार्वधातुकइत्येव । हीयते । जेहीयते ‡ । पृथग्योगकरणमुत्तरार्थम् ॥

## आ च हौ ॥ ११७ ॥

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि । जहिहि । जहीहि ॥

## लोपो यि ॥ ११८ ॥

---

* लुङ इति पूर्वाचार्यसंज्ञा ॥

† हलीत्येवेत्यारभ्य भीयतइत्यन्तं बहुषु पुस्तकेषु नास्ति । युक्तं चैतत्, पदमञ्जर्यां हलादौ क्ङिति सार्वधातुकइत्येतेषां नात्रोपयोग इत्युक्तत्वात् ।

‡ सार्वधातुके इत्येव हीयते जेहीयते इत्येतत्पुस्तकेषु बहुषु नास्ति । पदमञ्जर्यां नास्योपयोग इत्युक्ततयेदमेव युक्तम् ।

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात् । जह्याताम् । जह्युः ॥

## घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतो ऽभ्यासलोपश्च । देहि । धेहि । अस्तेः । श्नसोरल्लोप इत्यकारलोपः । एधि । शिदयं लोपस्तेन सर्वस्याभ्यासस्य भवति ॥

## अत एकहल्मध्ये ऽनादेशादेर्लिटि ॥ १२० ॥

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये यो ऽकारस्तस्य एकारादेशो भवति अभ्यासलोपश्च लिटि क्ङिति परतः । रेणतुः । रेणुः । येमतुः । येमुः । पेचतुः । पेचुः । देभतुः । देभुः । अत इति किम् । दिदिवतुः । दिदिवुः । तपरकरणं किम् । ररासे । ररासाते । ररासिरे । एकहल्मध्यइति किम् । ररक्षतुः । ररक्षुः * । तत्सरतुः । तत्सरुः । अनादेशादेरिति किम् । चकणतुः । चकणुः । जगणतुः । बभणतुः । जगणुः । बभणुः । लिट आदेशविशेषणं किम् । इहापि यथा स्यात् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे । अनैमित्तिके नत्वसत्वे तदादिर्लिट्यादेशादिर्न भवति । इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति । तेन तदादिरप्यादेशादिर्भवति । तथा च फलिभजोरेत्वं विधीयते । रूपाभेदे त्वादेशादिर्नाश्रीयतइति शसिदद्योः प्रतिषेधवचनं ज्ञापकम् । अन्यथा हि पेचतुः पेचुः, देमतुः देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात् । क्ङितीत्येव । अहं पपच । अहं पपठ ॥ दम्भेरेत्वं वक्तव्यम् ॥ * ॥ देभतुः । देभुः । नलोपस्यासिद्धत्वाच्च प्राप्नोति ॥ नशिमन्योरलिट्येत्वं वक्तव्यम् ॥ * ॥ अनेशम् । मेनका । अनेशमिति नशेर्लुङि पुषादित्वादङ् । मेनकेति मनेराशिषि चेति वुन् । क्षिपकादिषु प्रक्षेपादित्वं न क्रियते ॥ छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् ॥ * ॥ व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते ।

* इदमयुक्तं संयोगात्परत्वेन लिटः कित्वाभावात् ॥

जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ ॥

## फणां च सप्तानाम् ॥ १२५ ॥

फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परत,स्थलि च सेटि। फेणतुः। फेणुः। फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेशे । भ्रेशाते । भ्रेशिरे । बभ्राशे । बभ्राशाते । बभ्राशिरे । भ्लेशे । भ्लेशाते । भ्लेशिरे । बभ्लाशे । बभ्लाशाते । बभ्लाशिरे । स्येमतुः । स्येमुः । स्येमिथ। सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः। स्वेनिथ। सस्वनतुः । सस्वनुः । सस्वनिथ। सप्तानामिति किम् । दध्वनतुः । दध्वनुः । दध्वनिथ ॥

## न शसददवादिगुणानाम् ॥ १२६ ॥

शस दद इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च । विशशसतुः । विशशसुः । विशशसिथ । दददे । ददवाते । ददविरे । वादीनाम् । ववमतुः । ववमुः । ववमिथ । गुणस्य । विशशरतुः । विशशरुः । विशशरिथ । लुलविथ । पुपविथ । गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्योकारस्य चायमकार इति एत्वं प्रतिषिध्यते ॥

## अर्वणस्त्रसावनञः ॥ १२७ ॥

अर्वन्नित्येतस्याङ्गस्य तृ इत्ययमादेशो भवति, सुश्चेत्ततः परो न भवति । स च नञ उत्तरो न भवति। अर्वन्तौ । अर्वन्तः । अर्वन्तम् । अर्वन्तौ । अर्वतः । अर्वता । अर्वद्भ्याम् । अर्वद्भिः । अर्वती । आर्वतम् । असाविति किम् । अर्वा । अनञ इति किम् । अनर्वाणौ । अनर्वाणः । अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

## मघवा बहुलम् ॥ १२८ ॥

मघवन्नित्येतस्याङ्गस्य बहुलं तृ इत्ययमादेशो भवति । मघवान् । मघवन्तौ । मघवन्तः । मघवन्तम् । मघवन्तौ । मघवतः । मघवता । मघवती । माघवतम् । न च भवति । मघवा । मघवानौ । मघवानः । मघवानम् । मघवानौ । मघोनः । मघोना । मघवभ्याम् । मघवभिः । मघोनी । माघवनम् ॥

## भस्य ॥ १२९ ॥

भस्येत्ययमधिकार, आ अध्यायपरिसमाप्तेः यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद्वेदितव्यम् । वक्ष्यति । पादः पत् । द्विपदः पश्य । द्विपदा कृतम् । भस्येति किम् । द्विपादौ । द्विपादः ॥

## पादः पत् ॥ १३० ॥

पादिति पादशब्दो लुप्ताकारो गृह्यते । तदन्तस्याङ्गस्य भस्य पदित्ययमादेशो भवति । स च निर्दिश्यमानस्यादेशा भवन्तीति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य । द्विपदः पश्य । द्विपदा । द्विपदे । द्विपदिकां ददाति । त्रिपदिकां ददाति । वैयाघ्रपद्यः ॥

## वसोः संप्रसारणम् ॥ १३१ ॥

वस्वन्तस्य भस्य संप्रसारणं भवति । विदुषः पश्य । विदुषा । विदुषे । पेचुषः पश्य । पेचुषा । पेचुषे । ययुषः पश्य । आतो लोपे कर्त्तव्ये वसुसंप्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति ॥ वसुसंप्रसारणे क्वसोरपि ग्रहणमिष्यते ॥

## वाह ऊठ् ॥ १३२ ॥

वाह इत्येवमन्तस्य भस्य ऊठ् इत्येतत्संप्रसारणं भवति । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । एत्येधत्यूठ्सु इति वृद्धिः । अथ किमर्थमूठ् क्रियते । संप्रसारणएव कृते गुणे च वृद्धिरेवेति वृद्धौ सत्यां सिद्धं रूपं भवति प्रष्ठौह इति अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते । ज्ञापकार्थम् । एतज् ज्ञापयति भवत्येषा परिभाषा

असिद्धं बहिरङ्गमन्तरङ्गइति । तस्यां हि सत्यां बहिरङ्गस्य संप्रसारण-स्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ॥

श्वयुवमघोनामतद्धिते ॥ १३३ ॥

श्वन् युवन् मघवन् इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः संप्रसार-णं भवति । शुनः । शुना । शुने । यूनः । यूना । यूने । मघोनः । मघोना । मघोने । अतद्धितइति किम् । शौवनं मांसम् । यौवनं वर्त्तते । माघवनः स्थालीपाकः । शुनो विकारे प्राणिरजतादिभ्योऽञ्, द्वारादित्वादैजागमः ॥ श्वादीनामेतत्संप्रसारणं नकारान्तानामिष्यते ॥ इह न भवति । युवतीः पश्य । मघवतः । मघवता । मघवते । तदर्थमुत्तरत्र योगविभागं कुर्वन्ति । अल्लोपः । अनः । अन इत्युभयोः शेष इति ॥

अल्लोपोऽनः ॥ १३४ ॥

अनित्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञः पश्य । राज्ञा । राज्ञे । तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे ॥ अनो नकारान्तस्यायं लोप इष्यते ॥ इह न भवति । राजकीयमिति ॥

षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥

षकारपूर्वो यो ऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवति अणि परतः । औक्ष्णः । तात्क्ष्णः । भ्रौणघ्नः * । धार्त्तराज्ञः । षपूर्वहन्धृतराज्ञामिति किम् । सामनः । वैमनः । अचिति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः । अणीति किम् । ताक्षण्यः ॥

विभाषा ङिश्योः ॥ १३६ ॥

ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति । राज्ञि । राजनि । साम्नि । सामनि । साम्नी । सामनी ॥

न संयोगाद्वमन्तात् ॥ १३७ ॥

वकारमकारान्तात्संयोगादुत्तरस्यानो ऽकारस्य लोपो न भवति ।

* वार्त्रघ्न इत्यधिकं पुस्तकान्तरे ।

पर्वणा । पर्वणे । अथर्वणा । अथर्वणे † । संयोगादिति किम् । प्रतिदीव्ना । प्रतिदीव्ने । साम्ना । साम्ने । वमन्तादिति किम् । तक्ष्णा । तक्ष्णे ॥

अचः ॥ १३८ ॥

अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यते । तदन्तस्य भस्य अकारस्य लोपो भवति । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधूचे ॥

उद ईत् ॥ १३९ ॥

उद उत्तरस्याच ईकारादेशो भवति । उदीचः । उदीचा । उदीचे ॥

आतो धातोः ॥ १४० ॥

आकारान्तस्य धातोर्भस्य लोपो भवति । कीलालपः पश्य । कीलालपा । कीलालपे । शुभंयः पश्य । शुभंया । शुभंये । आत इति किम् । निया । निये । धातोरिति किम् । खट्वाः पश्य । मालाः पश्य । आत इति योगविभागः । तेन क्त्वो ल्यप् हलः श्नः शानजिति सिद्धं भवति ॥

मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः । त्मना सोमेषु । मन्त्रेष्विति किम् । आत्मना कृतम् । आङीति किम् । यदात्मनस्तन्वो वरिष्ठा ॥ आङोऽन्यत्रापि छन्दसि लोपो दृश्यते ॥ * ॥ त्मन्यासमञ्जत मह्यम् ॥

ति विंशतेर्डिति ॥ १४२ ॥

भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति । विंशत्या क्रीतः । विंशकः । विंशं शतम् । विंशतेः पूरणो विंशः । एकविंशः । डितीति किम् । विंशत्या ॥

---

* चर्मणा । चर्मणे । इत्यधिकमन्यस्मिन्पुस्तके ।

टेः ॥ १४३ ॥

टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति। कुमुद्वान्। नड्वान्। वेतस्वान्। उपसरजो, मन्दुरजः। त्रिंशता क्रीतः। त्रिंशकः। डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति ॥

नस्तद्धिते ॥ १४४ ॥

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः। आग्निशर्म्मिः। औडुलोमिः। बाह्वादित्वादिञ्प्रत्ययः। न इति किम्। सात्वतः। तद्धितइति किम्। शर्म्मणा। शर्म्मणे ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्प्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम् ॥ * ॥ अत्र ये इवन्तास्तेषामिनण्यनपत्यइति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषामवितिं। सब्रह्मचारिण इमे साब्रह्मचाराः। पीठसर्पिणः। पैठसर्पाः। कलापिना प्रोक्तमधीयते, कालापाः। कुथुमिनः, कौथुमाः। तैतिलिजाजलिनामाचार्यौ तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते। तं ग्रन्थमधीयते। तैतिलाः। जाजलाः। शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति। एवं लाङ्गलाः। शैलालाः। शिखण्डिनः, शैखण्डाः। सूकरसद्मनः, सौकरसद्माः। सुपर्वणः, सौपर्वाः ॥ अश्मनो विकारउपसंख्यानम् ॥ * ॥ अश्मनो विकार, आश्मः। आश्मनोऽन्यः ॥ चर्मणः कोशउपसंख्यानम् ॥ * ॥ चार्मः कोशः। चार्म्मणोऽन्यः ॥ शुनः संकोचउपसंख्यानम् ॥ * ॥ शौवः संकोचः। शौवनोऽन्यः ॥ अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानम् ॥ * ॥ के पुनः सायंप्रातिकादयः। येषामव्ययानामविहितष्टिलोपः प्रयोगे च दृश्यते ते सायंप्रातिकप्रकारा ग्रहीतव्याः। सायंप्रातर्भवः, सायंप्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः। कालाट् ठञिति ठञ्प्रत्ययः॥ त्युट्युलौ तु नेष्येते ॥ आरातीयः। शाश्वतिकः। शाश्वत इत्येवमादिषु न दृश्यते टिलोपः ॥

अह्नष्टखोरेव ॥ १४५ ॥

अहन्नित्येतस्य टखोरेव परतष्टिलोपो भवति। द्वे अहनी समाहृते,

ग्नातीति कित् । गार्ग्यायणः । वात्स्यायनः । हल इत्येव । कारिकेयस्यापत्यं, कारिकेयिः ॥

क्यच्व्योश्च ॥ १५२ ॥

क्य च्वि इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति । वात्सीयति । गार्गीयति । वात्सीयते । गार्गीयते । च्वौ । गार्गीभूतः । वात्सीभूतः । आपत्यस्येत्येव । सांकाश्यायते । सांकाश्यीभूतः । हल इत्येव । कारिकेयीयति । कारिकेयीभूतः ॥

बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥

नडादिषु बिल्वादयः पठ्यन्ते । नडादीनां कुक्चेति कृतकुगागमा बिल्वकादयो भवन्ति । तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः । बैल्वकाः । वेणुकीयाः । वैणुकाः । वेत्रकीयाः । वैत्रकाः । वेतसकीयाः । वैतसकाः । तृणकीयाः । तार्णकाः । इक्षुकीयाः । ऐक्षुकाः । काष्ठकीयाः । काष्ठकाः । कपोतकीयाः । कापोतकाः ॥ क्रुञ्चा ह्रस्वत्वं च ॥ क्रुञ्चकीयाः । क्रौञ्चकाः । छग्रहणं किम् । छमात्रस्य लुग्यथा स्याद् कुको निवृत्तिर्मा भूदिति । अन्यथा हि संनियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इति कुगपि निवर्त्तेत । लुग्ग्रहणं सर्वलोपो यथा स्याद् यकारमात्रस्य मा भूत् ॥

तुरिष्ठेमेयस्सु ॥ १५४ ॥

इष्ठन् इमनिच् ईयसुन् इत्येतेषु परतः तृशब्दस्य लोपो भवति । आसुतिं करिष्ठः । विजयिष्ठः । वहिष्ठः । दोहीयसी धेनुः । सर्वस्य तृशब्दस्य लोपार्थं वचनम् । अन्त्यस्य हि टेरित्येव सिद्धः । लुगित्येतदत्र नानुवर्त्तते । तथाहि सति नलुमताङ्गस्येति प्रतिषेधाद् गुणो न स्यात् । इमनिज्ग्रहणमुत्तरार्थम् । इतरौ तु तुश्छन्दसीति भवतः ॥

टेः ॥ १५५ ॥

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः । पटु । पटिष्ठः । पटिमा । पटीयान् । लघु । लघिष्ठः । लघिमा । लघीयान् ॥ णाविष्ठवत्प्रा-

तिपदिकस्य कार्यं भवतीति वक्तव्यम् ॥ * ॥ किं प्रयोजनम् । पुंवद्भावरभावटिलोपयणादिपरार्थम् । पुंवद्भावः । एनीमाचष्टे, एतयति । श्येतयति । तसिलादिष्वाकृत्वसुच इति इष्ठे पुंवद्भाव उक्तः । रभावः । पृथुमाचष्टे, प्रथयति । म्रदयति । टिलोपः । पटुमाचष्टे पटयति । लघयति । यणादिपरम् । स्थूलमाचष्टे, स्थवयति * । भारद्वाजीयास्तु पठन्ति । णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थमिति । स्रग्विणमाचष्टे, स्रजयति । वसुमन्तमाचष्टे, वसयति । युवानमाचष्टे, यवयति । कनयति । एतदुभयमप्युदाहरणमात्रं न परिगणनम् । प्रादयोऽपि ह्रीष्यन्ते । प्रियमाचष्टे, प्रापयति ॥

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं [illegible]स्य गुणः ॥ १५६ ॥

स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति । स्थूल । स्थविष्ठः । स्थवीयान् । दूर । दविष्ठः । दवीयान् । युवन् । यविष्ठः । यवीयान् । ह्रस्व । ह्रसिष्ठः । ह्रसीयान् । ह्रसिमा । क्षिप्र । क्षेपिष्ठः । क्षेपीयान् । क्षेपिमा । ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते । क्षुद्र । क्षोदिष्ठः । क्षोदीयान् । क्षोदिमा । परग्रहणं किम् । यवीष्ठः । यवीयान् । ह्रसिष्ठः । ह्रसीयान् । इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत् । पूर्वग्रहणं विस्पष्टार्थम् ॥

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां
प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥

प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्रा घि वृन्द इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः । प्रिय । प्रेष्ठः । प्रेमा । प्रेयान् । स्थिर । स्थेष्ठः । स्थेयान् । स्थेमा । स्फिर । स्फेष्ठः । स्फेयान् । उरु । वरिष्ठः । वरिमा । वरीयान् । बहुल । बंहिष्ठः । बंहीयान् । बंहिमा । गुरु । गरिष्ठः । गरीयान् । गरिमा । वृद्ध । वर्षिष्ठः । वर्षीयान् । तृप्र । त्रपिष्ठः । त्रपी-

* दवयतीत्यधिकं पुस्तकान्तरे ।

यान् । दीर्घ । द्राघिष्ठः । द्राघीयान् । द्राघिमा । वृन्दारक । वृन्दिष्ठः । वृन्दीयान् । प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते । तेनान्येषामिमनिज् न भवतीति नोदाह्रियते ॥

### बहोर्लोपो भू च बहोः ॥ १५८ ॥

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति तस्य च बहोः स्थाने भू इत्ययमादेशो भवति । भूयान् । भूमा । बहुशब्दः पृथ्वादिषु पठ्यते । बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम् । अन्यथा हि प्रत्ययानामेव भूभावः स्यात् ॥

### इष्ठस्य यिट् च ॥ १५९ ॥

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति । भूयिष्ठः । लोपापवादो यिडागमः तस्मिन्निकार उच्चारणार्थः ॥

### ज्यादादीयसः ॥ १६० ॥

ज्यादुत्तरस्य ईयस आकार आदेशो भवति । ज्यायान् । लोपस्य यिटा व्यवहितत्वादादित्युच्यते । लोपे हि सति अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घत्वेन ज्यायानिति सिध्यति ॥

### र ऋतो हलादेर्लघोः ॥ १६१ ॥

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथीयान् । प्रथिमा । म्रदिष्ठः । म्रदीयान् । म्रदिमा । ऋत इति किम् । पटिष्ठः । पटिमा । पटीयान् । हलादेरिति किम् । ऋजिष्ठः ॥ ऋजिमा । ऋजीयान् । लघोरिति किम् । कृष्णिष्ठः । कृष्णीयान् । कृष्णिमा । परिगणनमत्र कर्त्तव्यम् ॥

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

तत इह न भवति । कृतमाचष्टे, कृतयति । मातरमाचष्टे, मातयति । भ्रातयति ॥

## विभाषर्जोश्छन्दसि ॥ १६२ ॥

ऋजु इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये । रजिष्ठमेति पन्थानम् । त्वमृजिष्ठः ॥

## प्रकृत्यैकाच् ॥ १६३ ॥

एकाज् यद्भसञ्ज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति । स्रग्विन्नित्येतस्य विन्नन्तस्य स्रजिष्ठः । स्रजीयान् । स्रजयति । स्रुग्वदित्येतस्य मत्वन्तस्य स्रुचिष्ठः । स्रुचीयान् । स्रुचयति । एकाजिति किम् । वसुमदित्येतस्य वसिष्ठः ॥ प्रकृत्या ऽके राजन्यमनुष्ययुवानः ॥ * ॥ अके प्रत्यये परतो राजन्य मनुष्य युवन्नित्येते प्रकृत्या भवन्ति । राजन्यानां समूहो, राजन्यकम् । मनुष्याणां समूहो, मानुष्यकम् । आपत्यस्य च तद्धितेनातीति यलोपः प्रकृतिभावेन न भवति । यूनो भावः, यौवनिका । मनोज्ञादित्वाद् वुञ् । तत्र नस्तद्धित इति टिलोपो न भवति ॥

## इनण्यनपत्ये ॥ १६४ ॥

इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति । सांकूटिनम् । सांराविणम् । सांमार्जिनम । अभिविधौ भाव इनुण् । अणिनुण इत्यण् । * स्रग्विण इदं, स्राग्विणम् । अणीति किम् । दण्डिनां समूहो, दाण्डम् । अनुदात्तादेरञित्यञ्प्रत्ययः । अनपत्य इति किम् । मेधाविनो ऽपत्यं, मैधावः ॥

## गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥

गाथिन् विदथिन् केशिन् गणिन् पणिन् इत्येते चाणि प्रकृत्या भवन्ति । गाथिनो ऽपत्यं, गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः । अपत्यार्थोयमारम्भः ॥

## संयोगादिश्च ॥ १६६ ॥

संयोगादिश्च इनणि प्रकृत्या भवति । शङ्खिनो ऽपत्यं, शाङ्खिनः । माद्रिणः । वाज्रिणः ॥

---

* अभिविधावित्यारभ्य इत्यण् इत्यन्तः पाठो बहुत्र नास्ति ।

अन् ॥ १६७ ॥

अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च। सामनः। वैमनः। सौत्वनः। जैत्वनः॥

ये चाभावकर्मणोः ॥ १६८ ॥

यकारादौ च तद्धिते ऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति। सामसु साधुः, सामन्यः। ब्रह्मण्यः। अभावकर्मणोरिति किम्। राज्ञो भावः कर्म्म वा, राज्यम्। राजविति पुरोहितादिषु पठ्यते। ततोयं यक् प्रत्ययः॥

आत्माध्वानौ खे ॥ १६९ ॥

आत्मन् अध्वन् इत्येतौ खे परतः प्रकृत्या भवतः। आत्मने हित, आत्मनीनः। अध्वानमलङ्गामी, अध्वनीनः। खइति किम्। प्रत्यात्मम्। प्राध्वम्। प्रत्यात्ममित्यव्ययीभावे ऽनश्चेति समासान्तष्टच्प्रत्ययः। प्राध्वमित्युपसर्गादध्वन इति अच्प्रत्ययः॥

न मपूर्वो ऽपत्ये ऽवर्म्मणः ॥ १७० ॥

मपूर्वो ऽन् अवर्म्मणोऽणि परतो ऽपत्यार्थे न प्रकृत्या भवति। सुषाम्णो ऽपत्यं, सौषामः। चान्द्रसामः। मपूर्व इति किम्। सौत्वनः। अपत्यइति किम्। चर्म्मणा परिवृतो रथः, चार्म्मणः। अवर्म्मण इति किम्। चक्रवर्म्मणो ऽपत्यं, चाक्रवर्म्मणः॥ मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम्॥ * ॥ हितनाम्नोपत्यं, हैतनामः। हैतनामनः॥

ब्राह्मो जातौ ॥ १७१ ॥

योगविभागोत्र क्रियते। ब्राह्म इत्येतदपत्याधिकारेपि सामर्थ्यादपत्यादन्यत्राणि टिलोपार्थं निपात्यते। ब्राह्मो गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ततो जातौ। अपत्यइत्येव। अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति। ब्रह्मणोपत्यं, ब्राह्मणः। अपत्यइत्येव। ब्राह्मी ओषधिः॥

कार्म्मस्ताच्छील्ये ॥ १७२ ॥

कार्म्म इति ताच्छील्ये टिलोपो निपात्यते। कर्म्मशीलः, कार्म्मः।

शीलं छत्रादिभ्यो ण इति णप्रत्ययः । यद्येवं, किमर्थमिदं, नस्तद्धित इत्येव टिलोपः सिद्धः । सत्यमेतत् । ज्ञापकार्थं तु । एतज् ज्ञापयति ताच्छीलिके णे ऽण्कृतानि भवन्तीति । तेन चौरी तापसीति णान्तादपीकारः सिद्धो भवति । ताच्छील्य इति किम् । कर्म्मण इदं, कार्म्मणम् ॥

औक्षमनपत्ये ॥ १७३ ॥

औक्षमित्यनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्य इति किम् । उक्ष्णो ऽपत्य,मौक्ष्णः । षपूर्वहन्धृतराज्ञामणि इत्यलोपः ॥

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

दाण्डिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वासिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते । दण्डिन् हस्तिन् इत्येतौ नडादिषु पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते । केषां चित्तु हस्तिन्निति नडादिषु न पठ्यते । तेषामत एव निपातनात् फगपि भवति । दण्डिनोपत्यं, दाण्डिनायनः । हस्तिनोपत्यं, हास्तिनायनः । अथर्वन्निति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोपि उपचाराद् अथर्वन्नित्युच्यते । तमधीते यः स, आथर्वणिकः । इके प्रकृतिभावो निपात्यते । जिह्माशिन्निति शुभ्रादिषु पठ्यते । तस्य ढके परतः प्रकृतिभावो निपात्यते । जिह्माशिनो ऽपत्यं जैह्माशिनेयः । वासिनो ऽपत्यम्, उदीचां वृद्धादगोत्रादिति फिञ् । तत्र प्रकृतिभावो निपात्यते । वासिनायनिः । भ्रूणहन् धीवन् इत्येतयोः ष्यञि तपरस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः, भ्रौणहत्यम् । धीव्नो भावो धैवत्यम् । हनस्तोचिण्णलोरिति यत्तत्वं तद्धातुप्रत्यय एवेति भ्रौणघ्नो वार्त्रघ्न इत्यत्र न भवत्यतो भ्रौणहत्ये तत्वं निपात्यते । सारव इति सरयू इत्येतस्य अणि परतो ऽयूशब्दलोपो निपात्यते । सरय्वां भवं, सारवमुदकम् । ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोयमाद्युदात्तोन्तोदात्तश्च निपात्यते । इक्ष्वाकोरपत्यं, जनपदशब्दात्क्षत्रियादञित्यञ्, तत्र उकारलोपो निपात्यते ।

ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः कोपधादणित्यण् । ऐक्ष्वाकः । मैत्रेय इति मित्रयुशब्दो गृष्ट्यादिषु पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः । अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव न पठ्यते तत्राञि कृते यादेरिति इयादेशेनैव सिद्धमेवं च लोपार्थं निपातनं कर्त्तव्यं न भवति, यस्कादिषु च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्रयव इत्यत्र इत्येव हि लुकः सिद्धत्वात् । नैतदस्ति । मित्रयूणां संघ इत्यत्र गोत्रचरणाद्वुञं बाधित्वा मैत्रेयकः संघ इत्यत्र संघाङ्कलक्षणेष्वञ्यञिञामणित्यण् प्राप्नोति । हिरण्मयमिति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः, हिरण्मयः ॥

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥ १७५ ॥

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये । ऋतु वास्तु इत्येतयोर्यति यणादेशो निपात्यते ऋतौ भवम्, ऋत्व्यम् । वास्तौ भवं, वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते वस्तुनि भवो वास्त्वः मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते । माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते । हिरण्ययम् ॥

इत्युपाध्यायश्रीवामनकृतायां काशिकायां षष्ठस्याध्यायस्य चतुर्थः पादः ॥ समाप्तश्चायं षष्ठोऽध्यायः ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ चतुर्दशस्तबकारम्भः ॥

एवं वागामिनीर्यामिनीर्यापयिष्यथ प्रमदा मदासङ्गेनेति कृष्णेन दत्ताश्वासाश्वासादितभूरिसंकल्पाः कल्पायुतमिव क्षणमपि मन्यमानाः कुमार्योऽपि साध्वसाध्वसा एव यदि समुपसेदुस्तदा कांचन

* संधिः प्राग्वत् ।

काञ्चनलतोद्यानपरम्परां परां जंगमामिव मन्वाना वनदेवता अपि ता अपि वीक्ष्य विसिष्मियिरे ॥ ६३ ॥

हे प्रमदा मदासङ्गेन मम सम्यक् सङ्गेनेति वस्त्राहरणादिने दत्त आश्वासो याभ्यस्ताः । कांचन कांचिदपूर्वामित्यर्थः, काञ्चनमयीनां लतानामुद्यानस्य परम्परां संततिं परामुत्कृष्टाम् । ता अपि कुमारीरपि, राधाद्या व्यूढास्तु वीक्ष्य किमुतेत्यर्थः ॥ ९३ ॥

प्रणयादरादराः पूर्ववद्वसन्तमहा महानुरूपवेषादिभिरभूषयन्नपि च ॥ ६४ ॥

प्रणयेन· अदरः· अनल्प आदरो यासु ताः ॥ ९४ ॥

यथा ।

कचौघे पुंनागं वकुलमुकुलानि भ्रमरके-
ष्वशोकं सीमन्ते श्रवसि सहकारस्य कलिकाः ।
स्तनाग्रे वासन्तीकुसुमदलमालेति कुसुमैः
स्वयं वृन्दा राधां सपदि मुमुदेऽलंकृतवती ॥ ६५ ॥

भ्रमरकेषु ललाटलम्बलकेषु ॥ ९५ ॥

तथान्याश्चान्यासां मधुमदमहोत्साहमहिम-
प्रमुह्यच्चित्तानामहमहमिकासत्वरहृदः ।
प्रसूनालंकारै रुचिररचनैः प्रत्यवयवं
विलासैः सौरभ्यप्रणयिभिरलंचक्रुरभितः ॥ ६६ ॥

अन्या वृन्दानुवर्तिन्यो वनदेवता अन्यासां चन्द्रावल्यादीनां प्रत्यवयवमलंचक्रुरित्यन्वयः कीदृश्यः, अहमहमिकया·इयमहमेनामलंकरोम्येवा·अहमेवैनामलंकरोमि न त्वमित्येवंरूपया सत्वरं भूषयितुं त्वरायुक्तं हृन्मनो यासां ताः । “अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकार” इत्यमरः ॥ ९६ ॥

किंच

नमुखीं वार्षभानवीमभितोऽभितोषवशंवदा वदाग्रणीर्यद्यवतस्थे तदा वृन्दाभ्यभाषत ॥ १०० ॥

सा मातङ्गी भूयसा· आदरेण दरेण संकोचेन च यद्यवतस्थे । वदाग्रणीर्वदानां वाग्मिनीनां श्रेष्ठापि ॥ १०० ॥

श्रूयतामयि गुणमयि गुणकृतावधाना वधानाशु विस्रम्भम् ॥ १०१ ॥

गुणे गानशिल्पमये कृतम्· अवधानं यया तथा भूता सती· आशु विस्रम्भं विश्वासं वधान, कुर्वित्यर्थः ॥ १०१ ॥

इयं मातङ्गी नाम संगीतनिगमगमकचातुरीतुरीयाचार्या चार्यायास्तत्रभवत्या भवत्यानन्दादायिनि वसन्तोत्सवकौतुके के तु के न रज्यन्तीति कृत्वा संगीतसामग्रीमग्रीयामादाय भवतीमुपरञ्जयितुमागता ॥ १०२ ॥

संगीतस्य तन्निगमस्य गमकानां च, यद्वा संगीतस्य निगमनं यतस्तेषां गमकानां या चातुरी तया तुरीया चतुर्थी, मुख्यामुख्यतरामुख्यतमातोऽप्यतिश्रेष्ठा· इत्यर्थः । आचार्या च किंनरीणाम्, अध्यापिका चेत्यर्थः । आर्यायाः पूज्यायास्तत्रभवत्या वसन्तोत्सवकौतुके भवति· उत्पद्यमाने । अग्रीयां श्रेष्ठाम् ॥ १०२ ॥

इमाश्चास्याः सहचर्यो विविधवीणाप्रवीणाः प्रवरगुणभाजः ।

अयं तु ।

केशौघे विरचितशेखरः शिखण्डैः
पुष्णानः परभृतमामकोरकेण ।
श्यामलः प्रकृतित एव मेघनीलः
स्त्रीवेशस्तव निकटे वसन्तरागः ॥ १०३ ॥

परभृतं कोकिलम् ॥ १०३ ॥

अथ तं प्रति प्रतिपन्नकौतुका कृष्णाकारतयारतया दिदृक्षयाक्षयानन्दा सरसमृजुनापाङ्गेनैव किंचिद्वीक्षयामास यदि वार्षभानवी ॥ १०४ ॥

आरतयेति दिदृक्षयेत्यस्य विशेषणम् ॥ १०४ ॥

नवीनपरिगृहीतनारीवेषः स च वसन्तरागोऽन्तरागोचरं कमपि कृतार्थभावमात्मनो मन्यते स्म ॥ १०५ ॥

अन्तरागोचरम्· अन्तःकरणानामप्यविषयम् ॥ १०५ ॥

सा च मातङ्गी मातङ्गीव ललितगतिराह १०६ ॥

ललिता गतिः पादन्यासः संगीतविन्यासभेदश्च यस्याः सा ॥ १०६ ॥

अवधेहि वधेऽहिभोगस्य कुतुकिनः कृष्णस्य दयितेऽयि ते चरणपरिचरणपरिचयाय समुपससाद ।

सरिगमपधनीनां मण्डलीयं स्वराणां
तव चरणसमीपे योषिदाकारचारुः ।
श्रुतिपरिषदपीयं विंशतिर्योद्वियुक्ता
नहि दधति विभक्तिं किंनरीणां च कण्ठे ॥ १०७ ॥

हे कृष्णस्य दयिते प्रिये राधे । तस्य कीदृशस्य अहिभोगस्य कालियनागफणस्य वधे नाट्यमिषेण हिंसने कुतुकिनः, "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो" रित्यमरः, तेन तद्दयितात्वात् तवापि नात्यल्पता महतीति भावः । अयि· इति संबोधने । ते तव· इयं स्वराणां मण्डली समुपससाद, तथा· इयं श्रुतिपरिषदपि, या द्वियुक्ता विंशतिः श्रुतयः किंनरीणां च किंनरीणामपि कण्ठे विभक्तिं विभागं न दधति, न प्राप्नुवन्तीत्यर्थः ॥ १०७ ॥

तदा तदाकलय्य रसवशतो विशतो विचित्रभावे मनसो मुदर्थमुदर्थचमत्कारं किमपि ललिता ललितातरमभाषत ॥ १०८ ॥

मनसो मुदर्थमानन्दार्थम् । कीदृशस्य, चित्रभावे विशतः प्रविशतः । उदर्थः· उत्कृष्टप्रयोजनकः· चमत्कारो यत्र तद्यथा स्यात् तथा ॥ १०८ ॥

अयि संगीतदेवि किं न रराज किंनरराजवधूगणः कण्ठेन श्रुतीर्विभाजयितुम् ॥ १०९ ॥

किंनरराजस्य वधूगणः कण्ठेन श्रुतीर्विभाजयितुं किं कथं न रराज न राजते स्म, न समर्थ इत्यर्थः, तेन स्वेषां तत्सामर्थ्यं द्योतितम् ॥ १०९ ॥

तां प्रति प्रतिजगाद मातङ्गी अयि ।

"कफादिदूषिते कण्ठे तासां व्यक्तिर्न जायते ।

अतो वीणाद्वयं वक्ष्ये चलं चाचलमेव च ॥

इति । हे परमे परमेष्ठिनैव चलाचलवीणे कृते, चलवीणायां द्वाविंशतिरेव श्रुतयो निबद्धाः, अचलवीणायां सप्तैव स्वराः ॥ ११० ॥

तासां श्रुतीनाम् ॥ ११० ॥

किंबहुना पश्यन्तु श्यन्तु च संदेहं सर्वोपरीक्षया परीक्षया· एता एताकाराश्चतस्रः खचस्य षड्जस्य श्रुतयः सुश्रुतयः सुदुर्विभाव्याः कण्ठस्य ॥ १११ ॥

पश्यन्तु तत्रभवत्यः सर्वासां श्रुतीनाम्· उपरि· अपे· ईक्षया दृष्ट्वा एताश्चतस्रः षड्जस्य श्रुतयः संदेहं श्यन्तु तिरयन्तु । कीदृश्यः, एताकाराः शबलवर्णाः, "शबलैताश्च कर्बुरे" इत्यमरः सुश्रुतयः सुश्रव्याः ॥ १११ ॥

इति चतुःश्रुतिभास्वरं स्वरं षड्जमालपन्त्यां तत्र तदध्वनि ध्वनिता सा षड्जस्य वनिताकारा तनुरतनुरम्या स्वयमेव ॥ ११२ ॥

अस्य· एता इत्यङ्गुल्या· एव तं तास्च दर्शयित्वा· आलपन्त्यां सत्यां तत्रालापे तदध्वनि कण्ठवर्त्मनि षड्जस्य तनुः स्वरूपं स्वयमेव ध्वनिता, निजलक्षणोपलब्धेः सापि ध्वनति स्मेत्यर्थः । वनिताकारा स्त्री रूपा योषिदाकारत्वान्मरिन्युपक्रान्तत्वात् ॥ ११२ ॥

तस्य चतसृणां श्रुतीनां स्वस्वभागं भागं कण्ठेन विधातुं धातुं च समारब्धवत्यां सत्यां सविशेषं नैकापि तासां तनुः संवादवती बभूव ॥ ११३ ॥

ततश्च तस्य षड्जस्य चतसृणां श्रुतीनां स्वं स्वं भागं कण्ठेनैव भागं भावुकं विधातुं कर्तुं धातुं च सम्यगारब्धवत्यां सत्यां तासां श्रुती-

नाम्· एकापि तनुः· एकमपि स्वरूपं सविशेषं यथा स्यात् तथा न संवादवती बभूव, निजलक्षणानुपलब्ध्येनानुध्वनति स्मेत्यर्थः, तेन कण्ठे स्वरा एव· उत्पद्यन्ते न श्रुतय इति दर्शितम् ॥ ११३ ॥

यदा तु सा संगीतप्रवीणा वीणायां चलायामेव षड्जस्य चतस्रः श्रुतीर्यथार्थविक्रमेण क्रमेण तन्त्रीषु वादयामास तदा दयामासत दाक्षिण्येनैव ताः श्रुतयः श्रुतय इव यतो यथार्थवादिन्य एवासन् ॥ ११४ ॥

दयामासत स्वरूपोपलम्भादनुध्वननेन दयामकुर्वन्नित्यर्थः। "ऋषयः सत्रमासतेतिवत्। यद्वा दयां प्रति· आसत कर्तुं स्थिता इत्यर्थः। श्रुतय इव वेदा इव। यतः· यां वीणां प्राप्य ॥ ११४ ॥

एवं सति चमत्कारकारणे तस्मिन् संगीतविद्याविनोदे संगीतविद्या विनोदेन कापि राधायाः सहचरी चरीकरीति स्म परिहासमिव ॥ ११५ ॥

संगीतविद्येति कर्तृपदं, विनोदेन विशिष्टनोदेन प्रेरणयेत्यर्थः, संबन्धानुक्तिः प्रेरणस्यान्यालक्षितत्वबोधिका, परीहासमिति सौहार्दसूचनार्थम्, इवेति पराभवदाने तात्पर्यात् ॥ ११५ ॥

अयि संगीतदेवते तदेतत्ते परमकौशलं यदयमेकः स्वरो विकस्वरोऽविकलश्चतुर्धा विभज्य तन्त्रीषु विशकलितः कलितः, नैकापि श्रुतिर्निषादस्पर्शिनी न कापि ऋषभस्पर्शिनी ॥ ११६ ॥

एकः स्वरः षड्जाख्यः। चतुर्धेति, चतसृणां श्रुतीनां प्रत्येकं योगात्। विशकलितोऽखण्डितः। कलितो निर्दिष्ट उद्गीतो वा ॥ ११६ ॥

किंतु स्वरपरिचयः स्वरपरिचयवतां दुर्लभ एव ॥ ११७ ॥

स्वराणां परिचयः। स्वः स्वर्गे अपरिचयवतां मर्त्यानामित्यर्थः। अत्र षष्ठी स्वरसंबन्धापेक्षया ॥ ११७ ॥

अपित्वियमस्या वार्षभानव्या नव्या कापि सखी सुललिता ललिता नाम कण्ठेनैव विभाजयितुं समर्था भवति, भवति चेत् कुतुकं तदादिश दिशत्वसौ दर्शयतु स्वकौशलस्य लक्ष्यमाणतायाः ॥ ११८ ॥

तदा· आदिश· आज्ञापय, स्वकौशलस्य या लक्ष्यमाणता तस्या दिशम्· असौ ललिता दर्शयतु । आदिशेति गौरवप्रदानं स्वेषां शालीनताव्यञ्जनाय ॥ ११८ ॥

कस्य स्वरस्य काः श्रुतय इत्यपरिचितानामपि चितानामपि चैकत्र सर्वासामासामासाधारण्येनैव द्वाविंशतिक एव गणः परिचाययितुं शक्यः कण्ठोन्नीतश्रुतिप्रतिश्रुतिप्रतिपत्त्येति, एवं सति वनदेवतास्तामूचुः, अयि संगीतविद्ये संगीतविद्येयमनया देव्या चतुर्मुखमुखनिर्गतैव व्याख्याता ख्याता चेयं वो विरञ्चिप्रपञ्चत एव हि वहिरिति तदुभयमेव निरवद्यम् ॥ ११६ ॥

सैव कीदृशी द्विगित्यपेक्षायामाह· एकत्र स्वरे चितानां छन्नानामप्यासां श्रुतीनाम्· आसाधारण्येनैव असाधारणानां भाव आसाधारण्यं तेनैव ॥ ११९ ॥

अथ मातङ्गीस्तोभजनितबाधा राधारालीकृतचिल्लीलता चिल्लीलतापरमा परमाप यदि खेदं तदा स्वयमुवाच वाचमयथामतिके संगीतविद्ये भवती निजगाद यदशक्यं देवतानां तानांशकरणं श्रुतीनां श्रुतीनां भिन्नार्थकरणमिति तत् किं मानवानां नवानां प्रयत्नसाध्यम् ॥ १२० ॥

मातङ्ग्या स्तोभेन मानदम्याभाव्यात् कारणेन जनिता बाधा पीडा यस्याः सा । स्वमर्थां संगीतविद्यां प्रति· अरालीकृता कुटिलीकृता चिल्लीलता यया सा । चिल्लीलता चिल्मयलीलत्वं तेन परमा, सर्वसुखदेत्यर्थः । हे· अयथामतिके मिथ्याबुद्धिके देवतानामपि यदशक्यम् । श्रुतीनां तानैः कण्ठे तापरिवांशकरणं भागकरणम् ॥ १२० ॥

तदलीकवादिनि विरम रमयापि नैतत् कर्तुं शक्यते किं पुनर्ललितया, तदपि दयितसंगीते संगीतेन तोषयितुमर्हति तत्रभवती भवती स्वाधीनवनदेवतावृन्दां वृन्दाम् ॥ १२१ ॥

दयितं संगीतं यस्या हे तथाभूते मातङ्गि तव संगीतं ममातिरोचकमिति संमानप्रयोजनको भावः १२१ ॥

वृन्दाह न यावत् श्रीकृष्णो नवसन्तं वसन्तं गायन्निह विहरति रतिमान् न तावद्वसन्तो गेयस्तदपरोऽपरोचीक्रियतां रागो रागोदयेनेति रसाब्धिवेलावली वेलावलीरागो गातुमारभ्यत तयाततया कौतुकेन केनचिदेव देवतया मातङ्ग्या ॥ १२२ ॥

नवश्चासौ संश्चेति स तथा तं रसाब्धेर्वेलावली जलराशितुल्यः, "वेला स्यात् तीरनीरयो"रित्यमरः, वेलावलीरागो बिलावल इति पाश्चात्येषु ख्यातः, तया मातङ्ग्या गातुम् आरभ्यत । कीदृश्या, केनचिदेव कौतुकेन आततया परिपूर्णया ॥ १२२ ॥

तदनु तदनुगानकारिणीनां गणो विपञ्चीपञ्चीभूतासु महतीमहतीव्रकविलासिकालासिकान्ताकच्छपीकच्छपीवरस्वरमण्डलिकासु वीणासु प्रवीणासु प्रपञ्चयामास रञ्जितश्रुति श्रुतिजातं पञ्चविधमप्येकमिव ॥ १२३ ॥

तदनु तदनन्तरं तस्या मातङ्ग्या अनुगानकारिणीनां गणो विपञ्च्या पञ्चीभूतासु विस्तृतीभूतासु महत्यादिषु वीणासु वीणापार्श्वप्रख्यात पञ्चविधमपि श्रुतिजातम् एकमिव प्रपञ्चयामास । रञ्जिते श्रुती कर्णौ येन तद्यथा स्यात् तथा । महतीमहे च उत्सवे तीव्रा कविलासिका च लासिनी कान्ता कच्छपी च कच्छः पीवरो यस्याः सा स्वरमण्डलिका च तास्तथा तासु ॥ १२३ ॥

तासां तथाविधस्वरसमुत्कण्ठकण्ठतन्त्रीसमुद्गतो मुद्गतोत्कर्षकारी का रीतीः प्रमोदस्य न जनयामास स किल निनादः ॥ १२४ ॥

स निनादः प्रमोदस्य आनन्दस्य का रीतीर्न जनयामास, अपितु सर्वा एव । कीदृशः, तथाविधे स्वरे सम्यगुत्कण्ठा यस्य स कण्ठश्च तन्त्री च ताभ्यां समुद्गतः समुत्थितः । मुद्गतमानन्दनिष्ठमुत्कर्षं कर्तुं शीलमस्य सः ॥ १२४ ॥

एवं च तत्रावहितासु हि तासु राधाप्रभृतिषु वृन्दादिषु वनदेवतासु तासु च दूरादेव देवलोकस्य चमत्कारी कश्चन ॥ १२५ ॥

तत्र निनादे अवहितासु कृतावधानासु ॥ १२५ ॥

वीणावेणुमृदङ्गकांस्यपणवैः प्रत्येकसंदर्शना-
देव व्यक्ततमैः समानमुखरैरुद्भ्रान्त एकः स्वनः ।
आमोदी समभागपिष्ट इव नो भेदक्षमः कर्णयोः
सर्वाङ्गीणकयक्षकर्दम इवानन्दैककन्दोऽभवत् ॥ १२६ ॥

वीणादिभिर्मिलित्वा एक एव स्वनः आनन्दैककन्दः सुखैकमूलोऽभवत् । कीदृशैः, प्रत्येकम् इयं वीणा अयं वेणुरयं मृदङ्ग इत्येवं दर्शनादेव व्यक्ततमैः, श्रवणात् तु विभक्तुमशक्यैरित्यर्थः । आमोदी व्यापकः । सर्वाङ्गीणं सर्वाङ्गकसुखं यतस्तादृशो यक्षकर्दम इव "तत् सर्वादे" रित्यादिना खः ॥

'कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा ।
महासुगन्धिरित्युक्तो नामतो यक्षकर्दम"
इति धन्वन्तरिः ॥ १२६ ॥

तन्निशमनेन शमनेन कर्णयोः कलयता लयतालादियुतेऽपि मातङ्गीसंगीतरसेऽपि ताः सावहेला हेलालोलमानसा मुग्धा इव समुत्कर्णाः कर्णायतलोचना लोचनाञ्चलचञ्चलचटुलतया परितः परिपश्यन्ति स्म ॥ १२७ ॥

तन्निशमनेन तच्छ्रवणेन हेतुना । कीदृशेन, कर्णयोः शं सुखम् अनेन स्वनेन कलयता कुर्वता । सावहेलाः सावज्ञाः । हेला भावविशे-

घस्तया लोलमानसाः । लोचनाञ्चलानां चञ्चलचटुलतया, चञ्चलतया चटुलतया चेत्यर्थः, "चटुलः सुन्दरे चले" इति धरणिः ॥ १२७ ॥

ततस्तत्रैवाध्वनि ध्वनितेन वसन्तरागेणान्तरागेणायमपि मूर्तो योषिदाकारतो रतो वसन्तरागो ध्वनति स्म ॥ १२८ ॥

अन्तरागेण तन्मध्यगेन ॥ १२८ ॥

ततश्च तेनानुमातामितानन्दनन्दकिशोरवसन्तोत्सवागममनमनुभूतभूतलप्रमोदं निर्णीय वनदेवतानिभाल्यभाल्यवगाढगाढमाधुर्यधुर्यतनवो नवोल्लासेनारादालोक्य कृष्णां निर्वर्णयन्ति स्म ॥ १२९ ॥

न॰ अनुभूतो भूतले प्रमोदो यस्य तत् । वनदेवताभिरेव निभाल्या निभालयितुं शक्या या भाली शोभाश्रेणी तया॰ अवगाढं कृतावगाढं गाढं निविडं यन्माधुर्यं तस्य धुर्यास्तनवो यासां ताः ॥ १२९ ॥

अयि वार्षभानवि न विना कृष्णोत्सवेनैतादृशो दृशोरानन्दः संपद्यतेऽद्य ते स एव हृदयाधीशो धीशोभिनाभिनायकेन केनचिदानन्दगुरुणा गुरुणा सुरभिकालागमेन संपादितसमुल्लासो मुल्लासोचितवेषभूषः समधुमदमदनः सह सहचरगणेन भगणेन भगवानिन्दुरिव संपाद्यमानवसन्तोत्सवः ॥ १३० ॥

अद्य ते तव स एव हृदयाधीशः । कीदृशः, सुरभिकालागमेन संपादितसम्यगुल्लासः । तेन कीदृशेन, धियं शोभयितुं शीलं यस्य तेन अभिनायकेन॰अभिनयकर्त्रा, विदग्धनटेनेत्यर्थः । आनन्द एव गुरुरुपाध्यायस्तेन सह वर्तमानेनेत्यर्थः स्वयमपि गुरुणा श्रेष्ठेन । मुल्लास॰ आनन्दप्रकाशस्तदुचितवेषभूषः । मधुना वसन्तेन मदो यस्य स चासौ मदनश्चेति तेन सह वर्तमानः । भगवान् श्रीयुक्तः, "भगं श्रीकाममाहात्म्य" त्यमरः ॥ १३० ॥

सबहुतरखेलनसामग्रीकमग्रीकरणायेव परमाप्रमोदस्य सुसज्जोऽसुसज्जोषाय योषाणामयमयमुज्जिहीते हो ते सौभाग्यसंपदो महिमा हि मादृशा किं वर्णनीयः ॥ १३१ ॥

सबहुतरेति क्रियाविशेषणम् । परमप्रमोदस्य· अर्थीकरणाय प्रधानीकरणार्थम् । तेनापि किं फलमत आह, योषाणां स्त्रीणाम्· असुभिः प्राणैः मज्जीवं उत्तमा सेवा तदर्थम् । योषाः स्वप्राणानपि प्रदाय मां सेवन्तामित्येवमर्थमित्यर्थः । अयमयमिति हर्षेण द्वित्वम् । ही विस्मये । ते तव ॥ १३१ ॥

पश्य पश्य ।

एकेनैव शिखण्डकेन चलता रोलम्बसंभाषिणा
पुंनागस्तबकेन चारुणरजःपूरेण चालंकृतम् ।
तिर्यङ्न्यासविशेषशोभमलिकप्रान्तावलम्बालसं
शुभ्रोष्णीषमनीषदुज्ज्वलमतिश्लक्ष्णं शिरस्यादधत् ॥ १३२ ॥

रोलम्बसंभाषिणा भ्रमरझङ्कारवता । अनीषदुज्ज्वलमिति, अग्रभागेऽरुणचूर्णधूसरितत्वात् ॥ १३२ ॥

किंच ।

बल्गद्वल्गुमणीन्द्रकुण्डलधुरा दीर्घीकृतच्छिद्रयो-
र्बिभ्रत् तत्क्षणभुग्नचूतमुकुलं श्रीकर्णयोरेकतः ।
गण्डे तत्प्रतिबिम्बभाजि मधुरां कांचित् त्विषो मञ्जरीं
ग्रीवासीम्नि विलासबद्धचिकुरस्तोमेऽतिमुक्तस्रजम् ॥ १३३ ॥

चूतमुकुलमित्यश्लीलत्वमक्षरपरिवृत्त्या पाठात् सोढव्यम्, "मुकुलितपुन्नागचूते," "मुकुलप्रसूतिश्चूतानां सखि शिखरिणीय"मित्यादिमहाकविप्रयोगात् । अतिमुक्तस्रजं माधवीपुष्पमालाम् ॥ १३३ ॥

किंच ।

लीलाङ्गीकृतपीतकञ्चुकपरिप्रोदञ्चितालंकृति-
रुच्चुत्काञ्चितटीनटीं मणिमयीं कर्पूरधानीं दधत् ।

दोलत्सारसनाग्रचुम्बनलसज्जङ्घातलः किङ्किणी-
रत्नोद्यच्छुटिकः* पदाम्बुजलसच्छिञ्जानमञ्जीरकः ॥ १३४ ॥

चञ्चन्त्यां काञ्चितत्व्यां नटीं चञ्चलाम्। दोलता सारसनस्याग्रेण लम्बमानपट्टसूत्रस्तबकेन चुम्बनाल्लसत् विराजमानं जङ्घातलं यस्य सः ॥ १३४

अपिच।

वेणुं वामकरेण दक्षिणकरेणान्दोलयन् कन्दुकं
सैन्दूरं न विदूरयन् वदनतो रागं वसन्ताभिधम्।
उद्गीते सुबलादिभिः प्रियसखैः श्रीमूर्धनिर्धूननने
नास्वादं प्रथयन् मदालसलसद्घूर्णायमानेक्षणः ॥ १३५ ॥

सैन्दूरमरुणचूर्णकल्पितम्, "सिन्दूरं रक्तचूर्णके" इति मेदिनी ॥ १३५ ॥

पार्श्वद्वये प्रियसखद्वयदीयमानं
ताम्बूलिकादलपुटं पुरटप्रकाशि।
स्निग्धेन शोणरदनच्छदनद्वयेन
लीलाक्रमादुभयतः कुतुकेन गृह्णन् ॥ १३६ ॥

पुरटप्रकाशि कनकवत् प्रकाशधारि ॥ १३६ ॥

परंच।

उद्धूनितैस्तत इतः पटवासपूरै-
र्बालारुणाकृतिभिरुद्भटगन्धवद्भिः।
अत्यन्तलाघवतया नभसि भ्रमद्भि-
रप्राप्तमौलितिलकालकपद्मलक्ष्मीः ॥ १३७ ॥

पटवासपूरैर्वसन्तखेलाचूर्णपटलैः, बालारुणाकृतिभिः उदितसूर्यवद्वर्णैः। अत्यन्तं लाघवं येषां तेषां भावस्तत्ता तया ॥ १३७ ॥

*—त्पदिकः, इति पा०।

अपिच ।

गायन्तो मृदुचर्चरीं द्विपदिकां ग्रामैस्त्रिभिः सप्तभि
र्निर्मिश्रश्रुतिभिः स्वरैरुपचिते रागे वसन्ताभिधे ।
अन्योन्यं कुतुकेन केनचिदमी घ्नन्तो मुहुः कन्दुकैः
सैन्दूरैरभितोऽभितः सहचराः खेलन्ति नृत्यन्ति च ॥ १३८ ॥

त्रिभिर्ग्रामैः षड्जमध्यमगान्धाराख्यैः । निर्मिश्राः श्रुतयः प्रत्येकमेव येषां तैः स्वरैः सरिगमपधनिभिः ॥ १३८ ॥

तदाकलितं ललितं लसत्तरमेतदतिरुचिरं रुचिकरं जातमचेतनानामपि यदिमं विलासलालसं लसन्तमालोक्य वनलता अप्यनेकविधं भावमाविष्कुर्वन्ति ॥ १३६ ॥

तत् गानमाकलितं श्रुतं सत् अचेतनानामपि रुचिकरं जातम् ॥ १३९ ॥

पश्यत पश्यत ।

आमन्दचन्दनसमीरगुरूपदेशात्
प्रत्यग्रपल्लवकराभिनयं दधत्यः ।
गीतेन भृङ्गमिथुनप्रकरस्य वल्ल्यः
कृष्णावलोकनमुदा सरसं नटन्ति ॥ १४० ॥

कृष्णावलोकनमुदा कृष्णकर्तृकावलोकनेन मुद्-हर्षस्तया- इति कृष्णस्य सभ्यत्वम् ॥ १४० ॥

तत्रैव काचित् ।

संत्रासं नवदलपाणिकम्पितेन
प्रोत्साहं कुसुममयेन सुस्मितेन ।
रोषं च भ्रमरघटाकटाक्षपाते-
रासन्ने मधुमथने करोति वल्ली ॥ १४१ ॥

मधुमथने श्रीकृष्णे स्तबकग्रहणार्थमासन्ने सति काचिद्वल्ली कुट्टमितभाववतीति भावः ॥ १४१ ॥

अन्याचेयम् ।

एकेनानिलचपलेन पत्त्रहस्ते-
नारौत्सीत् स्तवकपयोधरं परेण ।
आक्षेपं न न न न नेति चञ्चलालि-
भ्रूभङ्ग्या व्यधित हरिं विलोक्य वल्ली ॥
एहीत्याह्वयत इवापरेण काचित्
सव्रीडा कुसुममयं स्मितं व्यधत्त ॥ १४२ ॥

स्तवकमेव पयोधरं स्तनम् एकेन वामेन पत्त्ररूपहस्तेन अरौत्सीत् आवृतवती ।

एहीति अपरेण दक्षिणेन पत्त्रहस्तेन कृष्णचाञ्चल्यदृष्ट्या स्वसाहाय्यार्थं काचित् सखीमाह्वयत इव, व्यधत्त तिरोऽधत्त, विहृतनामायं भावः, तल्लक्षणं यथा, "ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितम् । व्यज्यते चेष्टयैवेदं विहृतं तद् विदुर्बुधाः । इति ॥ १४२ ॥

तदत्र सचेतनानां क्व नाम धीरता धीररतास्तु ॥ १४३ ॥

धीरता धैर्यं, धिया बुद्ध्या रता संसक्ता क्वास्तु, न क्वापीत्यर्थः ॥ १४३ ॥

तदा तदाकलय्य मन्दमधुरमधुरम्यस्मितमुवाच वृषभानुनन्दिनीङ्गितज्ञा श्यामा श्यामामृतकरादेव ते वनदेवतेऽवनमानन्दस्य तदेतस्यैव खेलनं सुखेऽलनं सुष्ठु क्रियतां किमस्माकमुनम्मनेन, यच्चेत्थमात्थ मान्यथा तद्भवितुमर्हति ॥ १४४ ॥

हे वनदेवते वनाधिष्ठात्रि वृन्दे श्यामामृतकरात् श्यामचन्द्रात् श्लेषभङ्ग्या श्यामस्य कृष्णस्य अमृततुल्यहस्तात् ते तवानन्दस्यावनं पालनम्, तत् तस्मात् एतस्यैव खेलनं सुष्ठु क्रियताम् । कीदृशम्, अलनं परिपूरकम्, "अल भूषणपर्याप्त्यादिषु" "नन्द्यादिः" । यत् इत्थम् अन्यथा तत् मा भवितुमर्हति ॥ १४४ ॥

किंतु कौतुकलो भवति भवति हीदृशं कुलजाकुलजातिकृत-हीवाटिकाकवाटिकाकठोरत्वं यदेषा खरतरतथाविधोत्कण्ठाकुठारेणापि छेत्तुं न शक्यते ॥ १४५ ॥

कुलजानां कुलस्य जातिकृता स्वभावसिद्धा या ह्रीवाटिकायाः कवाटिका तस्याः कठोरत्वं हि॰ ईदृशं भवति। यद्यस्मादेषा कवाटिका ॥ १४५ ॥ .

या समीहितमपि हितमपिधत्ते धत्ते च हृद्व्यथां कामपि ॥ १४६ ॥

या हृदो मनसो व्यथां कामपि॰ अनिर्वाच्यां धत्ते धारयति, तथापि हितमपि समीहितं वाञ्छितम्॰ अपिधत्ते॰ आवृणोत्येव, नतु प्रकाशयतीत्यर्थः ॥ १४६ ॥

तेनाधुना साधुनासाधारणेन धैर्येणैव यद्रुयते तदेव निरवद्यमद्यमहोत्सववासरे ॥ १४७ ॥

अद्य तदेव निरवद्यं निर्दूषणम् ॥ १४७ ॥

विशिष्टा शिष्टाचारपरिप्राप्ता रचितदौर्भगापचितिरपचितिरनङ्गस्य विधातव्येति व्येति न मनोरथोऽस्माकम् ॥ १४८ ॥

किंच, अद्य॰ अनङ्गस्य कन्दर्पस्य॰ अपचितिः पूजा विधातव्या॰ इति मनोरथोऽस्माकं व्येति न विगतो भवति। "पूजा नमस्यापचिति"॰ रित्यमरः। कीदृशी, रचिता दौर्भगस्य॰ अपचितिः क्षयो यया सेति प्रयोजनमुक्तम्।

तेन तत्संपादनायानायासलभ्यमानकुसुमचयावचयावसरेण वर्तमाना निरीक्षामहे महेन महितं सकलकलाकलापे हे शुभंयुवरा युवराजं व्रजराजस्य ॥ १४९ ॥

तेन तस्या अपचितेः संपादनाय॰ अनायासेनैव लभ्यमानानां कुसुमचयानाम्॰ अवचयावसरे वर्तमानाः सत्यो वयं व्रजराजस्य युवराजं निरीक्षामहे, हे शुभंयुवराः परमशुभवत्यः ॥ १४९ ॥

सरसमतो रसमतोचितमस्या वचनमाकलय्य पुनरपि वृन्दा वृन्दावनदेवी श्रीराधामुवाच ॥ १५० ॥

अत एतदनन्तरं रसेमतं संमतम्· उचितं योग्यम्· अस्या वचनं सरसं यथा स्यादेवमाकलय्य श्रुत्वा ॥ १५० ॥

भवतु नाम नामरूपाकृतिकृतिनीनां भवतीनामिदमेव सौगील्यं तथापि मातङ्गीगीतसंगीतसहकारा सहकाराटवीमध्यमध्यवस्याय चन्द्रावली बलीयसा महोत्सवानुसारेण कुतूहलहलहलापुरःसरं पुरःसरन्ती त्वदीया च सखी चारुचन्द्रा सुचन्द्राययतु मादृशां दृशां सफलयतु च वसन्तरागस्य स्वरश्रुतीनां मूर्तिमतीं मत्तां च प्रमोदरभसादरभसा मातङ्गीम् ॥ १५१ ॥

नामादिभिः कृतिनीनां योग्यानाम्, "कृती स्यात् पण्डिते योग्ये" इति मेदिनी । तथापि चन्द्रावली त्वदीया च सखी चारुचन्द्रा सहकाराटवी· आम्रवणं तन्मध्यम्· अध्यवस्याय मादृशां दृशां दृष्टीनां सुखं द्राघयतु । कथंभूता, मातङ्ग्या गीतं यत् संगीतं तेन सहकारः सहाया यस्याः सा पुरःसरन्ती· अग्रगामिनी प्रमोदस्य गानानन्दस्य रभसाद् वेगात्· मत्तां मातङ्गीं सफलयतु सार्थकयतु, स्वयं तु· अरभसा साव धानेत्यर्थः ॥ १५१ ॥

इति वनदेवतावचसा च सा सचारुचन्द्रा चन्द्रावली विविधवीणाप्रवीणा प्रकटितवसन्तसंततसंतन्यमानश्रुतिश्रुतिसुखदं गायन्त्या संगीतदेवतया· आद्रियमाणा ॥ १५२ ॥

चारुचन्द्रया सह चन्द्रावली सहकाराटवीं गत्वा यदि वसन्तक्रीडाम्· आरेभे तदा राधा तस्मिन्नेव देशे· अतिमुक्तवाटिकायां विललासेत्यन्वयः । प्रकटिताभिर्वसन्ते संततं संतन्यमानाभिः श्रुतिभिः श्रुतिसुखदं कर्णसुखदायि यथा स्यात् तथा गायन्त्या संगीतदेवतया मातङ्ग्या· आद्रियमाणा ॥ १५२ ॥

कल्पद्रुतो नोद्रुदीर्णमहोत्सवक्रीडनककनककमनीयबालारुणारुणामोदमोदनविलासधूलीधूलीलया मणिखचितसुखचितसुमञ्जुलजलयन्त्रभरनिर्भृतजगुडजगुडकस्तूरिकाघनसारगन्धसारगन्धसारद्रवद्रवणखेलया च ॥ १५३ ॥

कल्पद्रुतः कल्पवृक्षात् द्रुतमेव उद्दीर्णा उद्गता चासौ महोत्सवे क्रीडनं यतः सा च कनककमनीया च कनकोत्तमवर्णा च बालारुणवत् उदितसूर्यवदरुणा च आमोदेन सौगन्ध्येन मोदनी हर्षकरी च या विलासधूली तस्या धूः कम्पनं प्रचलनं तद्रूपया लीलया । मणिभिः खचितं च तत् सुखानां चितं समूहो यत्र तच्च सुमञ्जुलं च यत् जलयन्त्रं तत्र भरेणातिशयेन निर्भृतस्य जगुडजगुडस्य कुङ्कुमगोलकस्य कस्तूरिकाघनसारगन्धसाराणां मृगमदकर्पूरचन्दनानां च ये गन्धेन सारा द्रवास्तेषां द्रवणं क्षेपणवशात् प्रचलनं तद्रूपया खेलया च । "गुडः स्याद्गोलके हस्तिसंनाहेक्षुविकारयो"रिति मेदिनी ॥ १५३ ॥

संगीततालसमं गमनमेव नटयन्तीभिर्नयन्तीभिः प्रमोदस्य परां कोटिं कोटिं च स्वर्वाणिनीनां तिरस्कुर्वतीभिः सहचरीभिः सह सहर्षमारेभे मारेभेन प्रेरिता यदि वसन्तक्रीडाम् ॥ ॥ १५४ ॥

गमनमेव खेलोपयोगि द्रुतमध्यमन्दभेदैः स्वाभाविकं नटयन्तीभिर्नटनं कुर्वतीभिः । संगीततालसमं यथा स्यादिति, तादृशगमनानुसारेणैवोचिततालप्रयोगं तदनुकूलमेव संगीतं च कुर्वतीभिरित्यर्थः । अत एवातिवैषम्येऽप्यतिकौशलात् स्वर्वाणिनीनां स्वर्गनर्तकीनां कोटिमपि तिरस्कुर्वतीभिः । "वाणिन्यौ नर्तकीमत्ते" इत्यमरः ॥ १५४ ॥

तदा सरसमधुमधुरस्मितं विस्मितं विरचय्य मनो मनोज्ञचरिता श्रीराधा च कियतीभिः सखीभिरुभयतोऽभयतोपतो विलोकयन्ती कृतकुसुमावचयव्यपदेशे देशे तस्मिन्नेव विललास १५५ ॥

मनो विस्मितं विस्मययुक्तं विरचय्य कृत्वा उभयतः श्रीकृष्णस्य

गानादिक्रमेकतश्चन्द्रावल्याश्चान्यतो विलोकयन्ती । अभयं त्रिजातीयद्रु-प्रवेशवनमध्यस्थत्वान्निःशङ्कत्वं तच्च तोष आनन्दश्च ताभ्याम्॥ १५५ ॥

एवं सति तं देशमेव खेलनानुक्रमेण क्रमेण समनुसरत्सु सर-त्सुखसंदोहदोहनपरेषु व्रजराजयुवराजयुवसहचरेषु पुरःसरेण बटुना-बटुनाटितरम्यहारेण कौतुकारोहसमानेन हसमानेन दिशि विदिशि वितीर्णनयनेन ॥ १५६ ॥

क्रमेण चरणविन्यासेन, "क्रमः शक्तौ परीपाट्यां क्रमं चलनकम्प-योः"रिति विश्वः, सरतां प्रसरतां सुखसमूहानां दोहनपरेषु प्रपूरकेषु सत्सु, पुरःसरेण सता कुसुमासवेन बटुना कोऽपि नादः शुश्रुवे । कथंभूतेन, अवटौ घाटायां नाटितः भण्डनृत्यभङ्ग्या स्कन्धग्रीवोच्चाल-नेन नर्तितो रम्यहारो येन तेन । कौतुकस्य आरोहेण हेतुना समानेन सगर्वेण ॥ १५६ ॥

दूरत एव महोत्सवप्रवृत्तचारुचन्द्राचन्द्रावलीप्रभृतिकलसंगीत-सङ्गी तरलतरललितवलयलयप्रियंकरकरतालिकालिकान्तः सकलक-लाकलापविदग्धमुग्धमुरजमृदङ्गवीणासंवादिवादित्रविलासिकालासिका-चरणसंचरणसंचलन्मणिमञ्जीरनिक्वणसनाथः कोऽपि नादः शुश्रुवे ॥ १५७ ॥

नादः कथंभूतः, तरलतराणां ललितवलयानां लयेन परस्परं संश्लेषेण प्रियंकराभिः करतालिकाश्रेणिभिः कान्तो रम्यः । सकलानां समस्तानां कलानां कलापे समूहे विदग्धाश्च ताः मुग्धानां मनोह-राणां मुरजादीनां संवादित्वं संमेलकं यद्वादित्रं वाद्यं तत्र विलासिका-श्चेति ताश्च लासिका नर्तक्यश्च तासां द्वयीषां चरणसंचरणैः सम्यक् तालानुसारेण चलतां मणिमञ्जीराणां निक्वणेन सनाथः ॥ १५८ ॥

* परसवर्णः प्राग्वत् ।

श्रुत्वा च त्वाचमुद्धर्षमभिनीय समुत्कः समुत्कः प्रियवयस्यं श्रीकृष्णमुवाच ॥ १५८ ॥

त्वाचं त्वग्भवं रोमाञ्चरूपमित्यर्थः । समुत्कः द्रष्टुं समुत्कण्ठः समुत्कः सहर्षः ॥ १५८ ॥

प्रियवयस्य किमयमयतेऽस्माकमेव संप्रति प्रतिश्रुति श्रुतिनिकरोऽतिनिकरोति वा कोऽप्यपरोऽपरोक्ष एव केषांचन महोत्सवसङ्गी संगीतककलकलः ॥ १५६ ॥

प्रतिश्रुति प्रतिकर्णम्· अस्माकमेव संगीतस्य श्रुतिनिकरः श्रुतिसमूहः· अयते प्रत्यागच्छति कोऽप्यपरो वा· अपरोक्षः प्रत्यक्ष एव सन्· अतिनिकरोति, अस्मन्महोत्सवकालमतिक्रम्य तिरस्करोतीत्यर्थः, "निकरः स्यात् परिभव" इति धरणिः ॥ १५९ ॥

तदवगन्तुमर्हमर्हतमैरेतदिति निगदितेन तेन किशोरवरमुकुटमणिना मणिनानालंकारधारिणा स पुनरयमवादि ॥ १६० ॥

तत् तस्मात्· एतत्· अस्मद्गतिक्रामकं गीतम्· अवगन्तुं ज्ञातुम्· अर्हतमैरस्माभिरर्हम्· उचितम् ॥ १६० ॥

वादित्रध्वनिरयमन्यदीय एव तन्निभालय भालय कुतोऽद्यातोद्यान्तरध्वनिरयं रयं रयं गतः ॥ १६१ ॥

हे भालय कान्त्यालय कुतः स्थानादद्य· अयम्· आतोद्यान्तरध्वनिर्वाद्यान्तरशब्दः रयं रयं गतः· वेगयुक्तं लयं साम्यं प्राप्तः । "लयस्तु त्रिविधः प्रोक्तो द्रुतो मध्यो विलम्बित" इति गीतप्रकाशः ॥ १६१ ॥

इति निगदितेन वटुनातिपटुनातिपरमोल्लासेन सत्वरमुपगम्यातिरमणीया रमणं मणीसभासभाजिता जिताब्धितनया नयाजंवजवाजवारुणकरचरणपल्लवायमवधूत्य माधवीकुसुममवचिन्वती न्वतीन्द्रिया भुवनमवतीर्णा वसन्तलक्ष्मीरिव प्रथमतो वार्षभानवी ददृशे ॥ १६२॥

इति निगदितेन वटुना सत्वरमुपगम्य वार्षभानवी दद्दृशे । सभाजिता स्तुता, जिताब्धितनया सौन्दर्येण विजितलक्ष्मीका, नवस्य नीरिराजीवस्य ऋजुत्वस्य नवो वेगो यस्यां सा, अतीन्द्रिया· अमूर्तापि वमन्तलक्ष्मीर्भुवनमवतीर्णा, मूर्तिमतीवेत्यर्थः ॥ १६२ ॥

तदव्यवहिता हिताचरणशालिनी ललिता ललिताकारा श्यामा च तददूरे महामहानन्दपरवशाश्चारुचन्द्रा चन्द्रावलीप्रभृतयश्च ॥१६३॥

तददूरे सहकारवाटिकायां चन्द्रावलीप्रभृतयश्च दद्दृशिरे· इति वचनविपरिणामेनानुषङ्गः ॥ १६३ ॥

दृष्ट्वा च स तरसाह साहसिके ललिते किमितिमितिमदेनोऽन्वतिमदेनोऽन्वतिविधीयते ॥ १६४ ॥

स कुसुमासव आह हे ललिते किं किमर्थम्· इतिमितिना· एतत्परिमाणकेन मदेन गर्वेण· उन्नतिमत्· आधिक्ययुक्तम्· एनोऽपराधः· अनु सह· अतिविधीयते· अतिशयेन क्रियते, "अनु लीने सहार्थे" इति विश्वः । अत्र तिमदेनो तिमदेनो· इति चतुर्भिर्वर्णैरेकवर्णव्यवधानेन यमकं ज्ञेयम् ॥ १६४

यदद्य नववसन्तमहे महेच्छस्य मम वयस्यस्य वयस्यस्य नवातिमुक्तस्य कुसुमं न केनापि गृहीतं ह्री तं तस्यातिप्रियमतिमुक्तं मुक्तं पल्लवैः कुसुमैरपि कुर्वन्ति भवत्यो दर्पवत्यो दर्पकदर्पकलाहारिण्यो न जानीथ मद्वयस्यस्य भुजभुजगभोगदर्पं तदिदानीमेव ज्ञास्यथ ॥१६५॥

मम वयस्यस्य तस्य तं प्रसिद्धमतिमुक्तं पल्लवैः कुसुमैरपि मुक्तं रहितं भवत्यः कुर्वन्ति, ह्रीं विस्मये, अस्य नवातिमुक्तस्य वयसि केनापि कुसुमं न गृहीतम्, नवातिमुक्तस्येति, नवत्वादतिशयेनैव पुष्पानवचयादस्माभिरपि त्यक्तस्येति श्लेषार्थः, दर्पकस्य कन्दर्पस्यापि दर्पकलाहारिणः ॥ १६६ ॥

तदहमितो गत्वा निवेदयामीति सत्वरं श्रीकृष्णमुपसृत्य वयस्य संप्रति प्रतिपन्नः किल वसन्तमहो महोदयस्य भवतः ॥

यतः ।

वसन्तलक्ष्मीः स्वयमेव मूर्ता
विभूतिभिः स्वाभिरिवाङ्गनाभिः ।
इतो न दूरे विविधैर्विलासै-
र्मूर्ते वसन्तोत्सवमातनोति ॥

तथाहि ।

आतोद्यं क्वानुमोद्यं भवतु भुवि तया सा च संगीतभङ्गी
स्वःसंगीतोद्धुराणामपि नहि विषयः कोऽपरस्तां तनोतु ।
सामग्री या च या चोत्सवरभसविधेर्नास्ति सा ब्रह्मशिल्पे-
ऽनल्पे कल्पेत लोकः कथमहह महत् कौतुकं दृष्टमासीत् ॥ १६० ॥

तां संगीतभङ्गीम् । अनल्पे प्रचुरेऽपि ब्रह्मशिल्पे सा सामग्री नास्ति । अतस्तत्र लोकः कथं कल्पेत, तां संपादयितुं कथं समर्थः स्यादित्यर्थः ॥ १६० ॥

तव तु व्रजराजकुमारस्य मा रस्यतमा तादृशी महती महतीव्रता ॥ १६८ ॥

तव तु महस्यः उत्सवस्य तीव्रता मा तादृशी रस्यतमा ॥ १६८ ॥

सखाय ऊचुरयि कुसुमासव मा सबहुमानं परपक्षं स्तुहि वस्तु हि बहुमतं स्वमतमेव तत् त्वमधुना मधुना मनोऽसि ॥ १६९ ॥

सबहुमानं यथा स्यात् तथा परपक्षं मा स्तुहि, मधुना माध्वीकेन फलप्राद्रुमसत्त्वेन नर्मभङ्ग्या मद्येन च ॥ १६९ ॥

स ऊचे नहि कुसुमासवः स्वयं माद्यति मादयत्येव सर्वान्. तथापि नाहं सुकुसुमासवो यं पीत्वैव माद्यन्ति मम तु शब्देनैव सर्वे मत्ता भवन्ति ॥ १७० ॥

कुसुमस्यासवो मधु, मम शब्देनैवेति, वाङ्मात्रेणैव युष्मान्दूराद् भ्रामयितुं शक्नोमीति भावः ॥ १०० ॥

श्रीकृष्ण आह साधु वयस्य साधु, साधुना महोत्सवस्यान्तो पुनरपि चाद्योभवता भवता द्रष्टुमर्हो पश्चादस्माभिश्च ॥ १०१ ॥

साधुना भवता ॥ १०१ ॥

इति तेन सरसमुदितो मुदितो वटुः पुनरसक्तो रसकौतुकी तं देशमासाद्य साटोपं दुर्ललिते ललितेऽपसर सरसीरुहाननि देशतो। देशतो हि तावदस्मादस्माकमतिमुक्तकुसुमं मापहर हरसि चेत् प्रतिफलं लप्स्यसे। साह साहसिक वटो कपटपटो जल्पन्निदमवद्यावद्यसि किमिति निजसौजन्यम् ॥ १०२ ॥

हे वटो कपटपटो इति, कपटपाटवेनैव त्वया वटुत्वं साधितमिति भावः तेन तुभ्यं गालिप्रदानमपि नानुचितमिति द्योतितम् इदमवद्यं निन्द्यं जल्पन् निजसौजन्यं किमिति· अवद्यसि खण्डयसि,स्वदौर्जन्यमेवास्मन्मुखत आख्यापयसीति भावः ॥ १०२ ॥

शिष्टपरम्परापरागता रागतारतम्येनाद्यानवद्या नववसन्तोत्सववासरे वासरेशतनयाकूलेऽनुकूलेऽनुरक्ता रक्ताशोकमूले मदनमर्चयति वधूततिरिति रीतिरिति रीणधुरीणतया स्वयमेव कुसुमावचयनाय नायकमणीसदृक्षयाक्षयाभिजनयानया नयासन्नसकलगुणया प्रियसख्या सख्यातिकया कयाचन राधाभिख्यया सह समागता वयं कथमुन्मत्त इवात्र प्रलपसि ॥ १०३ ॥

रागस्यासक्तेस्तारतम्येन· आद्या· अनवद्या· अनिन्द्या वधूततिर्मदनमर्चयतीति रीतिः शिष्टपरम्परापरागतेत्यन्वयः, इति हेतोः· रीणा त्वरिता या धुरीणता प्रभुता तया, रागोत्कण्ठाविजप्रभुतामध्यनादृत्येत्यर्थः, नायकमणी हारमध्यगरत्नं तत्तुल्यया, अक्षयोऽभिजनः कुलं यस्यास्तया, महाकुलवत्या· इत्यर्थः ॥ १०३ ॥

स आह रे हरेरपरः कोऽन्यो मदनो मदनोदनो यः सकलानामुन्मादको मुन्मादकोमलश्च ॥ १७४ ॥

मदनोदनो गर्वखण्डनः, सकलानां सर्वेषां किंतु* उन्मादयतीति स इति मदनशब्दवाच्यः स एवेत्यर्थः, स्वयं तु मुद्* हर्षः* मादो मत्तता ताभ्यामपि कोमलः ॥ १७४ ॥

तस्मिन् साक्षाद्वर्तिन्यसाक्षाद्वर्तिन्यहो मदने वः पूजारतिः किमिति भवत्य एवोन्मना मत्तावच्छृणुत ॥ १७५ ॥

तस्मिन् हरौ भगवति साक्षाद्वर्तिनि सति, असाक्षाद्वर्तिनि परोक्षे मदने । मत्तावत्* मत्तस्तावत् ॥ १७५ ॥

अयमहं महं वः कारयिष्यामि स्वस्तिवाचनपूर्वकमपूर्वकमनीयं पुरोहिततया पुरो हिततया तदित इत इत तस्यैव समीपम् ॥ १७६ ॥

महं पूजामुत्सवं वा, पुरोहिततया पौरोहित्येन, पुरो हिततया पुरोऽग्रे हितरूपत्वेन, यद्वा हं इति पृथक् पदं, ततया विस्तृतया, इत इत इति तद्वर्त्मोपदेशः, इत गच्छत ॥ १७६ ॥

श्रीराधाह पूजार्होऽयं वटुः पटुः परं ललिते तदादिश चारुचन्द्राचन्द्रावल्यौ भद्रेणायं पुरोहितः पुरोहिततया पूज्यतामिति । तदुक्ताभ्यां ताभ्यां महामहान्धाभ्यां प्रसभमाकृष्य विविधवर्णचूर्णचूर्णनगन्धोदकोक्षणाक्षणपराभूतो भूतोत्तम इव यदा विदधे तदासौ चुक्रोश क्रोशगामिना स्वरेण ॥ १७७ ॥

विविधवर्णैश्चूर्णैश्चूर्णनं सर्वाङ्गपेषणं तच्च गन्धोदकैरुक्षणं सेचनं च ताभ्यां क्षणं व्याप्य पराभूतः ॥ १७७ ॥

* मत्त् तावत्* इत्येवं मुद्रणीये पदविभागाभावो यमकस्य लिपितोऽपि प्रदर्शनार्थः ।

उन्मत्ताभिर्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः
चोदैः सिन्दूरकाश्मीरकमलयरुहां हा धिगन्धीकृतोऽस्मि ।
जाड्यं गन्धाम्बुसेकैरजनि तत इतो धावितुं नास्मि शक्तो
व्यापद्येऽहं वयस्य प्रियसखमव मां मास्त्विह ब्रह्महत्या॥१७८॥

धावितुं पलायितुं, व्यापद्ये· अहं म्रिये ॥ १७८ ॥

तदा तदारादाकर्ण्य तदाक्रन्दितं दितं च प्रतिभाप्रतिभानं च विदित्वा कुसुमासवस्य कुतुकसरलाभिरबलाभिरहो कौतुकमिति त्वरया रयारूढरागैः सह सहचरैः कुतूहलहलहलापुरःसरं पुरः सरंहाः समुपससाद ॥ १७९ ॥

तदाक्रन्दितं तस्याभिक्रन्दनम्· अबलाभिरेव दितं खण्डितं विदित्वा, अहो कौतुकमिति ब्रुवन्नित्यर्थः, सरंहाः सवेगः ॥ १७९ ॥

स सादरदरव्रीडमालोक्यमानो मानोन्नताभिरपि ताभिः सुभगतमो गतमोदमिवावलोक्य बटुमपटुमपरितुष्टमना इव कृतकृतकसंरम्भं व्याजहार विहारविशेषेण ॥ १८० ॥

ततश्च स श्रीकृष्णो मानोन्नताभिरपि गर्वाधिकाभिरपि सादरदरव्रीडं यथा स्यात् तथा· आलोक्यमानः, तत्र महाराजनन्दनन्दनत्वादादरः, तत्प्रियसखावमाननाद्भयं, कन्दर्पाद्वैधकवेशत्वेन लज्जेति, अत एव सुभगतमः । बटुम्· अपटुं चेष्टनासमर्थमालक्ष्य ॥ १८० ॥

हंहो कथमयं निरागा रागान्धाभिर्भवतीभिरुपालब्धो लब्धोत्तरापमानो मम ममतापात्रं बटुः, तदपराधपराधमतामतानि प्रतिफलानि सह्यन्तामिति सहचरानवलोकयति स्म ॥ १८१ ॥

निरागा निरपराधः, अपराध एव परो मुख्यो यस्यां सा· अधमता तस्यां मतानि संमतानि, उचितानीत्यर्थः ॥ १८१ ॥

ततश्च ।

सहचरकरदत्तैः कन्दुकैः कैङ्किरातैः
सकलकुलवधूनामिव विचोभि वक्षः ।
यदकृत कृतहस्तो यौगपद्येन सद्य-
स्तदमरवरनार्यः साधुवादैः पुपूजुः ॥ १८२ ॥

कैङ्किरातैरशोकपुष्पोद्भवैर्वक्षः कुचयोर्मध्यप्रदेशं विचोभि विशिष्ट-लोभयुक्तं यत् अकृत अकार्षीत् । कृतहस्तो युद्धकुशलः, "कृतहस्तः सुप्रयोगे विशिख" इत्यमरः ॥ १८२ ॥

तथा सति द्वयोरिव सेनयोरनयोरनयोपरमेणैव ।

शोणश्लक्ष्णारुणसुरभिभिर्धूलिभिर्धूलिभिश्च
क्रीडायुद्धं समजनि महत् कन्दुकैः कन्दुकैश्च ।
शृङ्गोन्मुक्तैः कुसुमधनुषो वारुणास्त्रैरिवारात्
काश्मीरीयैरतिसुरभिभिर्वारिभिर्वारिभिश्च ॥ १८३ ॥

अनयोर्द्वयोरिव सेनयोः अनयोपरमेण अनीतिराहित्येन । शोणारुणयोः किंचिच्छ्यामलिममिश्रणामिश्रणत्वेन भेदः, धूलिभिर्धूलिभिरित्यादि वीप्सा, शृङ्गोन्मुक्तैर्जलयन्त्रोन्मुक्तैः "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके" इति मेदिनी ॥ १८३ ॥

ततस्तु ततस्तुतिभिः सुरवधूभिरुभयबलसाम्यमालोकयन्तीभिः क्रियमाणे साधुवादे सति ॥ १८४ ॥

तता विस्तृता स्तुतिर्यासां ताभिः ॥ १८४ ॥

अभयमुभयसेनाचारिभिर्धूयमानैः
समजनि पटवासैरन्धकारोऽतिगाढः ।
व्यतनुत हरिरस्मिन् साहसं तीक्ष्णमेको
न्यविशत परचक्रं यन्मनोजेन नुन्नः ॥ १८५ ॥

अभयं निःशङ्कं यथा स्यात् तथा धूयमानैः क्षिप्यमाणैः पटवासैः गन्धचूर्णैः, उभयसेनाव्यापिभिः ॥ १८५ ॥

ततश्च ।

न पतति लघुभावाद् घूर्णति व्योम्नि तस्मिन्
रजसि तमसि गाढं जायमाने मुहूर्तम् ।
न परिचयमवापत् क्वापि कस्यापि कश्चित्
तदनु स परचक्रे कृष्णवेणुर्व्यराणीत् ॥ १८६ ॥

कस्यापि जनस्य परिचयं कश्चिदपि जनो न· अवापत्·न प्राप्तवान्, तदनु तदनन्तरमेव ॥ १८६ ॥

अथ यदि परचक्रे विक्रमी कृष्णवेणुः
सुरतसमरभेरीभावमाविश्चकार ।
दिशि विदिशि तदासीदङ्गनापाङ्गभङ्गी-
सशिखविशिखपातो यौगपद्येन जातः ॥ १८७ ॥

तदा च· अङ्गनानाम्· अपाङ्गभङ्ग एव सशिखविशिखाः सायशरास्तेषां पातो जात आसीत्, कृष्णापरीत्यर्थात् ॥ १८७ ॥

अथैवं मुहुरजनि रजनिरण इव स लीलारणो रणोद्धुर गक्स्तदा हि तदाहितदाक्षिण्यः ॥ १८८ ॥

रणोद्धुरो युद्धचण्डः, तत्र युद्धे· आहितम्· अर्पितं दाक्षिण्यं स्वातन्त्र्यं येन सः,"दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिष्वि"ति मेदिनी ॥ १८८ ॥

संप्रस्वापनसंज्ञमायुधमिव भ्रूचापमारोपयन्
लीलालोलकटाक्षमक्षिविषयं कुर्वन् समस्ताङ्गनाः ।
अस्ताङ्गं विनिमीलिताक्षमलसेनोज्जृम्भमाणाननं
कूजत्कण्ठतटं चलाधरपुटं चक्रे प्रसुप्ता इव ॥ १८९ ॥

लीलया लोलं कटाक्षमेव संप्रस्वापनसंज्ञम् । आयुधं शरं भ्रूरेव चापस्तम्· आरोपयन्· आरोहयन् । सस्ताङ्गमित्यादीनि क्रियाविशेषणानि· अनङ्गविक्रियाभरजस्य मदस्यानुभावाः ॥ १८९ ॥

एवं सति तथाविधा विधातव्यशून्याः स्वसेना निरीक्ष्य ।

तथाविधपराक्रमं क्रमत एत्य चन्द्रावली
निपात्य पुरुवीचिकां नयनकोणनाराचिकाम् ।
निबध्य निबिडं भुजाभुजगपाशबन्धेन तं
चमूरुनयनाचमूपतिरमूमुहन्मोहनम् ॥ १९० ॥

पुरुवीचिकां बहुतरङ्गयुक्तां नाराचिकां क्षुद्रशरम् । अमूमुहत्· मोहयामास ॥ १९० ॥

ततश्च क्षणात एव प्रतिबुध्य ।

तिमिरमिदमनल्पं नैव यावद्धरंसी-
दतिलघु लघुहस्तस्तावदेवैकवीरः ।
व्यतनुत तनुमध्याव्यूहमालोड्यमानं
मदकलकलभेन्द्रः पद्मिनीनामिवौघम् ॥

तथा सति ।

विरते च परागजान्धकारे रागजान्धकारे तु वलमाने ।

छिन्नानां मृगलोचनाचयचमूमानद्विपानामिव
क्षोणी सा क्षतजैरभूदरुणिता स्निग्धारुणैः पांशुभिः ।
भृङ्गघातमदैरिवास मलिना कस्तूरिकाकर्दमै-
राकीर्णाजनि कीकशैरिव परिभ्रष्टैर्मणीशङ्कुकैः ॥ १९१ ॥

क्षतजैः शोणितैः । आस बभूव, "लावण्यमुत्पाद्य इवास यत्न" इत्यादिदर्शनादनुप्रयोगादन्यत्राप्यस्तेर्भूभावं केचिदेच्छन्तीति धातुप्रदीपः । यद्वा· "अस गतिदीप्त्यादानेष्वि"त्यस्य रूपमनेकार्थ्यात् सत्तायां वृत्तेः । कीकशैरस्थिभिः । अत्र क्षतजादीनामश्लीलत्वं नाशङ्क्यं तेषां प्राणिनिष्ठ-

तथैव तथात्वव्यवहारात्, न तूपमोत्प्रेक्षादौ, समुद्भ्रान्तसुधांशुरित्यादिभूरिप्रयोगात् ॥ १९१ ॥

अथ तथाविधविविधविकारविकलां तां वधूसेनामवेक्ष्य सुखजलधिजलधिया वटुना ही हीति भुजानुद्यम्य नटता अटता च कृष्णसमीपं किंचिदवादि ॥ १९२ ॥

अटता च गच्छता च ॥ १९२ ॥

साधु वयस्य साधु* वयस्यस्मदीये नैतादृशं सुखमनुभूतमनुभूतलम् ॥ १९३ ॥

अनुभूतलं भूतलं लक्ष्यीकृत्य अस्मदीये वयसि बाल्यादौ एतादृशं सुखं नानुभूतम् ॥ १९३ ॥

यदमूभिर्निर्वंशिकाभिर्वंशिकाभिरनपायोऽस्त्वत्र सहचरोऽहं रोहं प्रापितोऽस्मि दुरवस्थायाः संप्रति तथैव दुरवस्थितिस्थितिभाजः पश्यामि ॥ १९४ ॥

निर्वंशिकाभिरिति विदूषकत्वात् स्वावमाननमनुस्मृत्याभिशापात्मकगालिप्रदानं, श्लेषेण वंशीरहिताभिः, रोहम् उद्गमम् ॥ १९४ ॥

तथाहि ।

छिन्नाः कञ्चुलिकाः प्रयत्नगुफिता त्रुटिता च हारावली
सामर्थ्योऽपि मधूत्सवस्य परितो भग्ना लुठन्ति क्षितौ ।
धम्मिल्लालकभालगण्डयुगदृग्वक्षांसि शोणान्यहो
चूर्णैः किंशुकपाटलैर्निजकृतेः संप्राप्तमाभिः फलम् ॥ १९५ ॥

किंशुकपाटलैः किंशुकवर्णैः श्वेतरक्तवर्णैश्च, तथापि शोणानीति शोणिम्ना पीतिमश्वेतिम्नोर्ग्रासंभवात् ॥ १९५ ॥

* मध्ये साधु पदं पुस्तकान्तरे नास्ति ।

किंतु वयस्य.इमाः खलु महाचतुरा हा चतुराननसृष्टिबहि-रेव हि रेजिरे ॥ १९६ ॥

रेजिरे॰ इति वर्तमानतायामपि भूतत्वपरोक्षत्वारोपो न केवलमद्यतन एवासां पराक्रम इति बुबोधयिषया, सा च स्वातिभयमूलैव ॥ १९६ ॥

तद्यावत् पुनरपि संभूय भूयसीभिरपराभिः पराभिर्वृषभानुतनूजादिभिर्भवन्तं विजेतुं नोत्सहन्ते हन्तेदानीमेव तावदपसरामः, बहुवैरा वै रागेण किं न कुर्वन्ति ॥ १९७ ॥

संभूय मिलित्वा । अपसरामः पलायामहे, रागेण कोपेन किं न कुर्वन्ति,अपितु मर्यादामप्यतिक्रमन्त एवेत्यर्थः । त्वामवलीलयैव जित्वा मत्पैशुन्यमनुस्मृत्य न जाने मम कंचन दण्डं ब्रह्महत्यामेव वा करिष्यन्तीति भावः ॥ १९७ ॥

सखायः सर्वे सहासं निजगदुर्निजगदुर्मुखतादोषेणायं भीत एवाधिकोऽधिकोपतया क्षणं तीव्रश्च भवति,तदयमाश्वास्यतां सखे सखेदोऽयं यथा न भवति ॥ १९८ ॥

निजगा निजगता या दुर्मुखता स्वाभाविकमेव निरुपधि मौखर्यं तद्दोषेण भीत एवायम्, अधिकोपतया कोपाधिक्येन तीक्ष्णश्च भवति, अनितरात्स्यात् क्षणेनैव भयं क्षणेनैव साहसं, किंनिदानं वा दैन्यत्रासादि किंनिदानकं वा गर्वकोपादि स्यादिति न विद्म इति भावः ॥ १९८ ॥

स आह कुसुमासव यतस्ते भयं तामधुना साधुनासाध्वसेन मां दर्शय मयि सति किं ते भयमिति निगदितो दितोरुभयो भयोत्कटः साटोपमग्रेसरो भवन्नित इत इत इत्यालपन्निर्मुक्तवाटिकापरिसरं परिसरन्तीं ललितादिभिरालिमालाभिः कुसुममवचिन्वतीं न्वतीन्द्रियरूपां तां दर्शयामास ॥ १९९ ॥

दितोरुभयः खण्डितबहुभयः,ततश्च भया कान्त्या॰ उत्कटः ॥ १९९ ॥

तस्मिन्नेव रसमये समये ।

आलीनां कुटिलकटाक्षबाणलक्षे-
राविद्धो हरिरसृजत् कटाक्षबाणम् ।
राधाया उरसि निपत्य हा कथंचित्
स व्रीडाकवचविभेदमेव तेने ॥

तदनु ।

व्यतनुत वृषभानुनन्दनी यं
तनुतरकज्जलकालकूटदिग्धम् ।
स हसितनिशितः कटाक्षबाणो
हरिहृदयं विदयं विनिर्बिभेद ॥ २०० ॥

तदन्विति, कृष्णकटाक्षानन्तरमपि राधाकटाक्षोद्गमो व्रीडाकवचभेदाद्गुमन्तोत्सवे ऽत्र प्रयोगात् तनुतरेणात्यल्पेन कज्जलरूपकालकूटेन दिग्धमुपचितं यं व्यतनुत स कटाक्षबाणः, हसितेन निशितस्तीक्ष्णः ॥ २०० ॥

तदा तदाघातेन विमूढमूढरभसतया तमालोक्य सरसतरं सतरङ्ग इव बटुराबभाषे ॥ २०१ ॥

विमूढं तं सखायम् आलोक्य, ऊढरभसतया वेगयुक्तः सन्नित्यर्थः, सरसतरं सातिविक्रमम्, सतरङ्ग इति, ग्रीवाभुजादिकं मुहुश्चालयन्नित्यर्थः ॥ २०१ ॥

वयस्य एष ते सहायतमोऽहं मोहं मा गा इति केलिकन्दुकान् ग्राहयित्वा विद्रावय वयस्यैता यस्यैतादृशः पार्ष्णिग्राहकोऽहं हन्त तस्य किमशक्यमिति निगदति ॥ २०२ ॥

इति निगदति सति बटौ ॥ २०२ ॥

लीलालसं मुकुलिताग्रमरालितभ्रू-
भङ्गारिकङ्कणमुदस्य कराब्जकोशम् ।

केनाप्यलक्षितमथो वृषभानुपुत्री
सिन्दूरकन्दुकमुरस्यकिरन्मुरारेः ॥ २०३ ॥

तत्कन्दुकनिक्षेपे मान्द्यमवधार्य तत्र निजातिलाघवं दर्शयन्ती श्रीराधिकैव प्रथमं कन्दुकं व्यनुददित्याह लीलेति । क्रियाविशेषणद्वयम् । केनाप्यलक्षितमित्यन्यालक्षितत्वेऽपि तस्य मोहं प्राप्तवतापि श्रीकृष्णेन लक्षितत्वं निभृतमेवावश्यं मन्तव्यम्, लीलालसमित्यादीनामन्यथा तदनास्वाद्यत्वेन नातिसार्थकत्वमेवेति ॥ २०३ ॥

तेन च तदासौ प्रबोधितोऽधिनोषसुप्तः केशरिकिशोर इवातिकुपितोऽपि तोषकरः सखीनां करकमलगृहीतकन्दुको राधामनुधावन्नथ ललितयोचे ॥ २०४ ॥

तेनासौ प्रबोधित इवेत्यथेतनकौतुकार्थं स्वस्य तथाभूतत्वेन ज्ञापनमेव । अधितोषेणाधिकसुखेन सुप्तः केशरिकिशोर इवेति स्वप्रहारकाभिमुखधावनस्वभावत्वधर्मेणापि । सखीनां कुसुमासवादीनां ललितादीनां च ॥ २०४ ॥

अये तवोरसि रसिकया कया कृतः सिन्दूरस्य कन्दुकनिक्षेपो निक्षेपो निजानुरागस्येव, का जानाति नातिमुग्धेन भूयतामनुभूयतामनुपरोधिनीं वृथास्मत्सखीमुपधावसि । तथापि धावन्नेव सकौतुकम् ॥ २०५ ॥

त्वं चेज्जानासि तां दर्शयेत्यत ऊचे का जानातीति । मुग्धस्त्वविचारात् त्वं सदा भवस्येव, किन्त्वतिमुग्धेन मा भूयताम् । तदप्यस्येयमालोक्य पुनरूचे, अनुभूयतामनुभवोऽपि क्रियताम्, अवधीयतामित्यर्थः ॥ २०५ ॥

आलीनां वलये निलीयवसतिं श्यामां कलाकौतुकात्
स्मेरापाङ्गतरङ्गितङ्गितरुचा संदर्शितां राधया ।

तस्या एव मधूत्सवस्य विभवैर्गन्धोद्धधूलीमुखै-
स्तामुच्चैः स लिलेप भालकबरीगण्डेषु वक्षस्यपि ॥ २०६ ॥

निलीय श्रीराधयैव सह तस्य कुन्दयुतुरीन्या कौतुकदर्शनार्थं निकुञ्ज वसतिर्यस्यास्ताम् । संदर्शितां राधयेति, स्वरमणेन तेन सह प्रथमं तामेव खेलयित्वा तत एव स्वयं खेलितुमिच्छन्त्येति भावः । ततश्च निलीयवसतिमिति लीनत्वमेवापराधलक्षणमिति ज्ञापितं च । स्मेरस्या-पाङ्गस्य तरङ्गिणी तरङ्गयुक्ता तङ्गिना श्यामाशङ्कया स्खलनवती च या रुक् कान्तिस्तया, "तगि स्खलनकम्पगतिषु" ॥ २०६ ॥

तमन्यायमवलोक्य तदा तदाली वकुलमालाकुलमालापमा-विश्चकार· अहो ते वैदग्धी वै दग्धीकरोतीव नो हृदयम् ॥ १०७ ॥

आकुलं यथा स्यात् तथा वै निश्चितं दग्धीकरोति, परमविद-ग्धस्य चतुरसिंहस्यापितवैदूश्यं मौग्ध्यमभूदिति हृदयानुतापाय· एवास्याक-मिति भावः ॥ २०७ ॥

यतः कन्दुकमुक्ता*वत्· मुक्तावत् किरति हसितदीधितिं सितदीधितिं विडम्बयन्तीव मुखमण्डलेन तामपहाय निरागसं राग-संबाधबाध पिच्छापीड पीडयसि मे सखीम् ॥ २०८ ॥

कन्दुकं मुञ्चतीति कन्दुकमुक् । सितदीधितिं चन्द्रम् । रागेण मात्सर्येण संबाधा व्याप्ता या बाधा व्यथा तया विशिष्टः सन्, श्लेष-भङ्ग्या रागेणानुरागेण । ततश्च कर्तृकर्मणोर्द्वयोरपि वैशिष्ट्यं युक्तम् ॥ २०८ ॥

इति वचनतात्पर्यपर्यवसानेन सानेन साराधिकां राधिकां यद्दि सूचयति स्म तदा तदालापेन जातकौतूहलो राधाभिमुखीभूय भूयसा रागेण ॥ २०९ ॥

सा वकुलमाला । साराधिकां बलाधिकाम् । वचनतात्पर्यस्य यत् पर्यवसानं तेनैव । तच्च ललितादिष्वपि हसितदीधितिं किरन्तीषु ता-

* मुक् तावत् इति छेदः, योगस्तु समानाकारतानुभवाय ।

मपहायेति त्यागस्य प्राप्तिसापेक्षत्वात् प्राप्तेश्च राधायामेव पूर्वप्रसक्तत्वात् तस्यामेव संभावितम्। एतच्च स्वयूथेश्वरीं श्यामामेवातिसुखयितुं तत्सौहार्दानुरूपमेव सख्या भावितम् ॥ २०९ ॥

प्रकटय बलं गर्विण्येहि क्षिप क्षिप कन्दुका-
निति सरभसं स्मित्वा वीक्ष्योपसर्पति माधवे ।
परिवृणुत भो निघ्नत्यूहं घ्नत घ्नत चैककदे-
त्यथ कलकलः पद्माक्षीणां पिकैश्च गुरूकृतः ॥

तथा सति स तिलकायमानो रसिकसभानां सभानां नववधूनां वृन्देन वन्दीकृत इव यदा समजनिष्ट ॥ २१० ॥

सभानां सकान्तीनाम् ॥ २१० ॥

तदा ।

आकीर्णः कतिभिर्विलासरजसां पूरैः पराभिर्हतः
पौष्पैः कन्दुकसंचयैश्च कतिभिर्माणिक्यशृङ्खुतैः ।
सिक्तः कुङ्कुमचन्दनादिसलिलैरप्येक एव स्वयं
श्रीगोपेन्द्रसुतः सलीलमसकृद्विद्रावयामास ताः ॥ २११ ॥

असकृदिति, विद्रुत्यापि मुहुर्मुहुरागच्छतीः ॥ २११ ॥

ततश्च ।

मधुमहमहसैव द्राविताय़ां चपायां
सहजसदनुरागावेगकण्डूलचित्ताः ।
पुनरपि युगपत् ताः साहसेनातिभूम्ना
प्रियमथ परिवव्रुश्चन्द्रिकावत् पयोदम् ॥ २१२ ॥

अतिभूम्नेति साहसे हेतुः ॥ २१२ ॥

ततश्च ।

मातङ्गीप्रमुखो गणः सरभसं वीणादिनानाविध-
ध्वानध्मातहरिन्मुखो व्यरचयद्गानं वसन्तोचितम् ।

रोलम्बाश्च पिकाश्च चित्रविहगाश्चान्ये कलं तुष्टुवु-
र्नृत्यद्व्रातगुरूपदेशवसतो लास्यं व्यधुर्बर्हिणः ॥ २१३ ॥

ध्वानैर्ध्मातानि प्रतिध्वनियुक्तीकृतानि हरितां मुखानि येन सः ॥ २१३ ॥

परतश्च ।

नानायन्त्रमवादयन्त कतिचित् केचिद्विसन्तं जगुः
केचिद्गन्धरजांसि कन्दुकचयानन्योन्यमाचिक्षिपुः ।
श्रीकृष्णानुचरोत्करेषु तु बलश्रेष्ठेषु कृष्टान्तरो
हासैकप्रणयी वटुः पटुरटन्नुल्लासनृत्यं व्यधात् ॥ २१४ ॥

श्रीकृष्णानुचरोत्करेषु मध्ये केचिन्नानायन्त्रमवादयन्तेत्यादि ॥ २१४ ॥

॥ शेषमग्रे ॥

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य दशमः परिच्छेदः ॥

॥ शब्दानां दुष्प्रयोगविषये ॥

१ ॥ शब्दानां दुष्प्रयोगः ॥—अपि च भाषासु स्वाभाविकदृढ्ढत्वैसंकुल्यापरपर्यायात् शब्दानां प्रयोगे ऽत्यन्तमपरिहार्याद्दूषणात्तस्माद्दोषादन्ये ऽपि बहवो बुद्धिपूर्वमनुष्ठिता दोषा उपेक्षाश्च सन्ति, यैर्मनुष्या भाषणप्रकारे भ्रान्ता भूत्वा तेषां लिङ्गानामर्थं स्वाभाविकास्थित्यपेक्षया ऽधिकमव्यक्ततरं कल्पयन्ति ॥

२ ॥ प्रथमं विज्ञानशून्या व्यक्तविज्ञानरहिता वा शब्दाः ॥—प्रथमं तावदस्मिन् दोषप्रकारे मुख्यः सुबोधश्च विविक्तविज्ञानरहितानां शब्दानां प्रयोगरूपो दुष्प्रयोगो ऽथवा बोध्यार्थशून्यपदप्रयोगरूपो ऽस्ति । ते चेमे द्विधा ।

(१) परीक्षायां क्रियमाणायां सर्वासु भाषासु के चन शब्दा आढ्ये उचिते च प्रयोगे न कान्यपि सुस्पष्टासंदिग्धविज्ञानानि बोधयन्तीत्युपलभ्यन्तइति सर्वेणापि ज्ञातुं शक्यतएव । शास्त्रिणो धर्मशास्त्रिणश्च भूयिष्ठानिमान् शब्दान् प्राचारयन् । यतस्तेषां निर्मातारः प्रचारयितारो वा साधारणबोधातिगं विलक्षणं कं चन पदार्थमुद्दिश्य विलक्षणमतविशेषस्य परिपोषणाय वा स्वप्रतिज्ञाया दोषविशेषस्य गोपनाय वा प्रायशो नवीनान् शब्दान् रचयन्त्येव येषु परीक्ष्यमाणेषु न्यायतो ऽर्थशून्याः शब्दा इति कथयितुं शक्यते । तेषां प्राथमिककल्पनासमये तद्बोध्यविज्ञानसमुदायस्य नियतत्वाभावेन साधु परीक्षितेषु तेषु शब्दार्थानानुकूल्यस्य चोपलब्ध्या वा यदि समपन्नं यैर्लौकिकप्रयोगे आभ्यन्तरैर्वा व्यवहृताः शब्दा वस्तुतः कानि विज्ञानानि बोधयन्तीति परीक्षायां बुद्धिमपरिश्राम्यैव तत्तच्छास्त्रिमण्डलस्य भक्तमण्डलस्य वा विवेचकत्वेन तैर्विचिन्त्य पुनः पुनरुदीर्णाः प्रायो ऽर्थशून्यध्वनिरूपा एव भवन्ति । सर्वेषां मनुष्याणां संवादाध्ययनयोरीदृशाः शब्दाः पर्याप्ता उपलभ्यन्ते अथ येतोप्यधिकेदृशशब्दसंग्रहचिकीर्षायामेवंजातीयकशब्दकल्पनापरिवृढाः शास्त्रिणो ऽध्यात्मशास्त्रपण्डिता अर्वाचीना विवाददर्शिनो बाह्यप्रपञ्चविचारका धर्मशास्त्रिणश्च प्रकृतविषयोदाहरणैः सन्तोषयितुं प्रभवन्तीति तानि नेह मया प्रदर्श्यन्ते ॥

३ ॥ (२) अन्ये च पदबोध्यानि सुस्पष्टान्यसंदिग्धानि विज्ञानानि येषामर्था न भवन्ति तथाविधशब्दनिर्माणे न्यूनावधाना इतोप्यधिकं दुष्प्रयोगं विस्तारयन्ति । सर्वथा सुस्पष्टार्थमन्तरैव भाषाया औचित्येन येषां परमोपयोगीनि विज्ञानानि बोध्यतया व्यवस्थाप्यन्ते तथाविधानसक्षोपेक्षया चिरपरिचितानिव ते प्रयुञ्जते । बुद्धिर्यशो दयेत्यादयः शब्दाः सर्वैरेव मनुष्यैः पुनः पुनरुदीर्यन्ते परं तु तैः पदैः किं सुबोधयिषितमिति पृष्टे सति बहवस्तूष्णींभवेयुर्न जानीयुश्च किमुत्त[illegible]र्यमिति । स्पष्टं चैतत् ते तानि पदानि समभ्यस्य स्मरणाय जिह्वाग्रगतानि कुर्वन्त्यपि तैः पदैः परान्प्रति बोधनीयानि विज्ञानानि नियतानि स्वात्मसु नावधारयन्ति ॥

४ ॥ तत्तत्पदबोध्यविज्ञानानि पूर्वमनवगत्यैव तेषां पदानामभ्यासेन तावत् पदानां दुष्प्रयोगो भवति ॥—मनुष्या आन्दोलनकाम्यत्यवस्थामारभ्यैव तत्पदबोध्यमिश्रविज्ञानानि तद्बोध्यतया कल्पितेषु पदार्थेषूपलभ्यमानानि वा मिश्रविज्ञानानि पूर्वमपरिकल्प्यैव सुलभावधारणीयानि पदान्यभ्यस्यन्ति, तथा कर्तुमभ्यस्ताश्च ते प्रायो यावज्जीवं तथैवानुतिष्ठन्ति । किं च स्वात्मसु नियतविज्ञानानामावश्यकस्य व्यवस्थापनस्य क्लेशमकृत्वैव सुपरिचितानामस्थिराणां विसंकुलानां च विज्ञानानां बोधाय परैः प्रयुज्यमानैः पदैरेव संतुष्यन्तस्तेषां पदानि सर्वदैकरूपमेवार्थं बोधयन्तीतीव मन्यमानास्तान्येव पदानि प्रयुञ्जते । यद्यपि यत्र मनुष्या एतस्य बोध्यत्वमावश्यकं मन्वते तत्र लौकिकव्यवहारेऽस्योपायं परिकल्पयन्ति ततश्च तदानीमपि तानि लिङ्गानि विरचयन्ति तथापि तेषां शब्दानामिदं स्वार्थाबोधकत्वं तेषां स्वमतानां स्वाभिमतविषयाणां वा साधनाय हेतूपन्यासकरणावसरे तेषां संवादं भूयोभिरर्थशून्यैः पदैर्भूयसा वाग्जालेन च प्रपूरयति, विशेषतश्च धर्म्माधर्म्मविषयेषु यत्र प्रायः शब्दाः स्वैरिकं बहुविज्ञानसमुदायं बोधयन्ति न पुनः स्थिरं नियतं स्वभावमिद्ध विज्ञानसमुदायम् । तेषां च प्रायः शब्दा एव विचार्यन्ते, अन्ततोऽत्यन्तगूढानियततत्तच्छब्दबोध्यानि विज्ञानानि । मनुष्याः स्वसमीपवर्त्तिजनव्यवहारगोचराणि पदान्याददते । तत एव च ते तत्पदबोध्यार्थपरिचयशून्या न प्रतीयन्ते नियतार्थविशेषविषये स्वमनांस्यपरिश्रमय्य भूयो भूयः प्रयुञ्जते च । किं च तेऽस्मात् प्रकृतेतरविषये एतत्फलं लभन्ते । यथैवंविधेषु संवादेषु ते विरलमेवोचितवादिनो भवन्ति तथैव ते भ्रान्ता इति तान् प्रति बोधयितुं शक्यते । नियतज्ञानाभाववत्पुरुषप्रमापाकरणप्रयत्नस्य नियतनिवासाभाववतः पुंसो निवासान्वेषणप्रयासस्येव विफलत्वात् । मन्ये एतदित्थमेव स्यात् । सर्वोऽपि स्वस्मिन् परेषु चैतदित्थमेव भवेच्च वेति ज्ञातुं शक्नोति ॥

५ ॥ तेषामस्थिरप्रयोगाच्च ॥—द्वितीयतः शब्दानां प्रयोगोऽस्थिरत्वमपि तेषामन्यो महान् दुष्प्रयोगः । कस्मिंश्चिद्विवादविषये लिखितो

वादो विरलमेव तथोपलभ्यते यत्र सावधानतया पठिते सति तस्मिन् संवादे प्रधानसाधनीयार्थप्रतिपादका अपि तएव शब्दाः कदाचिदेकविधशुद्धविज्ञानसमुदायबोधाय प्रयुज्यन्ते कदा चिच्चान्यादृशस्यैव समुदायस्य बोधाय । अयं च भाषाया महान् दुष्प्रयोगो भवति । न स्वाभाविकेनार्थेन किं तु स्वैरिककल्पनया परान् प्रति ज्ञापनाय शब्दानां स्वीयविज्ञानलिङ्गताया विवक्षितत्वेन यदा कदाचिदेकस्य कदा चिच्चापरस्य वस्तुनो बोधाय शब्दाः प्रयुज्यन्ते तदा छलं दुष्प्रयोगश्चेति तु सुस्पष्टम् । एतस्य बुद्धिपूर्वमनुष्ठानं तु महामौर्ख्यमेव महत्तरदुर्विनयरूपमेव वा भवितुमर्हति । किं च परेण सह संभाषणे तर्कोपन्यासे वा तावतैव सुस्पष्टभावेन मनुष्याः शुद्धविज्ञानानां भिन्नभिन्नसमुदायस्य बोधाय शब्दान् प्रयोक्तुमर्हन्ति यावता सुस्पष्टभावेन ते परिगणनसमये संख्यावाचकान् शब्दान् यथा त्रिशब्दं कदाचित् त्रयाणां कदा चिच्चतुर्णां कदाचिदष्टानां वा बोधाय प्रयोक्तुं शक्नुवन्ति । यदि मनुष्याः संख्याविषये ऽप्येवमेव कुर्युस्तर्हि कस्तैः सह व्यवहरेत् । यो व्यवहारे सांसारिककार्ये चैवं भाषेत, अष्टपदं च स्वप्रयोजनानुसारेण कदा चित् सप्तानां कदा चिच्च नवानां बोधाय प्रयुञ्जीत स सर्वैर्मूर्खो धूर्तो वा ऽवश्यं तदानीमभिधीयेत । किं चैवमपि तर्केषु शास्त्रीयसंवादेषु चैवंविधमेव कर्म चातुर्यं पाण्डित्यं चेति व्यवह्रियते । मह्यं त्वेवं प्रतिभाति । ऋणादानव्यवहारे मिथ्यागणनमपेक्ष्य सार्वत्रिकव्यवहारे प्रचरितानां सर्वेषां शब्दानामर्थस्य विपर्यासे महद्दौरात्म्यम् । केवलं द्रव्यमपेक्ष्यान्येषां विषयाणां भूयिष्ठत्वात् ॥

६ ॥ (३) विपरीतप्रयोगजन्यगूढतया च ॥—तृतीयतश्चापरो भाषाया दुष्प्रयोगः प्राचीनानां पदानां लक्षणमप्रदर्श्य नवीनेष्वप्रायिकेष्वर्थेषु प्रयोगात् तथैव लक्षणं विना नवीनामनेकार्थानां च पदानां व्यवहाराद्वा जायमानेन गूढत्वेन प्रायिकार्थवैसंकुल्यसंपादकेन नवीनप्राचीनशब्दानां संमिश्रणेन वा जायते । यद्यपि अनेन प्रकारेणारिस्तुतिलाचार्यस्य शास्त्रं प्रधानतममस्ति तथापि चान्येषां शास्त्राणि नैतद्दोषविनिर्मुक्तानि सन्ति । मानवीयज्ञानापूर्णताख्यदोषलेशशून्यास्तु तेषां मध्ये विरला एव

सन्ति । पदानां गूढतया शब्दानामर्थस्य विसंकुलतया लौकिकजनदृष्टिबन्धेनेव स्वपक्षदौर्बल्यस्य प्रच्छादनाय तेषां बुद्धिपुरःसरं प्रवृत्तत्वात् । लोकव्यवहारे भौतिकं द्रव्यं विस्तारश्चेति पदद्वयप्रतिपाद्ये विभिन्ने द्वे विज्ञाने भवत इति तु किंचिद्विचारशीलस्य सर्वस्यापि स्फुटमस्ति । यतस्तयोः पदयोरर्थो वस्तुत एकरूपो ऽभविष्यत् तर्हि भौतिकद्रव्यस्य विस्तार इतिवद् विस्तारस्य भौतिकं द्रव्यमिति कथनमपि सुबोधमुचितं चाभविष्यत्। किं चैवमपि तयोरर्थवैसंकुल्यस्यावश्यकत्वं मन्वते जनाः । विद्वज्जनपरिगृहीतन्यायशास्त्रविचारशास्त्राभ्यामयं दुष्प्रयोगः शब्दार्थवैसंकुल्यदोषश्च प्रख्यापितौ । श्लाघनीयं विवादशास्त्रं भाषायाःस्वभावसिद्धमपूर्णत्वमत्यन्तमवर्धयत् । वस्तूनां तत्त्वज्ञानयोराविष्कारमपेक्ष्य शब्दार्थवैसंकुल्यस्यैव बहुशो ऽनुष्ठीयमानत्वात् । यश्चैवंविधशास्त्रीयग्रन्थान् द्रक्ष्यति स लौकिकसंवादीयशब्दानपेक्ष्य शास्त्रीयशब्दान् अधिकतरं गूढाननियतान् अनिश्चितार्थानुपलप्स्यते ॥

७ ॥ न्याये वादे च बहुश एतत्संभवति ॥ – यत्र मनुष्याणां पाण्डित्यं विवादचातुर्येण श्लाघ्यते तत्रापरिहार्योऽयं दोषः । यदि च विख्यातिपारितोषिकयोः प्रायशः पदानां सूक्ष्मतरपरिशुद्धिमाश्रितानीमानि फलानि भवेयुस्तर्हि नेदमाश्चर्यमावहेद् यद् बुद्धिमान् मनुष्य, एवमनुष्ठाय, कस्याश्चिन्मीमांसायाः परिरक्षणे विरोधितर्कवादे वा किमपि कदा चिदपि अनुपलब्धमपेक्षितं वा नास्तीतीव शब्दानामर्थं विसंकुलयेदन्तर्भावयेत्सूक्ष्मतरमितिव्यवहरेच्चेति । विजयनिर्णयस्यान्तिमशब्दवादिताधीनत्वाच्च पुनस्तत्त्वपक्षपातिताधीनत्वात् ॥

८ ॥ एतस्य सूक्ष्मतापदेन व्यवहारस्य हेतुं निरूपयति ॥–इत्यन्तं निरुपयुक्तं ज्ञानमार्गस्य साक्षाल्यतिबन्धकमप्येतच्चातुर्यमद्यापि सूक्ष्मता याथार्थ्यमिति सर्वजनश्लाघ्यपदाभ्यां व्यवह्रियते । स्तूयते प्रोत्साह्यते च विद्वद्भिः पण्डितवर्गैः । किं च नैतच्चित्रम् । यतः प्राचीना वादिनो वैतण्डिकाश्च ल्युशियन्प्रभृतयः शास्त्रिणो ऽन्येपि प्राचीना विद्वज्जनाः स्वीयसर्वज्ञतायशो लक्ष्यीकृत्य भूयांसो ऽलब्धतादृशयशसोपि सर्वज्ञमन्याः

स्वीयाज्ञानं विस्मयावहेनानिर्वचनीयेन विसंकुलशब्दजालेन प्रच्छाद्य परेषां सुबोध्यशब्दैः श्लाघ्यतां संपादयन्ति । श्रोतारो न किमपि बुद्ध्यन्तीति कृत्वा तेषु ते शब्दा आश्चर्यमावहन्ति । सर्वेष्वितिहासेष्वेतदुक्तं भवति । शास्त्रपारावारीणाः पण्डिताः स्वसमीपवर्तिसाधारणजनमपेक्ष्य न बुद्धिमत्तरा नाप्युपयोगिन इति ते सांसारिकं स्वघटितसमाजस्योपकारकं च फलं विरलमेव साधयन्ति । केवलं तत्तच्छब्दवाच्यनवीनवस्तुनि[illegible]णमकृत्वैव नवीनान् शब्दान्निर्माय प्राचीनशब्दानामर्थं निगूह्य विसंकुलय्य च यदि किमपि वस्तु मनुष्यजीवनोपयोगि श्लाघापारितोषिकयोग्यं च स्यात् तर्हि तत्र सर्वाणि वस्तूनि विवादगोचराणि मीमांसागोचराणि च कुर्वन्ति ॥

९ ॥ इदं पाण्डित्यं विरलमेव समाजस्योपकरोति ॥—यतो विदुषां वादिनां सर्वेषां पण्डितानां सत्त्वे ऽपि संसारिकराष्ट्रेषु शान्तिरौदार्यं प्रजारक्षणं चाविद्वज्जनायत्तमेवासीत् । अशास्त्रिभ्यो ऽविद्वद्भ्य एव चोपयोगिविद्यानां परिष्कारोऽप्युपलब्ध आसीत् । एवमपीदं कृत्रिममज्ञानं पाण्डित्यकृतमनर्थजल्पनं च गतेष्वेषु शतकेषु राज्ये ऽधिकारे च लौकिकानामज्ञानिनां च शब्दप्रयोगेण प्रह्लादनाद् अथवा दुर्बोधशब्दघटिते वादजाले ऽलसानामज्ञानां च प्रवर्तनात् सततं तस्मिन्नेव चक्रव्यूहे परिभ्रामणाच्च सुलभतरं प्रकारान्तरमलभमानानां पुरुषाणां कृत्रिमेण संतोषेण बहुशः प्रचारं नीयते । किं च संदिग्धार्थकैः पूर्वमप्रदर्शितार्थकैर्गूढार्थकैश्च शब्दसैनिकैः परितः परिरक्षणं विहायान्य उपायः कोऽपि बाधितानां विलक्षणानां च मतानां परिरक्षणस्य स्वीकारस्य च साधको नास्ति । अस्ति चायं लुण्ठकानां गूढनिवासा इव शृगालविवराणीव वा वादिनां शरणं न पुनर्युद्धशालिनां वीराणां दुर्गाणीव । यतस्तेषां बलवत्तया दार्ढ्येन वा नास्ति दुष्प्रापता ऽपितु घनगुल्मकण्टकादिपिहितभावेन काननानामिव । अतास्त्विक्रम्य सर्वैरेव मनुष्यैरपरिग्राह्यतया गूढत्वं विहाय बाधितमतपरिरक्षणोपायान्तरस्यासंभवात् ॥

१० ॥ नाशयन्त्यपि ज्ञानसंभाषणयोः साधनानि ॥ —अयमज्ञानगोपनप्रकारो बुद्धिमतामपि यथार्थज्ञानानवगमशिल्पं च संसारे प्रचरितेस्तो विसंकुले चातितरां भवतः पण्डितंमन्यानाम्। यतः सुबोधा बुद्धिमन्तो मनुष्या विद्यया योग्यतया च तथाविधसूक्ष्मविचारशीलतामनापन्नाः सुबोधं परस्परं भाषितुं शक्नुवन्ति शब्दानां साधुप्रयोगेण च भाषणफलमपि साधयितुं शक्नुवन्ति। परं तु यद्यपि लौकिकाः पुरुषाः श्वेतकृष्णादिशब्दान् साध्ववगच्छन्ति तैः शब्दैर्बोधितानि विज्ञानानि च सततमवधारयन्ति तथापि हिममस्ति कृष्णमिति साधनाय प्रवृत्ताः सूक्ष्मबुद्धयः पण्डिता उपलभ्यन्ते। ते श्वेतमस्तिकृष्णमितिसाधयन्तीतियावत्। यदा च ते परमचातुर्येण सौक्ष्म्येण च केवलं पदानामर्थं विसंकुलयन्ति ततश्च वास्तविकदोषेण यावद्व्यवहारसाधिका भाषास्ति ततोऽपि न्यूनतरव्यवहारसाधकतां भाषायाः साधयन्ति। अपण्डितास्त्वेतत्फलं नाप्नुवन्ति ॥

शेषमग्रे

THE

# NYÁYADARSÁNA.

WITH THE COMMENTARY BY VÁTSYÁYANA.

An Instrument of knowledge is said to be effectual, because, when an object is known by means of an instrument of knowledge, [one's] effort [about the object] becomes fruitful. Nothing is

## अथ न्यायदर्शनवात्स्यायनभाष्यम्।

प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्। प्रमाणमन्तरेण नार्थप्रतिपत्तिः। नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम्। प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा। तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते। सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः। समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा।

१० ॥ नाशयन्त्यपि ज्ञानसंभाषणयोः साधनानि ॥ —अयमज्ञानगोपनप्रकारो बुद्धिमतामपि यथार्थज्ञानानवगमशिल्पं च संसारे प्रचरितो विसंकुले चातितरां भवतः पण्डितंमन्यानाम् । यतः सुबोधा बुद्धिमन्तो मनुष्या विद्यया योग्यतया च तथाविधसूक्ष्मविचारशीलतामनापन्नाः सुबोधं परस्परं भाषितुं शक्नुवन्ति शब्दानां साधुप्रयोगेण च भाषणफलमपि साधयितुं शक्नुवन्ति । परं तु यद्यपि लौकिकाः पुरुषाः श्वेतकृष्णादिशब्दान् साध्ववगच्छन्ति तैः शब्दैर्बोधितानि विज्ञानानि च सततमवधारयन्ति तथापि हिममस्ति कृष्णमिति साधनाय प्रवृत्ताः सूक्ष्मबुद्धयः पण्डिता उपलभ्यन्ते । ते श्वेतमस्तिकृष्णमितिसाधयन्तीतियावत् । यदा च ते परमचातुर्येण सौक्ष्म्येण च केवलं पदानामर्थं विसंकुलयन्ति ततश्च वास्तविकदोषेण यावद्व्यवहारासाधिका भाषास्ति ततोपि न्यूनतरव्यवहारसाधकतां भाषायाः साधयन्ति । अपण्डितास्त्वेतत्फलं नाप्नुवन्ति ॥

शेषमग्रे

THE

## NYÁYADARSÁNA.

WITH THE COMMENTARY BY VÁTSYÁYANA.

An Instrument of knowledge is said to be effectual, because, when an object is known by means of an instrument of knowledge, [one's] effort [about the object] becomes fruitful. Nothing is

अथ न्यायदर्शनवात्स्यायनभाष्यम् ।

प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् । प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते । सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः । समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा ।

known without an instrument of knowledge; nor can [one's] effort [for an object] be fruitful, unless the object be known. A knower, indeed, having known an object by means of an instrument of knowledge wishes either to obtain or to quit it. The effort of one actuated by a wish either to obtain or to quit an object is called Pravritti or mental effort. The state of [one's] effort being attended by its consequence, is said to be Sámarthya or fruitfulness of the effort. One, who wishes and makes an effort either to take or to quit an object, either obtains or gives it up. The object may be either happiness or means of happiness, or pain or means of pain. But these objects of the instruments of knowledge are innumerable on account of the infinite number of living creatures. When an instrument of knowledge is effectual or fruitful, Pramátá or the knower, Prameya or the object known, and Pramiti or the correct notion are said to be fruitful; for if any one of these be wanting, no object can be proved to be existing. He, who being actuated by the wish either to obtain or to quit an object makes an effort, is called Pramátá or one knowing truly; the means by which one perceives an object is called Pramáṇa or instrument of knowledge; what is perceived is styled Prameya or the object known; the knowledge of an object is entitled Pramiti or correct notion. On the aggregate of these four, the real nature of an object depends. What is meant by the real nature [of an object]? Both, the

---

अर्थस्तु सुखं सुखहेतुः दुःखं दुःखहेतुश्च, सोऽयं] प्रमाणार्थोऽपरिसंख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात्। अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति, कस्मात् अन्यतमापायेऽर्थस्यानुपपत्तेः। तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता। स येनार्थं प्रमिणोति तत् प्रमाणम्। योऽर्थः प्रमीयते तत् प्रमेयम्। यदर्थविज्ञानं सा प्रमितिः। चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते। किं पुनस्तत्त्वम्। सतश्च] सद्भावोऽसतश्चासद्भावः। सत् सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति, असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। कथमुत्तरस्य

existence of what is existent, and the non-existence of what is not existent. Existence known as such in accordance with the fact is said to be the real nature [of what is existent]; non-existence known as such in accordance with the fact is said to be the real nature [of what is not existent]. How is the latter [the non-existent] known by means of the instruments of knowledge? Because, while the existent is perceived, the thing non-existing is not perceived, just as by means of a lamp. To explain, as that which is not seen, while the visible objects are seen by means of the light of a showing lamp, is said to be not existing there; were it existing, it would be seen, like the visible; but it is not perceived, therefore, it is not existing. In the same manner, that which is not perceived, while an existing object is perceived by means of an instrument of knowledge, is said to be not existing. Were it existing, it would have been perceived like the other one; but it is not perceived, it is not, therefore, existing. An Instrument of knowledge, therefore. while discovering what is existent, also informs us of what is not existing. The existent will he shown to be sixteenfold.

### 1. Aphorism.

Beatitude is attained by means of true knowledge of (1) proofs or instruments of knowledge, [Pramáṇa], (2) the objects [Prameya], (3) doubt [Sanśaya], (4) the motives [Prayojana], (5) popular data [Dṛishṭánta], (6) established truths [Siddhánta], (7)

---

प्रमाणेनोपलब्धिरिति, सत्यप्युपलभ्यमाने तदनुपलब्धेः प्रदीपवत् । यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यत् इदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति । एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यत् इदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति । तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति । सच्च खलु षोडशधाव्यूढमुपदेक्ष्यते तासां खल्वासां सद्विधानाम् ॥

सू० प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

members [of syllogism] [avayava], (8) reasoning [Tarka], (9) determination [Nirṇaya], (10) debate [Váda], (11) wrangling [Jalpa], (12) cavilling [Vitaṇḍá], (13) fallacies [Hetvábhása] (14) fraud (chhala), (15) futile arguments [Játi], (16) predicament of rebuke [Nigrahasthána].

COMMENTARY.

So many are the existent objects [the categories]. These are here enunciated for the sake of their true knowledge. It should be known that they are enunciated to exhaust the whole matter of the Nyáya philosophy. Beatitude is certainly attained by true knowledge of the objects soul and so forth. This very thing is repeated in the next aphorism. That which is to be abandoned [heya], its cause, its entire annihilation and its method attainable, having thoroughly known these four points of philosophy one attains Beatitude.

[It may be here objected that] it is useless to enunciate [among the forementioned categories] Doubt [Saṅśaya] and so forth, as separate categories; for Doubt [Saṅśaya] and so forth, being, according to the possibility, included, either in the instruments of knowledge [Pramáṇa] or in the objects [Prameya], are not different from them:—It is true, [but it is said that] these four*

* The four Vidyás are thus given: 1. Trayí, the triple veda; 2. Ánvíkshikí, logic and metaphysics; 3. Daṇḍaníti, the science of government! 4. Vártá, practical arts, such as agriculture, commerce, medicine, &c. See Sukraníti ch. 1. Śloka 64 onwards.

भा॰ निर्देशे यथावचनं विग्रहः । चार्थे द्वन्द्वः समासः । प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी, तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ । एतावन्तो विद्यमानार्थाः । एषामविपरीतज्ञानार्थमिहोपदेशः, सोऽयमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः । तच्चैतदुत्तरसूत्रेणानूद्यत इति । हेयं तस्य निर्वर्तकं हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग् बुद्ध्वा निःश्रेयसमधिगच्छति ।

Vidyás or sciences with their different methods are mentioned for the benefit of living beings; the fourth of which [Vidyás] is this Ánvíkshikí or Nyáyavidyá, the science including logic and metaphysics, its particular subjects being the categories doubt and so forth. This [Nyáyavidyá] would be the same with Adhyátmavidyá or the science of soul, just as the Upanishads, in case they [Doubt and so forth] were not separately enunciated; therefore, it has been set down as a separate science together with the categories, doubt and so forth. Now, Nyáya or a logical argument takes place neither for an unknown object, nor for what is decided, it takes place only for what is uncertain. So it is said: "Determination is the settling of a matter by dealing with both sides of the question, after having been in doubt:" The word Vimarśa [in the aphorism] means doubt; the two sides of a question give rise to a Nyáya or syllogism; Arthávadháraṇa means settling the truth of a matter. Doubt, therefore, consisting only in the sense of uncertainty of the mind about an object, and consequently being included in the category of the objects [Prameya] is enunciated as a separate category for the said reason.

KEŚAVA ŚÁSTRÍ.

*(To be continued.)*

तत्र संशयादीनां पृथग्वचनमनर्थकम् संशयादयो यथासंभवं प्रमाणेषु प्रमेयेषुचान्तर्भवन्तो न व्यतिरिच्यन्तइति, सत्यमेतत् इमास्तु चतस्रो-विद्याः पृथक् प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या। तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः। तेषां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्यात् यथोपनिषदः। तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते। तत्र नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते किं तर्हि संशयितेर्थे, यथोक्तं "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति," विमर्शः संशयः। पक्षप्रतिपक्षौ न्यायप्रवृत्तिः। अर्थावधारणं निर्णयस्तत्त्वज्ञानमिति। सचायं किंस्विदिति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः प्रमेयेन्तर्भवन्नेवमर्थं पृथगुच्यते।

## काशिकायाः

### सप्तमाध्यायस्य प्रथमः पादः ।

### युवोरनाकौ ॥ १ ॥

यु वु इत्येतयोरुत्सृष्टविशेषणयोरनुनासिकयुवोः प्रत्यययोर्ग्रहणं, तयोः स्थाने यथासङ्ख्यमन अक इत्येतावादेशौ भवतः । योरनः । वोरकः । नन्द्यादिभ्यो ल्युः । नन्दनः । रमणः । सायमादिभ्यष्ट्युट्युलौ तुट् । सायंतनः । चिरंतनः । ण्वुल्तृचौ । कारकः । हारकः । वासुदेवार्जुनाभ्यां वुन् । वासुदेवकः । अर्जुनकः । अनुनासिकयुवोरिति किम् । ऊर्णाया युस् । ऊर्णायुः । भुजिमृङ्भ्यां युक्त्युकौ । भुज्युर्मृत्युरिति । एवमादीनां हि युवोरनुनासिकत्वं न प्रतिज्ञायते, प्रतिज्ञानुनासिक्याः पाणिनीयाः । युवोरिति निर्देशाद् द्वन्द्वैकवद्भावपक्षे ऽनित्यमागमशासनमिति नुम् न क्रियते । नपुंसकलिङ्गता वा लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति न भवति । इतरेतरयोगपक्षे तु छान्दसो वर्णलोपो द्रष्टव्यः ॥

युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यत्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद्भवेदयम् ॥
द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं चेह समाश्रितम् ॥

### आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ २ ॥

आयन् एय् ईन् ईय् इय् इत्येते आदेशा भवन्ति यथासंख्यं फ ढ ख छ घ इत्येतेषां प्रत्ययादीनाम् । फ इत्येतस्यायनादेशो भवति । नडादिभ्यः फक् । नाडायनः । चारायणः । ढस्य एयादेशो भवति । स्त्रीभ्यो ढक् । सौपर्णेयः । वैनतेयः । खस्य ईनादेशो भवति । कुलात्खः । आढ्यकुलीनः । श्रोत्रियकुलीनः । छस्य ईयादेशो भवति । वृद्धाच्छः । गार्गीयः । वात्सीयः । घ इत्येतस्येयादेशो भवति । क्षत्राद्घः । क्षत्रियः । प्रत्ययग्रहणं किम् ।

फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते । आदिग्रहणं किम् । ऊरुदघ्नम् । जानुदघ्नम् । एते आयनादयः प्रत्ययोपदेशकालएव भवन्ति । कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति । तथा च घच्छौ चेति घचश्चित्करणमर्थवद्भवति । शङ्खः । षण्ढः *, इत्येवमादीनां हि उणादयो बहुलमिति बहुलवचनादादेशा न भवन्ति । च्छतेरीयङिति वा वचनं ज्ञापकं धातुप्रत्ययानामादेशाभावस्य † । एजेः खश् पदरुजविशस्पृशो घञ् इत्येवमादिषु तु इत्संज्ञया भवितव्यम् । तद्धितेषु हि खकारघकारयोरादेशवचनमवकाशवदितीत्संज्ञां बाधितुं नोत्सहते । आयनीनोर्नकारस्येत्संज्ञायां प्राप्तायां प्रतिविधातव्यं नित्कार्यं हि संभवति ॥

## झोऽन्तः ॥ ३ ॥

प्रत्ययग्रहणमनुवर्त्तते, आदिग्रहणं निवृत्तम् । प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति । कुर्वन्ति । सुन्वन्ति । चिन्वन्ति । अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै । जॄविशिभ्यां झच् । जरन्तो, वेशन्तः । प्रत्ययस्येत्येव । उज्झिता । उज्झितुम् । उज्झितव्यम् । अस्मिंश्चाप्यन्तादेशे कृते प्रत्ययाद्युदात्तत्वं भवति । तथा च झचश्चित्करणमर्थवद्भवति ॥

## अदभ्यस्तात् ॥ ४ ॥

अभ्यस्तादङ्गादुत्तरस्य झकारस्य अदित्ययमादेशो भवति । ददति । ददतु । दधति । दधतु । जक्षति । जक्षतु । जाग्रति । जाग्रतु । अन्तादेशापवादोयं जुसादेशेन तु बाध्यते । अददुः । अदधुः ‡ । अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवति ॥

## आत्मनेपदेष्वनतः ॥ ५ ॥

आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्यादित्ययमादेशो भवति । चिन्वते । चिन्वताम् । अचिन्वत । लुनते । लुनताम् ।

* शमेः खः षणो ढः शङ्खः षण्ढः, इति पाठः पुस्तकान्तरे ।

† धातुविहितप्रत्ययानामादेशा न भवन्तीति कुत्र चित्पाठः ।

‡ अजक्षुरजागरुरित्यधिकं पुस्तकान्तरे ।

अलुनत। आत्मनेपदेष्विति किम्। चिन्वन्ति। लुनन्ति। अनत इति किम्। च्यवन्ते। प्लवन्ते। नित्यत्वादत्र विकरणे कृते झोन्तादेशेन भवितव्यमित्यदादेशो न भवति। अनकारान्तेनाङ्गेन झकारविशेषणं किम्। इह मा भूत्। अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्ते॥

## शीङो रुट्॥ ६॥

शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति। शेरते। शेरताम्। अशेरत। रुडयं परादिः क्रियते। स यदि झकारस्यैव स्याददादेशो न स्यादित्यत एवायमादेशस्यागमो विधीयते। सानुबन्धग्रहणमयङ्लुगर्थम्। तेनेह न भवति। व्यतिशेश्यते॥

## वेत्तेर्विभाषा॥ ७॥

वेत्तेरङ्गादुत्तरस्य झादेशस्यातो विभाषा रुडागमो भवति। संविदते। संविद्रते। संविद्रताम्। संविदताम्। समविदत। समविद्रत। वेत्तिरिति लुग्विकरणस्येदं ग्रहणम्। इह मा भूत्। विन्ते। विन्दाते। विन्दते इति॥

## बहुलं छन्दसि॥ ८॥

छन्दसि विषये बहुलं रुडागमो भवति। देवा अदुह्र। गन्धर्वा अप्सरसो अदुह्र। दुहेर्लङि झकारस्यादादेशे कृते रुट्। लोपस्त आत्मनेपदेष्विति तकारलोपः। न च भवति। अदुह्रत। बहुलवचनादन्यत्रापि भवति। अदृश्रमस्य केतवः। ऋदृशोऽङि गुण इत्येतदपि बहुलवचनादेवात्र न भवति॥

## अतो भिस ऐस्॥ ९॥

अकारान्तादङ्गादुत्तरस्य भिस ऐसित्ययमादेशो भवति। वृक्षैः। प्लक्षैः। अतिजरसैः। जरामतिक्रान्तैरिति विग्रह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति। एकदेशविकृतमनन्यवद्भवतीति जरशब्दस्य जरसादेशः। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषेयम-

नित्या कष्टाय कमणइति निर्देशात् । अत इति किम् । अग्निभिः । वायुभिः । तपरकरणं किम् । खट्वाभिः । मालाभिः ॥

एत्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति ।
कृतेप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

अत इत्यधिकारो जसः शीति यावत् ॥

बहुलं छन्दसि ॥ १० ॥

छन्दसि विषये बहुलमैसादेशो भवति । अत इत्युक्तमनतोपि भवति नद्यैरिति । अतो न भवति । देवेभिः सर्वेभिः प्रोक्तमिति ॥

नेदमदसोरकोः ॥ ११ ॥

इदम् अदस् इत्येतयोरककारयोर्भिस ऐस भवति । एभिः । अमीभिः । अकोरिति किम् । इमकैः । अमुकैः । अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकं तन्मध्यपतितस्तद्ग्रहणेन गृह्यतइति । इदमदसोः कादिति नोक्तं, विपरीतोपि नियमः संभाव्येत इदमदसोरेव कादिति । ततश्चेह न स्यात् । सर्वकैः । विश्वकैः । इह च स्यादेव । एभिः । अमीभिः । प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम् * ॥

टाङसिङसामिनात्स्याः ॥ १२ ॥

अकारान्तादङ्गादुत्तरेषां टाङसिङसाम् इन आत् स्य इत्येते आदेशा भवन्ति यथासंख्यम् । टा इत्येतस्येनादेशो भवति । वृक्षेण । प्लक्षेण । ङसीत्येतस्य आत् । वृक्षात् । प्लक्षात् । ङसित्येतस्य स्यादेशो भवति । वृक्षस्य । प्लक्षस्य । अत इति किम् । सख्या । पत्या । अतिजरसिन अतिजरसादिति केचिदिच्छन्ति । यथा तु भाष्ये तथा नैतदिष्यतइति लक्ष्यते ॥

ङेर्यः ॥ १३ ॥

ङेरिति चतुर्थ्येकवचनस्य ग्रहणम् । अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य य इत्ययमादेशो भवति । वृक्षाय । प्लक्षाय । अत इत्येव । सख्ये । पत्ये ।

* ततश्चेहेत्यारभ्य निवृत्त्यर्थमित्यन्तः पाठः क्वचित्पुस्तके नास्ति ।

संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषेयमनित्या तेन दीर्घो भवति ॥

## सर्वनाम्नः स्मै ॥ १४ ॥

अकारान्तात्सर्वनाम्न उत्तरस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । यस्मै । कस्मै । तस्मै । अत इत्येव । भवते । अ-योत्रास्मै इत्यन्वादेशे ऽशादेशे एकादेशः प्राप्नोति तत्रान्तरङ्गत्वादेका-देशात्पूर्वं स्मैभावः क्रियते पश्चादेकादेश इति ॥

## ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

ङसि ङि इत्येतयोरकारान्तात्सर्वनाम्न उत्तरयोः स्मात् स्मिन् इत्येतावादेशौ भवतः । ङसीत्येतस्य स्मात् । सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् । कस्मात् । ङीत्येतस्य स्मिन् । सर्वस्मिन् । विश्व-स्मिन् । यस्मिन् । तस्मिन् । अन्यस्मिन् । अत इत्येव । भवतः । भवति । सर्वनाम्न इत्येव । वृक्षात् । वृक्षे ॥

## पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

पूर्वादिभ्यो नवभ्यः सर्वनाम्न उत्तरयोर्ङसिङ्योः स्मात् स्मिन् इत्ये-तावादेशौ वा भवतः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । परस्मा-त् । परात् । परस्मिन् । परे । अवरस्मात् । अवरात् । अवरस्मिन् । अ-वरे । दक्षिणस्मात् । दक्षिणात् । दक्षिणस्मिन् । दक्षिणे । उत्तरस्मात् । उत्तरात् । उत्तरस्मिन् । उत्तरे । अपरस्मात् । अपरात् । अपरस्मिन् । अपरे । अधरस्मात् । अधरात् । अधरस्मिन् । अधरे । स्वस्मात् । स्वात् । स्वस्मिन् । स्वे । अन्तरस्मात् । अन्तरात् । अन्तरस्मिन् । अन्तरे । नवभ्य इति किम् । त्यस्मात् । त्यस्मिन् ॥

## जसः शी ॥ १७ ॥

अकारान्तात्सर्वनाम्न उत्तरस्य जसः शीत्ययमादेशो भवति । सर्वे । विश्वे । ये । के । ते । दीर्घोच्चारणमुत्तरार्थम् । त्रपुणी । जतुनी ॥

## औङ आपः ॥ १८ ॥

आबन्तादङ्गादुत्तरस्यौङः शीत्ययमादेशो भवति । खट्वे तिष्ठतः । खट्वे पश्य । बहुराजे । कारीषगन्ध्ये । ङकारः सामान्यग्रहणार्थः । औटोऽपि ग्रहणं यथा स्यात् ।

औकारोऽयं शीविधौ ङिद्गृहीतो
ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चासंजनेऽस्मि-
न्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं
वर्णो यस्यास्तच्च विद्यात्तदादौ ।
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो
निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥

## नपुंसकाच्च ॥ १९ ॥

नपुंसकादङ्गादुत्तरस्य औङः शी इत्ययमादेशो भवति । कुण्डे तिष्ठतः । कुण्डे पश्य । यस्येति लोपः प्राप्तः ॥ श्यां प्रतिषेधो वक्तव्यः ॥ * ॥ इति न भवति । दधिनी । मधुनी । त्रपुणी । जतुनी ॥

## जश्शसोः शिः ॥ २० ॥

नपुंसकादङ्गादुत्तरयोर्जश्शसोः शि इत्ययमादेशो भवति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । दधीनि । मधूनि । त्रपूणि । जतूनि । जसा सहचरितस्य शसो ग्रहणादिह न भवति । कुण्डशो ददाति । वनशः प्रविशन्तीति ॥

## अष्टाभ्य औश् ॥ २१ ॥

अष्टाभ्य इति कृताकारोऽष्टशब्दो गृह्यते । तस्मादुत्तरयोर्जश्शसोरौशित्ययमादेशो भवति । अष्टौ तिष्ठन्ति । अष्टौ पश्य । कृताकारस्य ग्रहणं किम् । अष्ट तिष्ठन्ति । अष्ट पश्य । एतदेव कृतात्वस्य ग्रहणं ज्ञापकमष्टन आ विभक्तावित्यात्वविकल्पस्य । षड्भ्यो लुगित्यस्यायमपवादो ना-

प्राप्ते तस्मिन्निदमारभ्यते । यस्तु सुपो धातुप्रातिपदिकयोरिति तस्मि-न्प्राप्ते चाप्राप्ते चेति स न बाध्यते । अष्टपुत्रः । अष्टभार्य, इति । तदन्तग्रहणमत्रेष्यते । परमाष्टौ । उत्तमाष्टौ । प्रियाष्टान इत्यत्रात्व-स्याभावादौशत्वं न भवति ॥

### षड्भ्यो लुक् ॥ २२ ॥

षट्संज्ञकेभ्य उत्तरयोर्जश्शसोर्लुग्भवति । षट् तिष्ठन्ति । षट् पश्य । पञ्च । सप्त । नव । दश । षट्प्रधानात्तदन्तादपि भवति । परमषट् । उत्तमषट् । यत्र तूपसर्जनं षट् ततो न भवति । प्रियषषः, प्रियपञ्चान इति ॥

### स्वमोर्नपुंसकात् ॥ २३ ॥

सु अम् इत्येतयोर्नपुंसकादुत्तरयोर्लुग्भवति । दधि तिष्ठति । दधि पश्य । मधु तिष्ठति । मधु पश्य । त्रपु । जतु । तद्ब्राह्मणकुलमित्यत्र लुका त्यदाद्यत्वं बाध्यते पूर्वविप्रतिषेधेन नित्यत्वाद्वा । लुको हि निमित्तमतोमिति लक्षणान्तरेण निहन्यते न पुनस्त्यदाद्यत्वेनैव, यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति ॥

### अतोऽम् ॥ २४ ॥

अकारान्तान्नपुंसकादुत्तरयोः स्वमोरमित्ययमादेशो भवति । कुण्डं तिष्ठति । कुण्डं पश्य । वनम् । पीठम् । मकारः कस्मान्न क्रियते । दीर्घत्वं प्राप्नोति ॥

### अद्ड् डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतरादिभ्यः परयोः स्वमोरद्ड् इत्ययमादेशो भवति । कतरत्तिष्ठति । कतरत्पश्य । कतमत्तिष्ठति । कतमत्पश्य । इतरत् । अन्यतरत् । अन्यत् । पञ्चभ्य इति किम् । नेमं तिष्ठति । नेमं पश्य । डित्करणं किम् । कतरत्तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो मा भूत् । इह तु कतरत्पश्येति स्थानिवद्भावादमि पूर्वत्वेनापि सिद्ध्यति । एवं तर्हि तकारादेश एव कस्मान्न विधीयते, हे कतरदिति संबुद्धिलोपो मा भूत् ।

अपृक्तश्चेदमो दोषौ निवृत्ते इतरादिषु ।
अद्डित्त्वादुतरादीनां न लोपो नापि दीर्घता ॥

नेतराच्छन्दसि ॥ २६ ॥

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषये अद्डादेशो न भवति । इतरमितरमण्डमजायत । वार्त्रघ्नमितरम् । छन्दसीति किम् । इतरत्काष्ठम् । इतरत्कुड्यम् । अतोमित्यस्मादनन्तरमितराच्छन्दसीति वक्तव्यं नेतराच्छन्दसीति वचनं योगविभागार्थम् ॥ एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते ॥ एकतरं तिष्ठति । एकतरं पश्येति ॥

युष्मदस्मद्भ्यां ङसो ऽश् ॥ २७ ॥

युष्मदस्मदित्येताभ्यामुत्तरस्य ङसो ऽशित्ययमादेशो भवति । तव स्वम् । मम स्वम् । शित्करणं सर्वादेशार्थम् । अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात् ततश्च योचीत्येतच्च स्यात् ॥

ङे प्रथमयोरम् ॥ २८ ॥

ङे इत्यविभक्तिको निर्देशः । ङे इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथमाद्वितीययोर्युष्मदस्मद्भ्यामुत्तरयोरमित्ययमादेशो भवति । तुभ्यं दीयते । मह्यं दीयते । प्रथमयोः । त्वम् । अहम् । युवाम् । आवाम् । यूयम् । वयम् । त्वाम् । माम् । युवाम् । आवाम् ॥

शसो न ॥ २९ ॥

युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । युष्मान् ब्राह्मणान् । अस्मान् । ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान्कुलानि * ॥

भ्यसो भ्यम् ॥ ३० ॥

युष्मदस्मद्भ्यामुत्तरस्य भ्यसो भ्यमित्ययमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते । भ्यमादेशे कृते शेषे लोपे च बहुवचने झल्ये-

* तस्माच्छसो नः पुंसीति सिद्धे स्त्रीनपुंसकार्थं वचनम् । अलिङ्गे वा युष्मदस्मदी । इत्यधिकं पुस्तकान्तरे ।

दित्येत्वं प्राप्नोति । तदङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति न भवति । के चित्पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति । येषां तु शेषे लोपष्टिलोपस्तेषामभ्यमादेश एव । उदात्तनिवृत्तिस्वरश्चादेरेव भवति ॥

## पञ्चम्या अत् ॥ ३१ ॥

पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य अदित्ययमादेशो भवति । युष्मद्गच्छन्ति । अस्मद्गच्छन्ति ॥

## एकवचनस्य च ॥ ३२ ॥

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्यादित्ययमादेशो भवति । त्वद्गच्छन्ति । मद्गच्छन्ति ॥

## साम आकम् ॥ ३३ ॥

साम इति षष्ठीबहुवचनमागतसुट्कं गृह्यते । तस्य युष्मदस्मद्भ्यामुत्तरस्याकमित्ययमादेशो भवति । युष्माकम् । अस्माकम् । अथ किमर्थमागतसुट्को गृह्यते । नह्यादेशविधानकाले सुड्विद्यते । तस्यैव तु भाविनः सुटो निवृत्त्यर्थम् । आदेशे कृते हि शेषे लोपे युष्मदस्मदोरकारान्तत्वात्सुट् प्राप्नोति । स स्थानिन्यन्तर्भूतत्वान्निवर्तते । दीर्घोच्चारणं सवर्णदीर्घार्थम् । अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति । तत्सामर्थ्यमेत्वं प्रति भविष्यतीति । अकारकरणमेत्वनिवृत्त्यर्थमिति । अतो गुणे पररूपत्वं स्यात् ॥

## आत औ णलः ॥ ३४ ॥

आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति । पपौ । तस्थौ । ग्लौ । मम्लौ । अत्रात्वमेकादेशः स्थानिवद्भावो द्विर्वचनमित्यनेन क्रमेण कार्याणि क्रियन्ते । एकादेशादनवकाशत्वादात्वं द्विर्वचनादपि परत्वादेकादेश इति ॥

## तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥

तु हि इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम् । जीवताद्भवान् । जीवतात्त्वम् । जीवतु भवान् । जीव त्वम् । ङित्करणं

गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ्भवति । ङित्त्वाच्चास्य स्थानिवद्भावात्पित्त्वं प्राप्नोति तन्निवर्त्तते, ङिच्च पिन्न भवति । तेन ब्रुव ईडिति ब्रूतात्भवानितीण् न भवति । आशिषीति किम् । ग्रामं गच्छतु भवान् । गच्छ त्वम् ।

नातङि ङित्त्वं संक्रमकृत्स्यादन्त्यविधिश्चेत्तच्च तथा न ।
हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥
नातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः ।
न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः ॥

## विदेः शतुर्वसुः ॥ ३६ ॥

विद ज्ञानइत्येतस्माद्धातोरुत्तरस्य शतुर्वसुरादेशो भवति । विद्वान् । विद्वांसौ । विद्वांसः । स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणं वसोः संप्रसारणमित्यत्र क्वसोरपि सामान्यग्रहणार्थम् । एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्येतदपि न भवति । तथा सत्युकारकरणमनर्थकं स्यात् । अन्यतरस्यांग्रहणं के चिदनुवर्त्तयन्ति । विदन् । विदन्तौ । विदन्तः ॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य ल्यबित्ययमादेशो भवति । प्रकृत्य । प्रहृत्य । पार्श्वतःकृत्य । नानाकृत्य । द्विधाकृत्य । समासइति किम् । कृत्वा । हृत्वा । अनञ्पूर्वेइति किम् । अकृत्वा । अहृत्वा । परमकृत्वा । उत्तमकृत्वा । अनजिति हि नञो ऽन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते । तेन नञ् अनव्ययं चानञ् न भवति । स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति । अथ वा समासइति निर्द्धारणे सप्तमी । तेन क्त्वान्तः समासएव परिगृह्यते । स च येन विधिस्तदन्तस्येत्यनेन तदन्तविधिना, न तु कृद्ग्रहणे गतिकारकपूर्वस्यापीति । तथा चानञ्पूर्वइत्युच्यते । गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्गएव नास्ति । नञ्न गतिर्न च कारकमिति । प्रधाय प्रस्थायेत्यादिषु हिप्रभृतीनन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधतएवेति ज्ञापितम् ॥

## क्त्वापि छन्दसि ॥ ३८ ॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययमादेशो भवति अपिशब्दाल्ल्यबपि भवति छन्दसि विषये । कृष्णं वासो यजमानं परिधापयित्वा । प्रत्यञ्चमर्कं प्रत्यर्पयित्वा । ल्यबपि भवति । उद्धृत्य जुहोति । वा छन्दसीति नोक्तं सर्वोपाधिव्यभिचारार्थम् । तेनासमासे ल्यब्भवति । अर्च्य तान् देवान् गतः । छन्दोधिकार आज्जसेरसुगिति यावत् * ॥

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥

छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्ण आ आत् शे या डा ड्या याच् आल् इत्येते आदेशा भवन्ति । सु । अनृक्षरा ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते ॥ सुपां सुपो भवन्तीति वक्तव्यम् ॥ * ॥ धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते ॥ तिङां तिङो भवन्तीति वक्तव्यम् ॥ * ॥ चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । लुक् । आर्द्रे चर्मन् । लोहिते चर्मन् । चर्मणीति प्राप्ते । हविर्द्धाने † यत्सुन्वन्ति तत्सामिधेनीरन्वाह । यस्मिन्सुन्वन्ति तस्मिन्सामिधेनीरिति प्राप्ते । पूर्वसवर्णः । धीती । मती । सुष्टुती । धीत्या मत्या सुष्टुत्या इति प्राप्ते । आ । उभा यन्तारौ । उभौ यन्तारौ इति प्राप्ते । आत् । न ताद्ब्राह्मणाद् निन्दामि । न तान् ब्राह्मणानिति प्राप्ते । शे । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । यूयं वयमिति प्राप्ते । यूयादेशो वयादेशश्च छान्दसत्वाच भवति । या । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते । डा । नाभा पृथिव्याम् । नाभौ पृथिव्यामिति प्राप्ते । ड्या । अनुष्ठ्या च्यावयतात् । अनुष्टुभेति प्राप्ते । याच् । साधुया । साध्विति सोर्लुकि प्राप्ते । आल् । वसन्ता यजेत । वसन्तइति प्राप्ते ॥ इयाडियाजीकाराणामुपसंख्यानम् ॥ * ॥ इया । उर्विया परिधानम् । दार्विया । उरुणा दारुणेति प्राप्ते । डियाच् । सुक्षेत्रिया । सुगात्रिया । सुक्षेत्रिणा सुगात्रिणेति

* वा छन्दसीत्यारभ्य यावदित्यन्तः पाठः कुत्रचित्पुस्तके ऽस्ति ।

† हविर्धानायेति पाठान्तरम् ।

प्राप्ते। ईकारः। दृतिं न शुष्कं सरसी शयानम्। सरसि शयानमिति प्राप्ते॥ आङ्याजयारामुपसंख्यानम्॥ *॥ आङ्। प्रबाहवा। प्रबाहुनेति प्राप्ते। अयाच्। स्वप्नया सचसेवनम्। स्वप्नेनेति प्राप्ते। अयार्। सिन्धुमिव नावया। नावेति प्राप्ते*॥

## अमो मश्॥ ४०॥

अम् इति मिबादेशो गृह्यते। तस्य छन्दसि विषये मशादेशो भवति। वधीं वृत्रम्। क्रमीं वृक्षस्य शाखाम्†। लुङि बहुलं छन्दस्यमाङ्योगेपीत्यडागमाभावः। शित्करणं सर्वादेशार्थम्। मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्॥

## लोपस्त आत्मनेपदेषु॥ ४१॥

आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति। देवा अदुह्र। गन्धर्वाप्सरसो अदुह्र। अदुहतेति प्राप्ते। दुहामश्विभ्यां पयो अघ्न्येयम्। दुग्धामिति प्राप्ते। दक्षिणतः शये। शेतइति प्राप्ते। अपीत्यधिकारान्न भवति। तत्र आत्मानमनृतं कुरुते। आत्मनेपदेष्विति किम्। वत्सं दुहन्ति कलशं चतुर्बिलम्॥

## ध्वमो ध्वात्॥ ४२॥

छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति। अन्तरेवोष्माणं वारयध्वात्। वारयध्वमिति प्राप्ते॥

## यजध्वैनमिति च॥ ४३॥

यजध्वमित्येतस्य एनमित्येतस्मिन्परतो मकारलोपो निपात्यते वकारस्य च यकारश्छन्दसि विषये। यजध्वैनं प्रियमेधाः। यजध्वमेनमिति प्राप्ते॥

---

* अयारिति रेफ उपोत्तमं रितीत्युपोत्तमस्योदात्तार्थः। अधिकोयं पाठ एकस्मिन् पुस्तके।

† अवधिषमक्रमिषमिति प्राप्ते। इत्यधिकं पुस्तकान्तरे।

## तस्य तात् ॥ ४४ ॥

तशब्दस्य लोट्मध्यमपुरुषबहुवचनस्य स्थाने तादित्ययमादेशो भवति । गात्रंगात्रमस्या नूनं कृणुतात् । कृणुतेति प्राप्ते । ऊवध्ये गोहं पार्थिवं खनतात् । खनतेति प्राप्ते । अस्मारथः संसृजतात् । संसृजतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते ॥

## तप्तनप्तनथनाश्च ॥ ४५ ॥

तस्येति वर्त्तते । छन्दसि विषये तस्य स्थाने तप् तनप् तन थन इत्येते आदेशा भवन्ति । तप् । शृणोत ग्रावाणः । शृणुतेति प्राप्ते । सुनोत । सुनुतेति प्राप्ते । तनप् । संवरत्रा दधातन । धत्तेति प्राप्ते । तन । जुजुष्टन । जुषतेति प्राप्ते । छान्दसत्वात् श्लुः । थन । यदिष्ठन । यदिच्छतेति प्राप्ते । पित्करणमङित्त्वार्थम् ॥

## इदन्तो मसि ॥ ४६ ॥

छन्दसि विषये मसित्ययं शब्द इकारान्तो भवति । मसः सकारान्तस्य इकारागमो भवति स च तस्यान्तो भवति, तद्ग्रहणेन गृह्यतइत्यर्थः । पुनस्त्वां दीपयामसि । दीपयाम इति प्राप्ते । शलभं भञ्जयामसि । भञ्जयाम इति प्राप्ते । त्वयि रात्रिं वासयामसि । वासयाम इति प्राप्ते ॥

## क्त्वो यक् ॥ ४७ ॥

क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये । दत्वाय सविता धियः । दत्वेति प्राप्ते । क्त्वापिच्छन्दसीत्यस्यानन्तरमिदं कस्मान्नोच्यते । समासइति तत्रानुवर्त्तते ॥

## इष्ट्वीनमिति च ॥ ४८ ॥

इष्ट्वीनमित्ययं शब्दो निपात्यते छन्दसि विषये । यजेः क्त्वाप्रत्ययान्तस्य ईनमादेशोन्त्यस्य निपात्यते । इष्ट्वीनं देवान् । इष्ट्वा देवानिति प्राप्ते ॥ पीत्वीनमित्यपीष्यते ॥ चकारस्यानुक्तसमुच्चयार्थत्वात्सिद्धम् ॥

## स्नात्व्यादयश्च ॥ ४९ ॥

स्नात्वी इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये। स्नात्वी मलादिव। स्नात्वेति प्राप्ते। पीत्वी सोमस्य वावृधे। पीत्वेति प्राप्ते। प्रकारार्थोऽयमादिशब्दः॥

## आज्जसेरसुक्॥ ५०॥

अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये। ब्राह्मणासः पितरः सोम्यासः। ब्राह्मणाः सोम्या इति प्राप्ते। ये पूर्वासो य उपरास इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानाच्छीभावः प्राप्तः। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न भवति॥

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि॥ ५१॥

छन्दसीत्यतः प्रभृति निवृत्तम्। अश्व क्षीर वृष लवण इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति। अश्वस्यति वडवा। क्षीरस्यति माणवकः। वृषस्यति गौः। लवणस्यत्युष्ट्रः। आत्मप्रीताविति किम्। अश्वीयति। क्षीरीयति। वृषीयति। लवणीयति॥ अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम्॥ * ॥ क्षीरलवणयोर्लालसायामिति वक्तव्यम्॥ * ॥ तृष्णातिरेको लालसा। अन्यत्रात्मप्रीतावपि न भवति। अपर आह॥ सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः॥ * ॥ दध्यस्यति, मध्वस्यति, इत्येवमाद्यर्थम्। अपर आह॥ सुग्वक्तव्यः॥ * ॥ दधिस्यति, मधुस्यति, इत्येवमाद्यर्थम्॥

## आमि सर्वनाम्नः सुट्॥ ५२॥

आदिति वर्त्तते। अवर्णात्सर्वनाम्न उत्तरस्यामः सुडागमो भवति। सर्वेषाम्। विश्वेषाम्। येषाम्। तेषाम्। सर्वासाम्। यासाम्। तासाम्। आदित्येव। भवताम्। आमीति षष्ठीबहुवचनं गृह्यते, न ङेराम् नद्याम्नीभ्य इति, तस्य हि परत्वादाड्याट्स्याटो भवन्ति। यश्च घादामुः, आमश्च लिटि न तौ सर्वनाम्नः स्तः। सानुबन्धकत्वाविति वा न गृह्येते। आमीति सप्तमीनिर्द्देश उत्तरार्थः। इह तु सर्वनाम्न इति पञ्चमीनिर्द्देशात्तस्मादित्युत्तरस्येति षष्ठीप्रक्लृप्तिर्भविष्यति॥

## त्रेस्त्रयः ॥ ५३ ॥

त्रि इत्येतस्य आमि परे त्रय इत्ययमादेशो भवति। त्रयाणाम् ॥ त्रीणामित्यपि छन्दसीष्यते ॥ त्रीणामपि समुद्राणामिति ॥

## ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति। ह्रस्वान्तात्तावत्। वृक्षाणाम्। प्लक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्।* नद्यन्तात्। कुमारीणाम्। किशोरीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्। लक्ष्मीणाम्। ब्रह्मबन्धूनाम्। वीरबन्धूनाम्। आबन्तात्। खट्वानाम्। मालानाम्। बहुराजानाम्। कारीषगन्ध्यानाम् ॥

## षट्चतुर्भ्यश्च ॥ ५५ ॥

षट्संज्ञकेभ्यश्चतुःशब्दाच्चोत्तरस्यामो नुडागमो भवति। षण्णाम्। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। चतुर्णाम्। रेफान्तायाः संख्यायाः षट्संज्ञा न विहिता। षड्भ्यो लुगिति लुग् मा भूत्। बहुवचननिर्देशादत्र संख्याप्रधानस्य ग्रहणं भवति। परमषण्णाम्। परमपञ्चानाम्। परमसप्तानाम्। परमचतुर्णाम्। उपसर्जनीभूतायास्तु संख्याया न भवति। प्रियषषाम्। प्रियपञ्चाम्। प्रियचतुरामिति ॥

## श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥

श्री ग्रामणी इत्येतयोश्छन्दसि विषये आमो नुडागमो भवति। श्रीणामुदारो धरुणो रयीणाम्। अप्यत्र सूतग्रामणीनाम्। श्रीशब्दस्य वामीति विकल्पेन नदीसंज्ञा तत्र नित्यार्थं वचनम्। सूतग्रामणीनामिति यदा सूताश्च ते ग्रामण्यश्च सूतग्रामण्यो भवन्ति तदर्थमिदं वचनम्। यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि। सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा ह्रस्वादित्येव सिद्धम् ॥

## गोः पादान्ते ॥ ५७ ॥

गो इत्येतस्मादृक्पादान्ते वर्त्तमानादुत्तरस्यामो नुडागमो भवति।

* हर्तॄणामित्यपि बहुषु पुस्तकेष्वस्ति।

विद्माहि त्वा सत्पतिं शूरगोनाम् । पादान्तइति किम् । गवां गोत्रमुदसृजो यदङ्गिरः । सर्वे विधयश्छन्दसि विकल्प्यन्तइति पादान्तेपि क्वचिन्न भवति । हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥

## इदितो नुम् धातोः ॥ ५८ ॥

इदितो धातोर्नुमागमो भवति । कुडि । कुण्डिता । कुण्डितुम् । कुण्डितव्यम् । हुडि । हुण्डिता । हुण्डितुम् । हुण्डितव्यम् । कुण्डा । हुण्डा । इदित इति किम् । पचति । पठति । अयं धातूपदेशावस्थायामेव नुमागमो भवति, कुण्डा हुण्डेति गुरोश्च हल इत्यकारप्रत्ययो यथा स्यात् । तथाहि धिन्विकृण्व्योर चेति अन्त्ययविधावेव नुमनुषक्तयोर्ग्रहणम् । धातुग्रहणं चेह क्रियते धातूपदेशकालएव नुमागमो यथा स्यादित्येवमर्थम् । तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते । अमंस्तेत्येवमादौ हि हनः सिजिति कित्त्वविधानसामर्थ्यान्नकारलोपो न भवति । मन्तेत्यत्राप्यसिद्धवदत्राभादिति टिलोपस्यासिद्धत्वान्नलोपो न भवति इह कस्मान्न भवति । भेत्ता छेत्तेति । इरितां समुदायस्येत्संज्ञेतीदित्त्वं नास्ति । अवयवशो पीत्संज्ञायां सत्यां गोः पादान्तइतोन्तग्रहणमनुवर्त्तयितव्यम् । तेनान्तेदितो धातवो गृह्यन्ते ॥

## शे मुचादीनाम् ॥ ५९ ॥

शे प्रत्यये परतो मुचादीनां नुमागमो भवति । मुच्लृ । मुञ्चति । लुप्लृ । लुम्पति । विद्लृ । विन्दति । लिपि । लिम्पति । सिच । सिञ्चति । कृती । कृन्तति । खिद । खिन्दति । पिश । पिंशति । शे इति किम् । मोक्ता । मोक्तुम् । मोक्तव्यम् । मुचादीनामिति किम् । तुदति । नुदति ॥ शे तृम्फादीनामुपसंख्यानं कर्त्तव्यम् ॥ * ॥ के पुनस्तृम्फादयः । तृफ तृम्फ तृप्तौ । दृफ दृम्फ उत्क्लेशे । गुफ गुम्फ ग्रन्थे । उभ उम्भ पूरणे । शुभ शुम्भ शोभार्थे, इत्यत्र ये सानुषङ्गास्तृम्फादय,स्तेषामनिदितां हल उपधायाः क्ङितीत्यनुनासिकलोपे कृते नुम्विधीयते । स च विधानसामर्थ्यान्न लुप्यते । तृम्फति । दृम्फति । गुम्फति । उम्भति । शुम्भति । ये तु निरनुषङ्गास्तेषां तृफति दृफति गुफति उभति शुभतीत्येवं भवति ॥

## मस्जिनशोर्झलि ॥ ६० ॥

मस्जि नशि इत्येतयोरङ्गयोर्झलादौ प्रत्यये नुमागमो भवति । मङ्क्ता । मङ्क्तुम् । मङ्क्तव्यम् । नंष्टा । नंष्टुम् । नंष्टव्यम् । झलीति किम् । मज्जनम् । नशिता ॥ मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम् ॥ मग्नः । मग्नवान् ॥

## रधिजभोरचि ॥ ६१ ॥

रधि जभि इत्येतयोरजादौ प्रत्यये नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्धो वर्त्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भंजम्भम् । जम्भो वर्त्तते । परापि सती वृद्धिर्नुमा बाध्यते नित्यत्वात् । अचीति किम् । रद्धा । जब्धम् ॥

## नेट्यलिटि रधेः ॥ ६२ ॥

इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति । रधिता । रधितुम् । रधितव्यम् । इटीति किम् । रन्धनम् । रन्धकः । अलिटीति किम् । ररन्धिव । ररन्धिम । नुमि कृते संयोगान्तत्वादसंयोगाल्लिट्कदिति कित्त्वं नास्तीति नलोपो न भवति । अथ क्वसौ कथं भवितव्यं, रेधिवानिति । कथमेत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते ततो नुमागमस्तस्यौपदेशिककित्त्वाश्रयो लोपः । अथ इटि लिटीत्येवं नियमः कस्मान्न क्रियते लिट्येवेटि नान्यत्रेति । विपरीतमप्यवधारणं संभाव्यते इत्येव लिटि नान्यत्रेति । तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव ॥

## रभेरशब्लिटोः ॥ ६३ ॥

रभेरङ्गस्य शब्लिड्वर्जिते ऽजादौ प्रत्यये परतो नुमागमो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्त्तते । अशब्लिटोरिति किम् । आरभते । आरेभे । अचीत्येव । आरब्धा ॥

## लभेश्च ॥ ६४ ॥

लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति । लम्भयति ।

लम्भकः । साधुलम्भी । लम्भंलम्भम् । लम्भो वर्त्तते । अशब्टिटोरित्येव । लभते । लेभे । अचीत्येव । लब्धा । लभेश्च पृथग्योगकरणमुत्तरार्थम् ॥

## आङो यि ॥ ६५ ॥

आङ उत्तरस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति । आलम्भ्या गौः । आलम्भ्या वडवा । प्राक्प्रत्ययोत्पत्तेर्नुमि कृते विहतमदुपधत्वमिति ऋहलोर्ण्यदिति ण्यत्प्रत्ययस्तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरत्वेनान्तस्वरितत्वं भवति । यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात् । आङ इति किम् । लभ्यः * । कथमग्निष्टोम आलभ्य इति । सर्वे विधयश्छन्दसि विकल्प्यन्ते । अथ वा आलभ्य इत्यत्र नुमि कृते ऽनुपङ्गलोपः क्रियते ॥

## उपात्प्रशंसायाम् ॥ ६६ ॥

उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति । उपलम्भ्या भवता विद्या । उपलम्भ्यानि धनानि । ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव । प्रशंसायामिति किम् । उपलभ्यमस्माद्वृषलात्किं चित् । पोरदुपधत्वाद्यत्प्रत्ययान्तमिदम् ॥

## उपसर्गात्खल्घञोः ॥ ६७ ॥

उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । घञि । प्रलम्भो, विप्रलम्भः । सिद्धे सत्यारम्भो नियमार्थः । उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र । ईषल्लभः । लाभो वर्त्तते ॥

## न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥

सु दुरित्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य लभेः खल्घञोः परतो नुमागमो भवति । सुलभम् । दुर्लभम् । घञि । सुलाभो दुर्लाभः । केवलाभ्यामिति किम् । सुप्रलम्भः । दुष्प्रलम्भः । सुदुर्भ्यामिति

* अदुपधत्वाद्यत्प्रत्ययान्तमेतत् । योति किम् । आलब्धा । इत्यधिकमेकस्मिन्पुस्तके ।

तृतीयां मत्वा केवलग्रहणं क्रियते । पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः । अतिसुलभमित्यत्र कर्म्मप्रवचनीयत्वादतेः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः । यदा त्वतिशब्दो न कर्मप्रवचनीयस्तदा नुम्भवत्येवातिसुलम्भ इति । पञ्चमीनिर्द्दिशपक्षेप्येवमर्थं केवलग्रहणं कर्त्तव्यम् ॥

## विभाषा चिण्णमुलोः ॥ ६९ ॥

चिण् णमुल् इत्येतयोर्विभाषा लभेर्नुम्भवति । अलाभि । अलम्भि । लाभम् २ । लम्भम् २ । व्यवस्थितविभाषा चेयं, तेनानुपसृष्टस्य विकल्प, उपसृष्टस्य नित्यं नुम्भवति । प्रालम्भि । प्रलम्भम् ॥

## उगिदचां सर्वनामस्थानेऽधातोः ॥ ७० ॥

उगितामङ्गानां धातुवर्जितानामञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति । भवतु । भवान् । भवन्तौ । भवन्तः । ईयसुन् । श्रेयान् । श्रेयांसौ । श्रेयांसः । शतृ । पचन् । पचन्तौ । पचन्तः । अञ्चतेः । प्राङ् । प्राञ्चौ । प्राञ्चः । उगिदचामिति किम् । दृषत् । दृषदौ । दृषदः । सर्वनामस्थानइति किम् । भवतः पश्य । श्रेयसः पश्य । अञ्चतिग्रहणं नियमार्थम्, अञ्चतेरेव धातोरन्यस्य मा भूत् । उखास्रत् । पर्णध्वत् । अधातोरिति किम् । अधातुभूतपूर्वस्य यथा स्यात् । गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः, गोमान् । अत्र हि धातुत्वादञ्चतिग्रहणाच्च स्यात् ॥

## युजेरसमासे ॥ ७१ ॥

युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति । युङ् । युञ्जौ । युञ्जः । असमासइति किम् । अश्वयुक् । अश्वयुजौ । अश्वयुजः । युजेरितीकारनिर्द्देशाद् युज समाधावित्यस्य ग्रहणं न भवति । युजमापन्ना ऋषयः ॥

## नपुंसकस्य झलचः ॥ ७२ ॥

नपुंसकस्य झलन्तस्याजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति । उदश्विन्ति । शकृन्ति । यशांसि । पयांसि । अजन्तस्य । कु-

षडानि। वनानि। त्रपूणि। जतूनि। नपुंसकस्येति किम्। अग्निचिद्ब्राह्मणाः। झलच इति किम्। बहुपुरि। बहुधुरि। विमलदिवि। चत्वारि। अहानि। उगितो झलन्तस्य नपुंसकस्य परत्वादनेनैव नुम्भवति। श्रेयांसि भूयांसि कुर्वन्ति। कुर्षन्ति ब्राह्मणकुलानि॥ बहूर्जि प्रतिषेधो वक्तव्यः॥ * ॥ बहूर्जि ब्राह्मणकुलानि॥ अन्त्यात्पूर्वं नुममेक इच्छन्ति॥ बहूर्न्जि ब्राह्मणकुलानि॥

## इकोऽचि विभक्तौ॥ ७३॥

इगन्तस्य नपुंसकस्याङ्गस्याजादौ विभक्तौ नुमागमो भवति। त्रपुणी। जतुनी। तुम्बुरुणी। त्रपुणे। जतुने। तुम्बुरुणे। इक इति किम्। कुण्डे। पीठे। अज्यहणमुत्तरार्थम्। यद्येवं, तत्रैव कर्त्तव्यम्। इह तु करणे एतत्प्रयोजनं हे त्रपो इत्यत्र नुम् मा भूदिति, न ङिसंबुद्ध्योरिति नलोपप्रतिषेधः स्यात्। ननु च न लुमताङ्गस्येति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति। एतदेवाज्ग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधोच न भवतीति। तथा च संबुद्धिगुणः क्रियते। विभक्ताविति किम्। तौम्बुरवं चूर्णम्।

इकोचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणो पि लुप्ते किं न भविष्यति॥
णयात्वं तिसृभावश्च व्यवधानाच्चमा अपि।
नुड् वाच्य उत्तरार्थं तु इह किं चित्त्रपो इति॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य॥

॥ चतुर्दशस्तबकावशेषः॥

एवं सति मदकलकलविङ्कीकुलकलकमनीयझङ्कारिकङ्कणमुखरकरकमलमुन्नीय भुजमृणालदण्डमुद्भ्रन्तुमुट्टषिडतहृदयाभिरबलाभिरभिरम्यमभितोऽभितोऽभिहन्यमानः प्रणयितमाबलाबलात्कारसुखचमत्कारकारणकरणकलहे पराजयं जयं मन्यमानो मानोचितं चरितं

नाचरन्निव सावहित्थमित्थमिन्दुमुखो विग्लानिमिवाभिनयन् यदि क्षणमुपरतपरतरप्रभावो बभूव ॥ २१५ ॥

मदकलानां मत्तानां कलविङ्कीनां चटकस्त्रीणां कुलस्य कलात् मधुरास्फुटध्वनितोऽपि कमनीयभङ्कारवता कङ्कणेन मुखरं करकमलम् उन्नीय उत्थाप्य । कथंभूतम्, भुज एव मृणालदण्डो यस्य तत् । अभिरम्यं यथा स्यात् तथा हन्यमानः सन्, प्रणयितमा या अबला तत्कर्तृको बलात्कार एव सुखचमत्कारस्य कारणं यत्र तथाभूते रणकलहे पराजयमेव जयं मन्यमान इति, स्वपराजये सत्येव तद्बलात्कारसौलभ्यात्, अत एव मानोचितमहंकारयोग्यं चरितं पूर्ववद् बलात्कारं न कुर्वन् । सावहित्थमिति निजासामर्थ्यज्ञापनम्, विग्लानिमिति विशिष्टा स्वग्लानिरेव बहुखेलनश्रमोद्भूता तत्र हेतुरिति ज्ञापयवित्यर्थः । सर्वेषामेव कृत्रिमत्वात् इवकारः ॥ २१५ ॥

तदा ।

काचिद्वंशीमपहृतवती कापि पानीययन्त्रं
काचित् पौष्पं धनुरनुपमं बाणजालं च काचित् ।
अप्यन्यस्यां कुतुककलया मण्डनान्याहरन्त्यां
भ्रूभङ्गेन स्मितसुहृचिना राधिका बाधिकासीत् ॥ २१६ ॥

भ्रूभङ्गेनेति, मण्डनोत्तारणनिषेधकं स्वभ्रूभङ्गं श्रीकृष्णं दर्शयित्वा तस्मै महापराजयदुःखदानार्थमिव स्वकारुण्यं व्यञ्जयति स्म ॥ २१६ ॥

ततस्तु ।

स्वाञ्चलेन घुसृणादिकपङ्कान्
स्वेदवारि च शनैः क्षपयन्त्या ।
यत् पपे मधुरिमास्य दृशा त-
द्वीरपानमिव जातममुष्याः ॥ २१७ ॥

स्वाज्चलेनेत्यादि, स्वेन पराजिते प्रतियोद्धरि स्वयमेव कृपया तत्संधुक्षणमयपरिचरणादिकं तस्यैवातिलज्जाविडम्बनकरमिति प्रकटार्थो व्यञ्जितः, वस्त्वर्थश्च तन्मिषेण निःशङ्कतया स्वमनोरथसाफल्यसंपादनमेव । भूते भविष्यति वा रणे योधानां मध्वादिपानं वीरपानम् ॥ २१७ ॥

पुनश्च ।

आकृष्य सख्याः करपद्मकोशात्
ताम्बूलवीटीः स्वयमाशयन्ती ।
भ्रूभङ्गिसङ्गीङ्गितविज्ञया तं
सा श्यामयावीविजदात्मनाथम् ॥ २१८ ॥

अवीविजत् बीजनं कारयामास ॥ २१८ ॥

एतस्मिन्नेवावसरे स रेणुरूषिततिरश्चीनीकृतावटु वटुरवलोक्य विरचितोत्साहसाहसिक्यमुच्चैः स्वरं जगर्ज गर्जदम्बुवाह इव ॥ २१९ ॥

स वटुः । रेणिवति क्रियाविशेषणम् । विरचित उत्साहो यत्र तथाभूतं साहसिक्यं सहसा प्रवर्तनं यत्र तद्यथा स्यात् तथा ॥ २१९ ॥

ही ही जितमस्माभिर्यदियं सर्वोत्तमानन्तमाहात्म्या भो वयस्यवृषभा वृषभानुसुता सुतानितगर्वापि पराजिता राजितारं विजयमहसा महसालसं प्रियवयस्यमस्माकं स्माकम्पितानुगृहीतदास्यरसेव सेवते ॥ २२० ॥

भो वयस्यवृषभा हे सखिश्रेष्ठाः सुबलादयः । विजयतेजसा राजितारं दीप्तिमन्तम् । महात् निजोत्सवात् सालसं "ल्यब्लोपे पञ्चमी," तं प्राप्येत्यर्थः । स्मेत्यवधारणे, अकम्पिता निश्चला एव सतीत्यर्थः ॥ २२० ॥

किमतः परं कौतुकम्, उचितमेवैतत्, यस्य मया धीसचिवता बताङ्गीक्रियते तस्य कथं पराजयो राजयो हि जयसंपदामेवेति परमतृप्तः सुखभुजा भुजावुद्यम्य नरीनृत्यते स्म ॥ २२१ ॥

धीसचिवता मन्त्रित्वम् । वत हर्षे । राजयः श्रेणयः । सुखस्य भुक् भोगस्तया, सुखानुभवेन हेतुनेत्यर्थः ॥ २२१ ॥

तस्य तया प्रतिभयोभयोरेव पक्षयोरक्षयो रभसः समजनि ॥ २२२ ॥

तया प्रतिभया, भण्डवद्वल्गनमनटनादिमय्या ; उभयोरेव पक्षयोः । रभसो हर्षः ॥ २२२ ॥

समजनितसंतोषया देव्यापि वार्षभानव्या नव्या हारयष्टिः प्रसादीचक्रे ॥ २२३ ॥

सममन्यूनं यथा स्यात् तथा जनितहर्षया ॥ २२३ ॥

इत्येवं चिरविहरणरणपरिश्रमालसलसदवसादसादरसेव्यमानवपुषां तेषां तासां च माधुरीधुरीणतात्कालिकरुचिररुचिरसतरङ्गमालोक्य वनदेवता देवता च सा मातङ्गी संगीतस्य सात्मश्लाघमुल्लाघमुल्लाघवाभावतो भावतोऽपि सहजादुत्सवविराममेवाभिराममेवाभिरुचितं मन्यन्ते स्म ॥ २२४ ॥

माधुरीधुरीणश्च तात्कालिकस्तत्कालभवश्च रुचिरा रुचिः प्रीतिर्यतः स च यो रसतरङ्गस्तं तेषां तासां चालोक्य· उत्कृष्टो यो लाघवस्याभावः परमश्रैष्ठ्यं ततो हेतोः· तस्यामेव शोभायां पर्यवसानाकाङ्क्षया· इत्यर्थः· सहजाद् भावतः प्रेमतश्च परिश्रमदर्शनाच्चेत्यर्थः· वनदेवता वृन्दाख्याः संगीतस्य देवता मातङ्गी च· उत्सवस्य विराममेव· अभिराम· मेव रम्यमेवाभिरुचितं मन्यन्ते स्म । उल्लाघं निरामयं, निर्विघ्नमित्यर्थः, रसतरङ्गस्य विरामस्य वा विशेषणम् ॥ २२४ ॥

विश्रान्ते च तस्मिन् वसन्तोत्सवे स वेणुपाणिः सह सहचरैर्मिलितोऽलितोषभङ्कारमुखरवनमालो वनमालोतमच्छायामवलम्ब्य नवमधुमहामहानन्दभरोद्गारपरिमलेन विरचयन्नितरेतरतरलिमानमाननन्द ॥ २२५ ॥

अलीनां तोषभङ्कारेण हर्षशब्देन मुखरा वनमाला यस्य सः, वनमालेयं नव्या, तदाकल्पनिर्माणसमये श्रीराधयैव स्वहस्तेनार्पिता ज्ञेया, पूर्वस्याः खेलनवेगच्छिन्नभिन्नत्वात् । नवमधोर्नव्यवसन्तस्य महामहो महानुत्सवस्तत्रानन्दभरस्य खेलापरिपाटीजनितस्य· उद्गारस्तत्तदनुकथनं स एव परिमलस्तेन· इतरेतरस्य तरलिमानं गाम्भीर्यरक्षणासामर्थ्यं विरचयन् सच्चानन्द· आनन्दं प्राप ॥ २२५ ॥

सा च सकला सकलाभीरकिशोरीशोरीकृतखेलनविरामा रामानुजसङ्गसंगतपरमानन्दनन्दथुमालिमालिकाभिः सह सहर्षमनुभवन्ती स्वरमणरमणमाकन्दमाकन्दकन्दलितवासन्तीमण्डपकृतविश्रामा मातङ्गीवर्गमाहूय सबहुमानमानम्य पारितोषिकतोषिकमनीयमनसं कारयित्वा विसर्जयामास ॥ २२६ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे वसन्तोत्सवो नाम चतुर्दशः स्तबकः ॥ १४ ॥ :: :: ॥

सकलानामाभीरकिशोरीणाम्· ईशा श्रीराधापि सा रामानुजस्य सङ्गेन संगतस्य परमानन्दस्य नन्दथुं समृद्धिम्· अनुभवन्ती तत्तत्खेलाकौतुकोद्गारेणास्वादयन्ती स्वरमणस्य श्रीकृष्णस्य रमणमा विहारसंपत्तिः सैव कं सुखं तद्ददातीति स चासौ माकन्देन कन्दलितश्च यो वासन्तीमण्डपस्तत्रैव कृतो विश्रामो यया सा । तेन वनदेवतोपनीतविविधमधुरफलभोजनानन्तरं सुप्तेषु निजसहचरगणेषु तत आगतस्य कृष्णस्य तया सह नियतविहारोऽपि व्यञ्जितः ॥ २२६ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तन्यां चतुर्दशस्तबकसंगमनम् ॥ १४ ॥ :: :: ॥

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ पञ्चदशस्तबकारम्भः ॥



इत्येवंविधेन विविधेन विलासेनानाविलासेनानाविष्कृतवैमुख्येन मुख्येन वृन्दावनान्तरङ्गिणा रङ्गिणामग्रणी रसवानूढानूढादिभिराभीरराजाभीरराजात्मजोऽयं तिथीः कतिथीः कलानिधिरिव ताराभिराभिराम्येण ॥ १ ॥

देवेन्द्रपर्वमदखण्डनकृद्गिरीन्द्रपर्वातिगर्वभरतः कृतगोष्ठरक्षः ।
सिद्धैर्नुतः स्वजनविस्मयभृत् सुरेशैः स्तुत्वाभ्यषिच्यत स पञ्चदशे गवेन्द्रः ॥

आभीरराजात्मजः कतिथीः कियतीनां वसन्तोत्सवसंबन्धिनीनां पूरणीस्तिथीर्व्याप्य ताराभिः सह कलानिधिरिव आभिरूढानूढादिभिः सुन्दरीभिः रराज राजते स्म । आदिशब्दात् तत्तत्परिवाराणां स्वनर्मसखानामपि ग्रहणम् । अनाविलासेन अनाविलो निर्मलः आसः शोभा यतस्तेन, "अस दीप्तौ" । अत एव न आविष्कृतं वैमुख्यमलंबुद्धिर्यत्र तेन । वृन्दावनान्तर्वृन्दावनमध्ये अङ्गिना उपयुक्तबहुङ्गसहितेन । अभिरामस्य भाव आभिराम्यम् ॥ १ ॥

वासरे तु सह सहचरसमुदयेन स मुदयेन गोचा गोचारणकौतुकेन कुमारयामास मारयामास च कदाचिदमरद्विषो विद्विषोपमान् ॥ २ ॥

गोचारणमेव कौतुकं तेन, गोचा गां पृथिवीमञ्चता, रसेनानुरागेण, मुदाम् आनन्दानाम् अयः प्राप्तिर्यत्र तेन । विद्विषोपमान् विदां विदुषां विषोपमान् ॥ २

ततः परमनिर्वृतानेकदानेकदाक्षिण्यदयावतो यावतो वल्लवान् वल्लवराजमुखानभिमुखानभिशतमखमखमखण्डसमारम्भानरं भानवतो नवतोषाननेकप्रकारां सामग्रीमग्रीयामाहरतो विलोक्य वयोवृद्धावृद्धानादाय कृतसभं सभङ्गि पितरमुवाच श्रीकृष्णः ॥ ३ ॥

एकदा· एकस्मिन् समये वल्लवराजमुखात् यावतो वल्लवान्· अभिशतमखमखं शतमखस्य· इन्द्रस्य मखं यज्ञं लक्षीकृत्य· अखण्डसमारम्भात्· अभिमुखात् स्वसंमुखानवलोक्य श्रीकृष्णः सभङ्गि यथा स्यात् तथा पितरम्· उवाच। कथंभूतान्, परमनिर्वृतान्· अतिहृष्टान्, ननु व्रतादाविव तत्र यन्त्रितानित्यर्थः। अनेकदाक्षिण्यदयावतः· बहुतरसारल्येन कृपालून्, सर्वजनसुखवासार्थमिति भावः। अरम्· अतिशयेन भानं दीप्तिस्तद्वतः। यतो नवतोषात्· उत्सवागमनहेतुकेन नवीनहर्षेणापि युक्तान्। अग्रीयां श्रेष्ठाम्। पितरं कथंभूतं, वयोवृद्धो·ऋद्धान् समृद्धान् जनानादाय कृता सभा येन तम् ॥ ३ ॥

आर्यपादाः किंनामायं महो महोदारः कास्य वा देवता वतास्य को वाचार्यो वाचार्योऽस्य कं वा विधिमधिमन्यध्वे किंप्रयोजनोऽयं जनो यन्त्रित इव सर्वतो धावति मेधावति मे हृदये किमपि न प्रतिभाति प्रतिभातिरेको हि वर्षीयसामेव ॥ ४ ॥

महोदारो महामहिमवान्। वाचा· आर्यः प्रमाणवचनकः। मे मम मेधावति मेधायुक्ते हृदये। ननु "परेङ्गितज्ञानफला हि बुद्धय" इत्युक्त्वाचिन्नबुद्धिप्रतिभयैव ज्ञायतां त्वद्बुद्धेः किं दुष्प्रवेशमित्यत आह, प्रतिभाया अतिरेक उद्रेको वर्षीयसां वयोऽधिकानाम् ॥ ४ ॥

यदि बालतया मयीदमप्रकाशनार्हं नार्हन्तु तदा प्रकाशयितुम्, उत चेदुपैति कथ्यतां कथ्यतां तदाकरः ॥ ५ ॥

कथ्यतां कथनार्हत्वं चेत्· उपैति, तदा कथ्यतामुच्यतां तस्याकरः कारणम् ॥ ५ ॥

गुप्ता हि वार्ता सुहृदि हृदि च दुरपनोदा नोदासीने विपक्षेऽपक्षेपणीया भवति ॥ ६ ॥

ननु बालत्वेऽपि महाबुद्धिमत्त्वान्नास्ति ते बालत्वदोषः किंत्वतिरहस्यैवेयं वार्तेति चेत्, सत्यं, गुप्तापि वार्ता हृदि मनसि सुहृदि च

दुरपनोदा॰ अपक्रोतुमशक्या॰ अनौचित्यादेव, श्लेषेण सुहृदो हृदयाद-प्यन्तरङ्गत्वमानीतं, किंतु॰ उदासीने विपक्षे च न॰ अपक्षेपणीया प्रक्षेप्तुम-योग्या, मयि तु सुहृत्त्वेन तत्प्रकाशनं युक्तमेवेति भावः ॥ ६ ॥

इति विरतवचनरचने च नेदीयसि च सिचयासनमध्यासी-ने च तनये नयेन सादरदरहसितसितदशनमहोमहोल्लासेन पेयूष-पीयूषपीनधौतमिव श्मश्रुभरं जनयन् नयन्नपि तमङ्कमनङ्कमिव सुधा-करं वसुधाकरम्बितमथाभीरराजो रराजोपक्रम्य वचनरचनाम् ॥ ७ ॥

तनये श्रीकृष्णे॰ इति विरतवचनरचने सति॰ आभीरराजो वचन-रचनाम्॰ उपक्रम्य॰ आरभ्य रराज । तनये कथंभूते, प्रथमं नेदीयसि नि-कटवर्तिनि, ततः सिचयासनं वस्त्रासनमध्यासीने च । स्वयं च कथंभूतः, सादरम्॰ अहो प्रश्नमाधुर्यमिति कृतादरं यद्धसितं तत्प्रकाशितः सितदश-नश्च तयोर्महसां ज्योतिषां महोल्लासेन पेयूषो नवदुग्धं स एव पीयूष-ममृतं तेन पीनं पुष्टं यथा स्यात् तथा धौतं क्षालितमिव श्मश्रुभरं जन-यन्, स्वभावतस्तिलतण्डुलितमपि श्मश्रुभरं हसनदशनकान्त्या सर्वशुक्ल-मिव कुर्वन्नित्यर्थः,"पेयूषोऽभिनवं पय" इत्यमरः । तं तनयमपि॰ अङ्कं स्वोत्सङ्गं प्रति नयन्, अनङ्कं निष्कलङ्कं वसुधाकरम्बितं भूमौ मिलितं सुधाकरं चन्द्रमिव ॥ ७ ॥

तात सातत्यतन्यमानमान एष नः कुले निराकुले निराविलः परंपरापरायण आचार आचारणादिपरिगीतः समुन्मीलति ॥ ८ ।

सातत्येन तन्यमानो मान आदरो यस्य सः ॥ ८ ॥

यदस्माकं हि गोधनं धनं तच्च घासघासमात्रजीवनं स च घासोऽनघासो न भवति विना वृष्टिं सा च दुर्बला वलाहकानन्तरेण ते च नात्मवशाः पुरंदरदरतः ॥ ९ ॥

घासस्य तृणस्य घासो भक्षणं तन्मात्रमेव जीवनं यस्य तत् । अनघो निर्व्यसनो निर्विघ्न आसः स्थितिर्यस्य तथाभूतो न भवति ।

"अंहोदुःखव्यसनेष्वघम्," "आस उपवेशने" "अस दीप्तौ वा घञन्तः"। सा च वृष्टिः। बलाहकान् मेघान्। पुरंदरदरतः· इन्द्रभयात्॥ ९॥

अतस्तदीयं महमहमुपपादयन्नस्मि, अनेनसानेन साधुनाधुना विधीयमानेन महेन प्रीतिसुमनसा सुमनसामधिपेन तेन प्रतिवर्षं वर्षं सुरीत्या संपाद्यते॥ १०॥

अनेनसा· एनोऽपराधस्तद्रहितेन· अनेन महेन यागोत्सवेन। सुमनसां देवानामधिपेन· इन्द्रेण॥ १०॥

तथा संप्रति संप्रतिपत्तिकारिणा भवितव्यं रीतिरीदृश्येव तेषां मानवतां मानवतां गतस्य समाराधनप्रिया न प्रियाय मन्यन्ते स्वर्गीयगीयमानमपि सुधादिकं ते॥ ११॥

संप्रत्यधुनापि संप्रतिपत्तिकारिणा· अस्मद्योगक्षेमसंपादकेन· इन्द्रेण। नन्वमृतभुजां देवानां युष्मद्दीयमाने हविषि का प्रीतिः स्यात् तत्राह। मानवतां संमानदायिनां तेषामीदृश्येव रीतिर्यत्· मानवतां गतस्य मनुष्यत्वं प्राप्तस्य सम्यगाराधनं प्रियं येषां ते। स्वर्गीयैः स्वर्गसंबन्धिभिर्जनैर्गीयमानं स्तूयमानमपि॥ ११॥

स्वसंपदापदारोहणपरापि समाराधिताधितानवं नवं नवमीहते हि देवता· अनाराधिताधितादवस्यमेव॥ १२॥

ननु देवा अपि· असुराद्युपद्रववशाद्दुःखसुखमया मनुष्यवदेव लक्षिताः, सत्यं, स्वस्याः संपद आपदश्च कदाचिद्द्विष्टवशादारोहणपरापि समाराधिता सती· आधेर्मनः पीडायास्तानवं क्षीणत्वम्· आराधकजनस्य· ईहते चेष्टते, कुरुत इत्यर्थः। तच्च नवं नवं यथा स्यात् तथेति, तत्र कदाचिदपि नोद्विजत इत्यर्थः। अनाराधिता तु सती· आधेस्तादवस्थ्यमेव,ईहते· इत्यस्यैवानुषङ्गः॥ १२॥

अथ तदाकर्णनकर्णनवकषायतायतापि न केनापि यथा यथार्थभावेन लक्ष्यते तथा कृतावहित्थमित्थमिदमतिमधुमधुरतरतरङ्गि-

तस्मितविस्मितविविधजनमनोमनोज्ञतमं किमपि संमोहजनकं जनकं यदवादीदवादीव मीमांसावादं सविवादं स विधाय तदतिचित्रम् ॥ १३ ॥

अथ तद्वचनाकर्णनेन कर्णयोर्नेवा कषायता गर्वितत इन्द्रस्यादरश्रवणासहिष्णुतया कालुष्यं सा· आयतापि प्रचुरापि यथा केनापि न लक्ष्यते तथा जनकं प्रत्यवादीव यदवादीत्· उक्तवान्· तत्· अतिचित्रम्, तथा कृतावहित्थमिति गाम्भीर्यणासूयालक्षणाच्छादनात्। तदेवाह, अतिशयेन मधुनोऽपि मधुरतरं च तत् तरङ्गितम्· आवृत्तिप्रत्यावृत्तिभ्यां तरङ्गसदृशं च यत् स्मितं तेन विस्मितानां विविधजनानां मनसो मनोज्ञतमम्· अतिरोचकम्। सविवादं विवादसहितं कृत्वा, वाद्यन्तरपराभवार्थम्। स श्रीकृष्णः।

ऐश्वर्यशक्त्या सहसा निवेदितो निजप्रभुः स्वावसरप्रवीणया।
चिकित्सितुं दुर्मतिशक्रदुर्मदं परामर्शाथ स गोपशर्मदः ॥
जनको नु ममापि देवतां भजते यन्नरलीलतावशात्।
तदिहाप्यभिमन्यते मदान्मघवा यत् तदिहास्मि शास्मि तम् ॥
इति ॥ १३ ॥

तथाहि।

अहो अहोनाथसदृशामीदृशामीशतुल्यानां वः खलु सुखलु सुबहुलमविचारि चारित्र्यम् ॥ १४

अहोनाथसदृशां सूर्यतुल्यानामिति स्वत एवातिप्रतापवत्त्वम्· ईशतुल्यानामित्यन्यदुर्बाधत्वं च सूचितम्। तथापि सुखस्य लूश्छेदनं यतस्तत्· अविचारि न विचारयुक्तम् ॥ १४ ॥

यतः कर्मणैव जन्तव उत्पद्यन्ते विपद्यन्ते विद्यन्ते च। यो हि यदा यदाचरति कर्म तदेव देवता देवतान्तरं नाम नामनन्ति सन्तः ॥ १५ ॥

उत्पद्यन्त इत्यादिना· उत्पत्तिप्रलयस्थितयः सर्वेषां कर्माधीना एवेति ॥ १५ ॥

ईहितह्निताहितातिरिक्तफलदानासमर्थमर्थयन्तां के नाम देवतान्तरं तान्तरंहसो हि कर्मातिरिक्तां देवतां मन्यन्ते ॥ १६ ॥

ईहिताभ्यां कृताभ्यां हिताहिताभ्यां सुकृतदुष्कृताभ्यामतिरिक्तस्य फलस्य दानेऽसमर्थं देवतान्तरं के जना अर्थयन्तां स्वाभीष्टं याचन्ताम्, न केऽपीत्यर्थः । तान्तम् अशक्तं रंहो बुद्धिव्यापारादीनां वेगो येषां त एव ॥ १६ ॥

नाप्यन्तर्यामी यामीरयति क्रियां तामेव करोति जन्तुः, वस्तुतस्तु तथाविध एव कश्चित् स्वभावो हि स्वभावो हिताहिताचरणप्रवर्तकः किं तत्रान्तर्यामियामिकतया ॥ १७ ॥

कर्मणोऽन्तर्यामिपारवश्यमिति मतं निरस्यन्नाह नान्तर्यामीति । यां क्रियाम् ईरयति प्रेरयति । कश्चिदिति, तथाविधकर्मभिरेवाभिव्यञ्जितः स्वभावो निसर्गः स्वस्यैव भां कान्तिम् अवतीति सः । अत एवान्तर्यामिणो यामिकतया नियामकत्वेन किम् ॥ १७ ॥

नहीश्वर एव जगदुत्पादयति विपादयति विशिष्य पालयति, अपितु तस्योत्पादकविपादकविपालकानि रजस्तमःसत्त्वानि, तेन रजोघना घनाः स्वभावत एव त एवमभिवर्षन्ति ॥ १८ ॥

तस्य जगतः । रजोघना रजसा निविडाः । जन्तूनामुत्पत्त्यदृष्टवशादेव वर्षन्ति ॥ १८ ॥

न च तत्र घनागमे भुवनमुचि नमुचिसूदनो नाम देवता प्रेरिका या खल्वाराधिताधितानवं करोति ॥ १६ ॥

न च तत्तद्देशाध्यक्षकृताराधनसंतुष्टस्येन्द्रस्य प्रेरणवशादेव मेघाः प्रावृषि वर्षन्तीत्याह नचेति । घनागमे वर्षासमये । भुवनस्य जलस्य मुक् मोचनं यत्र तस्मिन् । नमुचिसूदन इन्द्रः ॥ १९ ॥

किममी धराधरा वा किमेते वा नदीना न दीनास्तदाराधनं चक्रुः कथमेतेष्वेते ते वर्षन्ति तदलमप्रस्तुतेन शतमखमखकरणेन ॥ २० ॥

नदीनाम् इना ईश्वराः समुद्रा एते किं तस्याराधनं चक्रुः, अपितु नैवेत्यर्थः । यतो न दीनाः न जलदारिद्र्यवन्तः ॥ २० ॥

किंच ।

ब्राह्मणा ब्रह्मणा व्रतिनो राजन्या राजन्यायेन शोभिनो विशो विशोभन्ते कृष्यादिभिरवरवर्णा वरवर्णानां सेवया राजन्ते इति चतुर्वर्णावस्थावस्थानव्यवस्थायां कृषिगोरक्षवाणिज्यकुसीदविशां विशां चतुष्टयी वृत्तिवृत्तिः ॥ २१ ॥

तर्हि किं प्रस्तुतमित्यपेक्षायां निजविहितधर्मानुष्ठानमेव दीपकरीत्या अप्रस्तुतोपन्यासेनाह ब्राह्मणा इति । ब्रह्मणा वेदेन । अवरवर्णाः शूद्राः । चतुर्णां वर्णानाम् अवस्था स्वभावस्तस्या अवस्थानेन स्थित्या या व्यवस्था तस्यां, कृष्यादिषु विशन्ति इति क्विप्, तेषाम् । तत्र कुसीदं वृद्धिजीविका । वृत्तीनां कृष्यादिजीविकानां वृत्तिः सत्ता ॥ २१ ॥

तत्रास्माकं गोरक्षपक्षपरता, नेदानीं न च पुरा पुरावनिसर्गा निसर्गावगाहिनी गिरिवनचरता ॥ २२ ॥

अस्माकं नेदानीं नापि पुरा पुरस्य अवनेः शालिक्षेत्रादेर्वा सर्गा निश्चयाः सृष्टयो वा । तर्हि किं तत्राह, निसर्गावगाहिनी स्वाभाविकी गिरौ गिरौ वने वने चरन्तीति तेषां भावस्तत्ता । सैवास्माकं सदेत्यर्थः ॥ २२ ॥

चरतामिह नो हन्त किमनया शतक्रतुक्रतुकल्पनयानयारब्धया ॥ २३ ॥

अत एव इह व्रजभुवि चरतां नैकत्र सदा स्थायिनां नोऽस्माकम् अनया किम्, न किंचिदपि प्रयोजनमित्यर्थः । कीदृश्या, अनयेन अनीत्यैव आरब्धया ॥ २३ ॥

विस्रब्धया त्रिस्रस्तविपदा मम गिरा गिरावस्मिन् न केवलं नाम्नैव गोवर्धने गोवर्धनेऽर्थतोऽपि संमानमानयद्भिरनेनैव शतमन्यु-

मन्युसंभारेण निपुणमहो महोऽस्य गिरिवरस्य विधीयतामन्नाभवद्भिर्भवद्भिः ॥ २४ ॥

तर्हि किं यागार्थकत्वेनोपकल्पितानां तत्तद्द्रव्याणां पुनरादानं युक्तं, नहि नहि तैरेव युक्त्यनुरूपं यागान्तरं क्रियतामित्याह, विस्रब्धया विश्वस्तया विस्रस्ता ध्वस्ता विपद्यया तया मम गिरा· अस्मिन् गिरौ निपुणं संमानमानयद्भिर्भवद्भिः· अस्य गिरिवरस्य महो विधीयतां शतमन्योरिन्द्रस्य मन्युसंभारेण यागोपकरणवृन्देन । "मन्युर्दैन्ये क्रतौ क्रुधी"-त्यमरः ॥ २४ ॥

सकला एव गावो दुह्यन्तामुह्यन्तामुदाराः पयोभाराः पयोभाराः प्रमान्नादीनि पच्यन्तां रच्यन्तां रम्याणि शष्कुल्यादीनि कुल्यादीनि विधीयन्तां घृतमधुपानकादीनाम् ॥ २५ ॥

कुल्यादीनि कुल्यावापीसरांसि, "कुल्याल्पा कृत्रिमा सरिदि"-त्यमरः ॥ २५ ॥

मथितोदधिदधिमहोदधिनवनवनीतासितसिताशिखरिशिखरिणीरसालारसालाघववन्तः सन्तु दिगन्ता गन्तारश्च सर्वे निमन्त्रयन्तु वसुधासुरान् ॥ २६ ॥

मथितानामुदधिश्च दध्नां महोदधिश्च नवानि नवनीतानि च सितसितानां श्वेतशर्कराणां शिखरी च शिखरिणीनां रसालानां रसालाघवं च· अपर्याप्तत्वादुदध्यादिवत् कथयितुमशक्तेः· तद्वन्तो दिगन्ताः सन्तु। गन्तारो धावका यतस्तत एव वसुधासुरान् विप्रान् निमन्त्रयन्तु ॥ २६ ॥

सुधासुरान् सुरानुपहसन्तु ते चादन्तो दन्तोत्थकिरणकन्दलीभिः स्निग्धानना न नाकपृष्ठमपि गरिष्ठं जानन्तु ॥ २७ ॥

ते च विप्रा अदन्तो भुञ्जानाः सन्तः सुधाः सुष्ठु रान्तीति तादृशानपि सुरान्· उपहसन्तु ॥ २७ ॥

ऋत्विजश्चाहूयन्तां हूयन्तां चानला न लाघवेन दीयन्तां तेभ्यो धेनुर्दक्षिणा दक्षिणाशया ब्राह्मणभोजनाय भो जना यतन्ताम् ॥ २८ ॥

दक्षिणाशयाः सरलान्तःकरणा जना ब्राह्मणभोजनाय ब्राह्मणान् भोजयितुं यतन्ताम् । भो इत्यवधापनार्थम् ॥ २८ ॥

मुद्गा मुद्गादिसूपसूपचितनानाविधसौरभरभसव्यञ्जननिकरकरम्बितमिष्टमिष्टपिष्टकरसनिरपायपायसकुण्डकुण्डलितमामोदनमोदनकूटं विरचय्य पाद्यादिभिर्यथाचारैरुपचारैरुपकल्पयन्तु गिरीन्द्रस्य पूजनम् ॥ २९ ॥

दक्षिणाभोजनाद्युल्लेखेन ब्राह्मणान् स्वपक्षीकृत्य सर्वजनप्रसादनगर्भां पर्वतपूजां विदधान आह, मुद्गाः प्राप्तहर्षा विप्रा ओदनकूटं विरचय्य गिरीन्द्रस्य पूजनमुपकल्पयन्तु । ओदनकूटं कीदृशम्· मुद्गादिसूपैः सुष्ठु· उपचिताश्च नानाविधस्य सौरभस्य रभसं वेगं व्यञ्जयन्तीति ते च ये व्यञ्जननिकरास्तैः करम्बितम् । इष्टाः परिणामेऽपि सुखदा मिष्टाः पिष्टकाश्च रसैर्निरपायानि पायसकुण्डानि च तैः कुण्डलितं वलयितम् ॥ २९ ॥

जनं जनमाश्वपाकमाश्वपाकमापतितं च पूर्णभोजनं प्रदीयतामित्येवंभूतेज्याविधौ सति ॥ ३० ॥

आश्वपाकं श्वपचपर्यन्तम्, आश्वपाकं शुनः कुक्कुरस्य पाको बालकस्तत्पर्यन्तं, "पोतः पाकोऽर्भको डिम्भ" इत्यमरः । आपतितं, सर्वतः सुलभत्वेन समाकीर्णमिव यथा स्यात् तथेत्यर्थः ॥ ३० ॥

भेरीझांकृतिभिर्विशृङ्खलतमैः प्रेङ्खोलशङ्खस्वनै-
र्नन्दद्दुन्दुभिदुंकृतैस्तत इतो निष्पक्वढक्कारवैः ।
विद्वद्वेदविदामुदारमधुरैर्वेदप्रगानोत्सवै-
र्नान्दीभिः सह वेदिनां कलकलो दिक्चक्रमाक्राम्यतु ॥ ३१ ॥

सह मिलितीभूय ॥ ३१ ॥

ततश्च ।

दिव्यालंकृतिझंकृतिश्रुतिसुखैर्दिव्याम्बराडम्बरैः
पुम्भिः स्तम्भितदैवतैर्वरवधूवृन्दैश्च मन्दस्मितैः ।
वीणावेणुमृदङ्गमङ्गलरवव्यासङ्गिसंगीतके
नृत्यन्नर्तकनर्तकीगणयुतैर्यानप्रयाणोत्सवैः ॥

पूजां विधाय विधिवद्विदुषो द्विजाग्र्या-
नग्रे विधाय च निधीनधिमङ्गलानाम् ।
सर्वे सुपर्वमदमोदपराः परार्ध-
स्पर्धाः परिभ्रमत पर्वणि पर्वतेन्द्रम् ॥ ३२ ॥

अधिमङ्गलानां निधीन् निधिरूपान् द्विजाग्र्यान् परार्ध्यैः परार्धप्र माणजीवितैर्देवैरपि सह स्पर्धन्ते इति तथाभूताः ॥ ३२ ॥

नचैवं मनसि विचार्यमभिलषितप्रदावस्थावरः स्थावरः कथम-यमास्याकरो भविष्यति ॥ ३३ ॥

अभिलषितप्रदस्य वाञ्छितदातुरवस्थायां वरः पर्वतश्रेष्ठः स्थावरः पर्वत आस्याया आकरः कथं भविष्यति ॥ ३३ ॥

द्वितीय इव गिरीशोऽयमाशु माशुद्धः सर्वार्थसिद्धिसमर्थनसम-र्थनयो भविष्यति ॥ ३४ ॥

माशुद्धः शोभया निर्मलः सर्वार्थसिद्धेः सम्यगर्थनं प्रार्थनं प्रति समर्थो दानशक्तो नयो नीतिर्यस्य सः ॥ ३४ ॥

किं बहुना, कथितोऽयं मम समीहितो हितोऽतिपन्थाः, यदि रोचते तात तदानेनैव गम्यताम् ॥ ३५ ॥

अतिपन्थाः सत्पथः ॥ ३५ ॥

इति विरते तद्वचनोपक्रमे क्रमेण सर्व एव तच्छ्रद्दधिरे द-धिरे च मनोरथसिद्धेरावश्यकत्वम् ।

आचार्यतामुपगतेन तदध्वरस्य
कृष्णेन संजनयता शतमन्युमन्युम् ।
उत्कण्ठया परमयैव तदानुपूर्व्या
सर्वं तदोपनतमेव चकार सर्वः ॥ ३६ ॥

कृष्णेनेति हेतौ तृतीया सहार्थे वा ॥ ३६ ॥

शब्दान्तरं हरति मङ्गलतूर्यघोषे
वेदध्वनिध्वनिपरेषु च दिङ्मुखेषु ।
तेषामहो गिरिमहोल्लसितान्तराणा-
मानन्दकन्दलित एव बभूव कालः ॥
उत्कण्ठमानकलकण्ठगणः पुरन्ध्री-
नीरन्ध्रमङ्गलतरङ्गितगानघोषः ।
कर्णान्तिकोपनत एव हि कर्णभाजां
कर्णेन्द्रियस्य फलमुल्ललयांचकार ॥ ३७ ॥

उत्कण्ठमानः· तादृशस्वरशिक्षार्थं सोत्कण्ठः कलकण्ठानां कोकिलानामपि गणो यत्र सः ॥ ३७ ॥

ततश्च ।

गावश्च रत्नमयकिङ्किणिजालमाला-
चीनांशुलप्रचलमौक्तिकमालिकाभिः ।
भूषां दधुः किमपि काञ्चनशृङ्गकोषैः
स्वस्वप्रसूपरिचये मुमुहुश्च वत्साः ॥ ३८ ॥

मुमुहुश्चेति चकारस्त्वर्थेऽप्यर्थे वा, वत्सास्तु वत्सा अपि· इति वा । ते लालनार्थं मुहुरागतानां स्वस्वप्रसूनां महभूषितानाम् ।

वत्साः सशङ्का गलशृङ्गपृष्ठन्यस्तेक्षणा दुद्रुवुरेव मुग्धाः ॥ ३८ ॥

एवं प्रवृत्ते गिरिमहे महेच्छेन व्रजपुरपुरंदरेण गिरिपुरतः पुरतः समानीतं पूजोपहारं प्रतिपाद्य पाद्यप्रभृतिभिरर्चनं कारयता रयतानितं तुलितगिरिसंप्रतिपन्नकूटमन्नकूटमतिकुतुकेन केन च न संपादयांबभूवे भूवेपथुजनकमिव ॥ ३९ ॥

पुरतः पुरात्। रयतानितं वेगेनैव विस्तारितम्। तुलित उपमितो गिरिर्येन तत्, गिरिसदृशमित्यर्थः। सम्यक् प्रतिपन्नानि कूटानि शृङ्गाणि यस्य तत् ॥ ३९ ॥

मध्ये कर्पूरगौरं शिखरमिव गिरेः शुद्धमन्नस्य कूटं
तद्वाचे गण्डशैला इव विविधरुचः पिष्टकानां समूहाः।
मूले प्रत्यन्तशैला इव दधिपयसां पायसानां च कुम्भा-
स्तन्मूले व्यञ्जनाल्यः सुरभितररसाः सूपमुख्याः सरस्यः ॥ ४० ॥

विविधरुच इति, कुङ्कुमादिरसाक्तत्वात् ॥ ४० ॥

कर्पूरैलालवङ्गादिभिरतिसुरभि घ्राणसंतर्पणेन
प्राज्येनाज्येन सिक्तं द्रुतकनकपयःसिक्तकैलासकल्पम्।
नानापुष्पैः फलैश्च प्रचितमित इतस्तन्निरीक्ष्यान्नकूटं
गोपेन्द्रो भूधरेन्द्रोचितमिदमिति स प्रीयमाणस्तदासीत् ॥ ४१ ॥

अतिसुरभि· अतिसुगन्धं, घ्राणसंतर्पणेन सुगन्धिना ॥ ४१ ॥

अथ तथाविधविविधविचित्रमन्नकूटं कूटं सुमेरोरिव निरीक्ष्य सविस्मितस्मितवदनो हरिरयं रयं प्रमोदस्य प्राप्य सपरिजनजनकप्रत्ययं प्रत्ययन्वितकौतुकः पर्वतोपरि परिकल्प्य वपुरपरं तपस्तपनसहस्रसहस्रास्तमहःपूरमिव रश्मिवर्गशेखरः प्रखरः प्रमुदितमना मनागवलोक्य निजगाद ॥ ४२ ॥

परं प्रतिपन्नरूपमिन्द्रं तापयतीति सः। तपनसहस्रस्यापि सहस्रां ते-

जसां स्रस्तं स्रंसनं यतस्तथाभूतो महःपूरो यस्य तम् । पूर्वत्र स्रशब्दे "अनचि चे"ति द्वित्वम्, उत्तरत्र "वा शरी"ति सत्वम् । रमिवर्गशेखरो रञ्जकवृन्दमुख्यः ॥ ४२ ॥

हंहो पूज्यपादा विलोकयत यतमानानां शुभवतां भवतां शुचितराः श्रद्धाबद्धा बहुविधा निरपचितीरपचितीरादातुमनुग्रहग्रहगृहीत इव मूर्तोऽयमुज्जजृम्भे धराधराणां धुरंधरो गोवर्धनः ॥ ४३ ॥

यतमानानां यत्नवताम्. अपचितीः पूजाः । कीदृशीः, निरपचितीः अपचयशून्याः शुचितरा अतिशुद्धाः. श्रद्धया बद्धा आवृताः ॥ ४३ ॥

पश्यत पश्यत ।

स्फारस्फीतगभीरकन्दरमुखो धत्ते मुखं चन्द्रवद्
वृक्षप्रायभुजोऽप्ययं भुजयुगप्रद्योतिरत्नाङ्गदः ।
ग्रावाङ्गोऽपि सुकोमलानि मधुराण्यङ्गीकरोत्यङ्गका-
न्यस्य स्थावरविग्रहोपरि परिस्पन्दी चरो विग्रहः ॥ ४४ ॥

विरोधालंकारं युञ्जानो रूपद्वयं वर्णयति । स्फारैर्विस्तारैः स्फीताः पुष्टा गभीराः कन्दरा एव मुखानि यस्य सोऽपि ॥ ४४ ॥

किंच ।

मरकतशिलापट्टश्लाघ्यं प्रकाण्डमुरःस्थलं
शिखरसुषमाक्रान्ता दन्तावली विलसत्यसौ ।
दशनवसनस्याभा धातुप्ररोहविडम्बिनी
क्षितिधरपतेर्मूर्तिद्वन्द्वं परस्परसोपमम् ॥ ४५ ॥

शिखरं माणिक्यमिव, पक्षे शङ्गमिव, सुषमया कान्त्या परस्परसोपममिति । उरःस्थलमिव मरकतशिलेत्येवम् ॥ ४५ ॥

किंच ।

कलयत भवद्भक्त्युद्रेकाद्बुभुक्षुरिव स्वयं
समणिवलयं दोर्दण्डाग्रं प्रसारयति द्रुतम् ।

अयमयमहो कामः सिद्धो बभूव भवादृशां
नमत नमतेत्युक्का कृष्णः स्वयं च ननाम तम् ॥

अथ सर्वे मूर्धनि बद्धाञ्जलयो जलयोनिमिव ज्वलन्तं तमवलोक्य नमो नमो नम इति विपुलपुलकाकुलाः कुलावलावलयश्च कुलवृद्धाश्च भक्तिश्रद्धावन्तो धावन्तो मेधावन्तो निजभाग्यमनुवर्णयन्तोऽयं तोषवन्तो मूर्तिमन्तमिव मेनिरे ॥ ४६ ॥

जलयोनिं वह्निम् । अयं शुभावहविधिं मूर्तिमन्तमिव मेनिरे ।

धनजनसुतगोभूसौभगायुष्यवृष्ण-
वतिलघुनिजगेहानीलनैवेद्यहस्ताः ।
यदखिलकुलवृद्धास्तत्कृपापाङ्गभङ्ग्या
व्यतरदथ वधूभ्यः स्वप्रसादामृतं सः ॥
स्वनयनकरशाखासंज्ञयैवाह राधां
त्वमिह मदुपकण्ठे वाञ्छितार्थं लभेथाः ।
प्रतिदिनमिति तस्यां तत्प्रसादातिरेकं
ददृशुरथ जरत्यस्तुष्टुवुस्तां जनाश्च ॥ ४६ ॥

देवानामध्वन्यध्वन्यतिशयो ध्वनिरासीदभिवाद्यानां वाद्यानां स्थाने ॥ ४७ ॥

अध्वन्यध्वनि· अभिवाद्यानां नमस्कार्याणां देवानां देवप्रतिमानां स्थाने वाद्यानाम्· अतिशयो ध्वनिरासीदिति संबन्धः ॥ ४७ ॥

॥ शेषमग्रे ॥

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य दशमः परिच्छेदः ॥

११ ॥ अक्षराणां ध्वनेर्व्यामिश्रणाय उपयुज्यन्ते ॥—यथा कश्चन पुरुषो ज्ञाताक्षराणामर्थस्य विनिमयं कर्तुं समर्थः शास्त्रीयसूक्ष्मकल्पनया,

चापठितान् जडान् लौकिकांश्च पुरुषान् प्रत्यतितरामाश्चर्यमावहन् अहं बकारस्य स्थाने ऽकारं डकारं चेकारस्य स्थाने स्थापयितुं शक्नोमीति स्वीये ग्रन्थे प्रदर्शयितुं समर्थश्च स्वपाठकान् प्रति अत्यन्तमाश्चर्यमुपयोगं च कुर्यात् तथैवेमे पण्डिता बुद्धिमतो मनुष्यान् शिक्षयन्तः स्वजीवनसाफल्यं कुर्वन्ति । वागिन्द्रियचालनविशेषाभिव्यङ्ग्यवर्णविशेषलिङ्गस्य अशब्दस्य स्थाने तस्यैवेन्द्रियस्य चालनविधान्तरेणाभिव्यज्यमानस्य शब्दविशेषस्य बोधनायानुमतस्याकाररूपस्याक्षरस्य व्यवस्थापनमिव कस्य चित्प्रत्यक्षग्राह्यविज्ञानज्ञापकतया ऽनुमतस्य कृष्णशब्दस्य तद्विरुद्धविज्ञानविशेषान्तरबोधाय प्रयोगस्यापि निरर्थकत्वात् ॥

१२ ॥ एषा च विद्या धर्मं न्यायं च विसंकुलयति ॥ —नाप्येष दोषः केवलं तर्कशास्त्रीयेषु कौतुकैकफलेषु वा सूक्ष्मविचारेषु विरमति किं तु मनुष्याणां जीवनेषु समाजेषु चोपसंक्रामति । दिव्यानि दण्डनीतिसंबद्धानि च तत्त्वानि गूढानि विसंकुलानि च कुर्वन् मनुष्याणां प्रवृत्तौ व्यामोहमव्यवस्थामनिश्चयं चोत्पादयति । धर्मदण्डनीत्योर्द्विविधान् महतो विधीन् यद्यपि न सर्वथा विनाशयति तथापि भूयस इमान् निरुपयुक्तान् करोति । ऐश्वरेषु मानवीयेषु विधिषु भूयसां विवादानां टीकानां च कृते तदर्थेष्वधिकसंदेहजननात् तात्पर्ये ऽधिकं भ्रमस्य संपादनाच्च कोऽन्य उपयोगः संभवति । शब्दानामधिकं दुर्बोधनां पाठकानां चाधिकं भ्रमं च संपादयद्भ्यां गूढत्वानिश्चयाभ्यामृते ऽमीषामत्यन्तसूक्ष्मविचाराणां विविधानां विलक्षणभेदानां च किं फलम्? । कथमन्यथा राजकुमाराणां भाषणं लेखो वा तेषां नित्यव्यवहारेष्वाज्ञासु च भृत्यैः सौकर्येणावधार्यते, प्रजासु दण्डनीतौ च न तथेत्युपपद्यते । किं चैतावता पूर्वोक्तादेतदुक्तं भवति । साधारणबुद्धिमान् मनुष्यः स्वपठितं नीतिविधिं मूलग्रन्थं वा तावत्सम्यगवच्छति यावत्स तेषां व्याख्यानायापेक्षितेन कालेन तान् शब्दान् सर्वथार्थशून्यान् स्वाभीष्टार्थप्रतिपादकान् वा कुर्वाणेन व्याख्यात्रा समाजेन वा सह न संगतो भवति ॥

१३ ॥ किं चैषा पाण्डित्यपदव्यवहारं नार्हति ॥— आसां जीविकानां फलेन कोप्येतत्फलमुपलब्धवान् न वेतीह न परीक्षयामि । वस्तुतत्त्वपरीक्षकाणामवश्यकरणीये प्रवृत्तिमतां न पुनर्वस्तुविषयकवादमात्रेण शब्दानामितस्ततः संक्षोभनेन वा स्वजीवनानि हापयतां मनुष्याणां कृते एतत्करणं साधु न वेति तु विचारणीयम् । साक्षात्स्फुटानां शब्दानां प्रयोगः सामाजिकव्यवहारसिद्धये ज्ञानपरिष्काराय चास्माभिरुपलब्धा भाषा तत्त्वस्य प्रच्छादनाय जनानां धर्मेष्वविश्वासाय, भ्रमसंवर्धनाय धर्मनीत्योर्दुर्बोधतासंपादनाय च न कर्तुमुचितावितिं न साधु । अथ वा अन्ततो यद्येवमेवाभविष्यत्तर्हि इत्थं करणं ज्ञानं विद्या वा नाभविष्यत् ॥

१४ ॥ (४) तेषां वस्तुत्वेन ग्रहणम् ॥—अयमप्यपरो दोषो यत्तेषां वस्तुत्वेन ग्रहणम् । यद्यप्ययं दोषः किं चित् किं चित् पदसामान्यमुपसंक्रामति तथापि विशेषतो द्रव्यवाचकान्येव दूषयति । ये स्वीयान्भूयिष्ठान् विमर्शान् कस्मिंश्चिदेकस्मिन्नेव विषये निरुध्य कस्याश्चित्स्वपरिगृहीतकल्पनाया निर्दोषत्वे दृढं विश्वसन्ति ते पुरुषा बाहुल्येनैतद्दोषभाजनानि भवन्ति । ततश्च ते तज्जातीयार्थबोधकपदानि तथा वस्तुस्वभावस्यानुकूलानि सन्ति येन तेषां वास्तविकीं सत्तामेवानुकुर्वन्तीति व्यवस्थापनाय प्रयतन्ते । अरिस्तुतिलाचार्यस्य शास्त्रं को नाम नाधीतवान्? को वा तानि दश नामानि न विचारयति स्म यैः पदार्था यथार्थवस्तुस्वभावानुरूप्यसंपत्तये दशधा विभज्यन्ते? कोस्ति तच्छास्त्रमण्डलान्तर्गतो यो द्रव्याकारा महीरुहगतो ऽध्यात्मवायुः सर्वथा रिक्तस्थलस्याभाव इत्यादयो वास्तविकाः पदार्थाः सन्तीति न विचारितवान्? पठनारम्भत एव मनुष्यैरिमानि वाक्यान्यभ्यस्यन्ते उपलभ्यते च स्वांशलकाणां तच्छास्त्राणां चैतदाश्रितमेव गुरुत्वम् । अत एव च पदानि स्वाभाविकवस्त्वनुसारीणि भूत्वा वस्तुतो विद्यमानवस्तूनां प्रतिनिधिरूपाणि सन्तीति मतं न ते जहति । यथा प्लेटोमहाशयानुयायिनस्तावत् साधारणजीववादं व्यवस्थापयन्ति, एपिक्युरस्भट्टानुयायिनः पदार्थस्य स्थित्यवस्थायामपि

परमाणूनां गतिं व्यवस्थापयितुं प्रयतन्ते । परैरबोध्यं भिन्नं भिन्नं पदवर्गं स्वस्वशास्त्रेष्वप्रयुञ्जानाः शास्त्रिणो विरलतराः सन्ति । एवमपीयं दुर्बलबुद्धीनां मनुष्याणामज्ञानस्य भ्रमस्य च प्रच्छादनायोपयुज्यमाना दुर्बोधभाषा एकजातीयपुरुषेषु परिचितव्यवहारेणार्थवत्पदघटिता भाषादीनां प्रधानतमांशः प्रतीयते । यदि च तन्मतानुसारेण वायवीयं यानमाकाशीयं च यानमितिशब्दौ कुत्रापि साधारणजनपरिगृहीतावभविष्यतां तर्हि यथैवारिस्तुतिलाचार्यानुयायिप्रभृतीनां द्रव्यादीनि पुराऽद्ययावद्व्यवहृतानि तथैव तावपि शब्दौ तादृशवस्तूनां सद्भावव्यवस्थापनोपयिकं संस्कारं मनुष्यात्मसु दृढं जनयेताम् ॥

१५ ॥ द्रव्यमुदाह्रियते ॥ —वस्तुत्वेन परिगृहीतानि पदानि कियद् बुद्धिं भ्रामयन्तीति शास्त्रीयग्रन्थानामवधानपूर्वकमध्ययनमनल्पं प्रकाशयेत् । शब्देष्वीदृशो दुष्प्रयोगः किंचिदेवाशङ्क्यते इत्यपि तत एव ज्ञायेत । अत्र सुपरिचितमेकमेवोदाहरणं प्रदर्श्यते । मूलद्रव्यमिति पदं पिण्डपदवाच्यविज्ञानाद्भिन्नं विज्ञानं बोधयतीत्यस्य सुप्रसिद्धतया संसारे पिण्डाद्भिन्नं वस्तुसत् तादृशं किमपि वस्त्वस्तीतीव मन्यमानाः कथं बहवो मूलद्रव्यविषये विवदन्ते । तत्पदवाच्यविज्ञानयोर्वस्तुत ऐकरूप्ये तु सर्वेषु स्थलेषु ते पदे परस्परार्थतात्पर्येण विनिमातुं शक्येताम् । वयं तु मन्यामहे सर्वेषां पिण्डानामेकविधं द्रव्यमिति कथनस्यौचित्येऽपि सर्वेषां मूलद्रव्याणामेकः पिण्ड इति कथयितुं न शक्यते । एकः पिण्डः पिण्डान्तरात्स्थूलतर इति साधु व्यवह्रियते ऽथापि एकं मूलद्रव्यं मूलद्रव्यान्तरात्स्थूलतर इति कथनं न साम्प्रतं नापि केन चित् कदा चिदपि प्रयुज्यते । एवं सति कस्मादेतत् । पिण्डमूलद्रव्ययोः परस्पराधीनसत्ताकतया वस्तुतो ऽभेदे ऽपि मूलद्रव्यपदं पिण्डपदं च विभिन्नएव विज्ञाने बोधयतः । ययोर्मध्ये मूलद्रव्यं नास्त्यवयवी किंतु शरीरस्यावयव इति यावत् । यतः पिण्डपदं घनं विस्तारशालि साकारं च द्रव्यं बोधयति मूलद्रव्यं तु तस्यांशिकं विसंकुलं विज्ञानम् । मूलद्रव्यपदं शरीरस्याकारविस्तारावबोध्यैव

घनत्वं स्थिरांशं च बोधयतीति मे प्रतिभाति । अत एव च मूलद्रव्यविषये सर्वदैकरूप्यमेव निगद्यत इति प्रवादः । एतस्य वस्तुतः सर्वदैकाकारैकजातीयघनद्रव्यविज्ञानमात्रात्मकत्वात् । एतस्य मूलद्रव्यविज्ञानात्मकत्वाद् यद्यप्याकारविस्तारयोर्वैविध्यस्य संभवेन शरीराणां भेदं कल्पयामो वदामश्चाथापि घनत्वभेदादधिकं कमपि मूलद्रव्यभेदं न कुत्रापि कल्पयामो वदामो वा । परं तु घनताया आकारविस्ताराभ्यामृते ऽवस्थानस्यासंभवात् याथार्थ्येन कस्य चित्सद्वस्तुनो नामतया मूलद्रव्यपदस्य ग्रहणं मूलधातुविषये शास्त्रिणां मनःसूपस्थितान् तद्ग्रन्थेषु च वर्णितान् गूढानबोध्यान् संवादान् वादांश्च जनयति । इदं चापूर्णत्वं दुष्प्रयोगो वा कियद्भिर्भूयिष्ठैरन्यैः पदैः संबध्येतेति विचारणीयमवशिष्यते । मन्ये एतत्कथयितुमर्हामि, यद् यदि पदानि वस्तुतो यद्बोधकानि सन्ति तद्बोधायैव प्रयुज्येरन्, अस्मद्विज्ञानलिङ्गतयैव न पुनः सद्वस्तुज्ञापकतयेति यावत्,तर्हि संसारे विवादा अत्यन्तं विरलतराः स्युः । यतो यदा धात्वादिपदविषये किंचित् तर्क्यते तदा संसारे वस्तुनो विद्यमानस्य वस्तुनो यथार्थानुरूपं भवति न वेति तत्पदबोध्यविज्ञानविषये एव वस्तुतस्तर्क्यते । किंच यदि मनुष्याः स्वोच्चरितपदबोध्यविज्ञानान्येव तात्पर्यगोचराणि कुर्युस्तर्हि तत्त्वमस्तीत्यस्य साधने भ्रमो विवादो वा ऽर्धोपि न स्यात् ॥

१६ ॥ एतच्च भ्रमान् स्थिरान् करोति ॥—परं तु यत्किमपि शब्दानामस्माद्भ्रमाज्जायमानमसौकर्यं वस्तुतत्त्वासंबद्धज्ञानान्युत्पादयता दैनंदिनेन सुपरिचितेन च व्यवहारेण जायते । पिता पाठकः प्यारिसनगरीयो धर्मप्रवक्ता ऽन्योपि वा एवंविधाः पण्डिता यान् शब्दान् प्रायुञ्जत ते न किमपि प्राकृतिकं सद्वस्तु बोधितवन्त इति विचारो दुष्करः । स च विचारो लघिष्ठकारणानामेकतमो येन मनुष्यास्तत्त्वैकफलेषु शास्त्रीयमतेष्वपि स्वीयान् भ्रमान् कष्टेन परिहरन्ति । शब्दानां चिरंतनव्यवहारेण तदात्मसु बद्धमूलतया तत्संबद्धानि मिथ्याज्ञानानि परिहर्तुं न शक्यन्त इति नाश्चर्यमावहति ॥

१७ ॥ (५) पदानि यानर्थान्बोधयितुं न शक्नुवन्ति तदर्थपरतया व्यवस्थापनम् ॥—अपरो ऽपि पञ्चमः शब्दानां दुष्प्रयोगः स्वेन कथमपि बोधयितुमशक्यानां वस्तूनां प्रातिनिध्येन व्यवस्थापनम् । येषां शाब्दस्वरूपाण्येव केवलमस्माभिर्ज्ञायन्ते तादृशद्रव्याणां साधारणनामानि यदा वाक्येषु प्रयुज्यन्ते तद्विषये किमपि विधीयते निषिध्यते च तदा प्रायशो वयं कल्पयामो यत्तानि द्रव्यजातिविशेषस्यार्षं स्वरूपं बोधयितुं प्रयोक्तव्यानि । यतो यदा मनुष्यः स्वर्णमस्त्याघातवर्द्धनीयमिति कथयति तदा स यत्किमपि स्वर्णमित्यभिधीयते तदस्त्याघातवर्द्धनीयमित्येतावन्मात्रतात्पर्येण न तद्वाक्यं प्रयुङ्क्ते ऽपि तु यत्स्वर्णस्यार्षस्वरूपवत् तदस्त्याघातवर्द्धनीयमिति । तथा चैतदुक्तं भवति । आघातवर्धनीयता स्वर्णस्यार्षस्वरूपेणाविनाभूता तदधीनाचेति । परं तु तदार्षं स्वरूपं किंरूपमस्तीत्यस्य मनुष्यैरज्ञातत्वादात्मगत आघातवर्द्धनीयतायाः संबन्धो वस्तुतः स्वाज्ञातस्वरूपेण सह नास्ति, अपि तु तदर्थं प्रयुक्तेन स्वर्णपदेनैव । इत्थं च मनुष्यस्य साधु लक्षणं विवेकवत्प्राणीति न पुनः पक्षहीनो द्विपाद्विस्तृतनख इति यदा ऽस्माभिरभिधीयते तदा वयं तस्मिन्स्थले मनुष्यपदं कस्याश्चिद्विशेषजातेरार्षस्वरूपस्य बोधाय प्रयुक्तं बोधयेच्च विवेकवत्प्राणीत्येतदार्षं स्वरूपं द्विपात्पक्षहीनविस्तृतनख इत्येतदार्षस्वरूपतः साधुतरं वर्णितमिति । कथमन्यथा मनुष्यपदं स्वाभिप्रेतविज्ञानातिरिक्तार्थे ऽप्रयुज्य स्वबोध्यातिरिक्तार्थमपि तत्पदं बोधयेदिति कल्पनामकृत्वा च यथा ऽरिस्तुतिलाचार्यो यद्बोधाय मनुष्यपदं प्रायुङ्क्त तन्मिश्रविज्ञानं परस्परसंयुक्तशरीरविज्ञानतर्कशक्तिविज्ञानघटितमरचयत् तथैवौचित्येन प्लेटोमहाशयो ऽपि मनुष्यपदं यत्किंचिदाकारविशेषप्रभृतिबाह्यगुणैः शरीरान्तराद्भिद्यमानेन शरीरविज्ञानेनैव घटितस्य मिश्रविज्ञानस्यैव बोधाय प्रयोक्तुं ना ऽशक्नोत् ॥

१८ ॥ तथाहि । द्रव्याणामार्षस्वरूपस्य बोधाय पदानां प्रयोगः ॥—सत्यं चैतद् यदि द्रव्याणामार्षस्वरूपाणि तत्तत्पदबोध्यस्वात्मगतविज्ञानात्मकानि स्युस्तर्हि द्रव्यनामानि अधिकतरमुपयोगीनि तद्घटितवा-

क्यानि वा ऽधिकतरं नियतानि रचितानि स्युः । तेषामार्थस्वरूपाणामभावेनैव शब्दास्तद्विषयके संवादे तेषां ज्ञानं निश्चयं चाल्पिष्ठमेव जनयतः । अतश्च मनो यावच्छक्यैतद्दोषपरिहाराय तेषां शब्दानां तादृशार्थस्वरूपवद्वस्तुबोधकतां कल्पयति तेन च मन्ये तत्समीपतरवस्तुबोधकता संपद्यते । यतो यद्यपि मनुष्यपदं स्वर्णपदं वा वस्तुतः केवलं द्रव्यजातिविशेषे सह समाविष्टानां धर्माणां मिश्रविज्ञानमेव बोधयति तथापि सर्वोपि तयोः शब्दयोः प्रयोगे यदधीनास्ते गुणाः सन्ति तादृशार्थस्वरूपवद्वस्तुबोधाय तौ द्वावपि प्रयुज्येते इति कल्पयति । अनेन चास्माकं शब्दानां दोषस्य ह्रासो नैव भवति प्रत्युत यदा तेन पदेन कथमपि बोधयितुमशक्यस्य कस्य चिद्वस्तुनो बोधाय तानि प्रयोक्तुमिच्छामस्तदा सुस्पष्टेन दुष्प्रयोगेण स दोषो ऽस्माभिर्वर्ध्यते ॥

१९ ॥ अतश्च वयं सर्वविधं परिवर्तनं विज्ञानानामेव कल्पयामो न तु विशेषजातीनाम् ॥—मिश्रभावेषु मिश्रविज्ञानघटकानां विज्ञानानां मध्ये एकस्यापि परित्यागे विपर्यये वा कुतो वस्त्वन्तरं जात्यन्तरं तद्भवितुमर्हतीत्यत्र हेतुरस्मादभिहितो भवति । स्फुटं चैतत् क्रीडायुद्धे ऽङ्कतिपूर्विकाहत्या आकस्मिकोमनुष्यघातो मनुष्यहत्या पितृहत्यादिषु । अत्र कारणं तत्पदबोध्यविज्ञानस्यार्थशाब्दोभयरूपता तस्य नाम्नस्तत्स्वरूपातिरिक्तेन केनाप्यन्यस्वरूपेण सहासंबन्धश्च । द्रव्येषु तु नैवम् । यद्यपि स्वर्णपदवाच्ये स्वीयमिश्रविज्ञाने एकं यत्किंचिद् योजयति परश्च परित्यजति यदि परं आदत्ते पूर्वंस्त्यजति, तथापि मनुष्याः प्रायश एतन्न विचारयन्ति, अत एव विशेषजातयो जात्यन्तररूपेण परिणमन्ते । यतः प्रयोक्तारः स्वात्मसु तान्नाम विचिन्त्य तेषां धर्माणामाश्रयेण सद्वस्तुनो ऽपरिवर्तनीयेनार्थस्वरूपेणेदं संबद्धमस्तीति कदा चिदेव कल्पयन्ति । यः स्वर्णमिश्रविज्ञाने तद्घटकतया पूर्वमकल्पितं स्थिरत्वं द्रवद्रव्यविशेषसंयोगेन द्रवभावं च योजयति, स तस्या विशेषजातेः परिवर्तनं न कल्पयति किं तु स्वीयपूर्वमिश्रविज्ञानघटकैः शुद्धविज्ञानैः सह वस्तुतः सर्वदा संबद्धस्य शुद्धविज्ञानान्तरस्य योजनेन पूर्वगृहीतविज्ञानस्य पूर्णतां कल्पयति ।

स्वानवधारितविज्ञानकवस्तुना सहायं पदस्य संबन्धः किमपि साहाय्यमकृत्वा केवलमधिकं शङ्का उद्भावयति । यतो ऽनेन द्रव्यविशेषजातीनामार्थस्वरूपेण सह संबन्धेन स्वर्णपदं शुद्धविज्ञानानां न्यूनाधिकसमुदायबोधकतया सभ्यसंवादे तादृशद्रव्यविशेषजातिबोधनेन साधु कार्यं निर्वहत्सत् यदा तद्द्रव्यं स्वयमेव नष्टं विपर्यस्तं वा भवति तदा तत्पदस्य सर्वथा ऽविज्ञातयत्किंचिद्विज्ञानतात्पर्येण प्रयोगात् तत एव च वस्तुमात्रबोधनासामर्थ्येन सर्वथा निरर्थकमेव संपद्यते । यतः कामं सर्वत्रैकरूप्येण चिन्तयितुं शक्यत्वे ऽपि साधुविचारिते सति यद्यपि संवादे विवशा भूत्वा पदमेव तत्तद्वस्तुनः प्रातिनिध्येन प्रयुञ्ज्महे ऽथापि द्रव्यखण्डविषयकस्तद्वाचकनामविषयकश्च तर्को ऽत्यन्तं विभिन्नप्रकारक एव प्रत्येष्यते इति ॥

॥ शेषोग्रे भविता ॥

---

THE

# NYÁYADARSÁNA.

WITH THE COMMENTARY BY VÁTSYÁYANA.

*Continued from page 64.*

Now about the motives. What actuates one to make efforts is called the motive [Prayojana]. In all living beings, in all works, and all sciences there is present an object wishing to obtain or to shun which one sets out to work; even Nyáya is dependent upon such an object. Now what is [meant by the word] Nyáya? Nyáya signifies the investigation of an object by means of the proofs or

---

## अथ न्यायदर्शनवात्स्यायनभाष्यम् ।

अथ प्रयोजनम् । येन प्रयुक्तः प्रवर्त्तते तत् प्रयोजनम् । यमर्थमभीप्सन् जिहासन् वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्व्वाणि कर्म्माणि सर्व्वाश्च विद्या व्याप्ताः, तदाश्रयश्चन्यायः प्रवर्त्तते, कः पुन-

instruments of knowledge. It is an inference dependent upon perception and authoritative assertion. Such an inference is called Anvíkshá or the reviewing of what has already been viewed by means of perception and testimony. Nyáyavidyá or the science of Nyáya, as proceeding by Anvíkshá or review, is called Ánvíkshikí or the science of review. Whereas the inference not agreeing with perception and testimony is [said to be not a Nyáya but] only a semblance of a Nyáya or Nyáyábhása. Among the arguments of this kind the debate (Váda) and wrangling [Jalpa] possess a motive. But cavilling is to be examined. One using Vitaṇḍá or cavilling is called Vaitaṇḍika or a caviller. If he, when asked for his motive, should admit it to be such and such a doctrine or such and such an opinion, he would lose the quality of being a caviller; if he, on the other hand, should not admit it, it would be proved that he is neither a man of the world nor a man of science. And if he should state his motive to be only to declare what is contradictory to the opinion of his adversary, even then the matter would not be different. For, in case he really believes and understands what he makes known to others, he loses the character of being a caviller; if he, on the contrary, does not believe it, his assertion that his motive is to state objections to the opinion of his

---

रयं न्यायः । प्रमाणैरर्थपरीक्षणंन्यायः प्रत्यक्षागमाश्रितमनुमानं सान्वीक्षा प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम् । यत् पुनरनुमानं प्रत्यक्षागमविरुद्धंन्यायाभासः स इति ॥ तत्र वादजल्पौ सप्रयोजनौ, वितण्डा तु परीक्ष्यते वितण्डया प्रवर्त्तमानो वैतण्डिकः । सप्रयोजनमनुयुक्तो यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य सिद्धान्त इति वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते नायं लौकिको न परीक्षक इत्यापद्यते । अथापि परपक्षप्रतिषेधज्ञापनं प्रयोजनं ब्रवीति, एतदपि तादृगेव । यो ज्ञापयति यो जानाति यच्च ज्ञाप्यते एतच्च प्रतिपद्यते यदि, तदा वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते, परपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतदस्य वाक्यमनर्थकं भवति ।

adversary, would be without sense; for cavilling is a number of assertions which do not establish any opinion. If he believes what is conveyed by his assertions, it would be considered as his opinion established by himself; if he, on the other hand, does not believe it, the assertions would be a mere meaningless prating, and consequently destitute of the character of cavilling. So much for cavilling.

Now for the popular datum [Drishṭánta]. It is the perceptible object regarding which the perception of the ordinary observers is not obstructed or impeded. It is separately enunciated, though included in the category of the objects, as it forms the condition of inference and testimony. These can take place only when there is some popular datum, and they do not take place, when there is none. Even the syllogism, proceeds supported by it [the popular datum]. To oppose one's adversary's opinion by disagreeing with the popular data would be blamable. One can prove one's own opinion by agreeing with the popular data. But an atheist admitting the popular data will lose the character of being an atheist; if on the other hand he does not admit them, what arguments will he have for refuting his adversary? By the predescribed popular data, it can be said that "the

---

वाक्यसमूहश्च स्थापनाहीनो वितण्डा, तस्य यद्यभिधेयं प्रतिपद्यते सोऽस्य पक्षः स्थापनीयो भवति । अथ न प्रतिपद्यते प्रलापमात्रमनर्थकं भवति वितण्डात्वं निवर्त्तत इति । अथ दृष्टान्तः । प्रत्यक्षविषयोर्थः । यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते स च प्रमेयं तस्य पृथग्वचनञ्च तदाश्रयावनुमानागमौ । तस्मिन् सति स्यातामनुमानागमावसति च न स्याताम् । तदाश्रया च न्यायप्रवृत्तिः । दृष्टान्तविरोधेन च परपक्षप्रतिषेधो वचनीयो भवति दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति, नास्तिकश्चन दृष्टान्तमभ्युपगच्छन्नास्तिकत्वं जहाति अनभ्युपगच्छन् किंसाधनः परमुपालभेतेति निरुक्तेन दृष्टान्तेन शक्यमभिधातुम् 'साध्यसाधर्म्यात् तद्धर्म्मभावी दृष्टान्त उदाहरणं तद्विपरीता द्विपरीतमिति' अस्त्ययमित्य-

example [Udáharaṇa] is a popular datum [Drishṭánta] known to be possessed of the character of what is to be established [Sádhya] from its being of the same nature as it [Sádhya];" or else, "the example [Udáharaṇa] is a popular datum [Drishṭánta] known not to possess the character of what is to be established [Sádhya], from its being of a nature quite opposite to that of the Sádhya.

That which is generally admitted as existing, is called the established truth [Siddhánta]. It is one of the objects of legitimate knowledge [Prameya]. The reason, why it is separately enunciated, is that the variety of the established truths gives rise to debate [Váda] wrangling [Jalpa] and cavilling [Vitaṇḍá], which cannot take place if there be no established truths.

The aggregate of words [or propositions] by which the demonstration of what is to be proved, is fully accomplished, has five members which are called thus with regard to the aggregate. The five members constitute a group of the proofs [Pramáṇa]: The proposition [Pratijñá] is an authoritative assertion [Ágama], the reason [Hetu] is an inference, the example [Udáharaṇa] is a perception, the application [Upanayana] is the recognition of similarity, the conclusion [Nigamana] is the displaying of the force of all the members to determine a certain object. Such is the great

नुज्ञायमानोऽर्थः सिद्धान्तः, स च प्रमेयं, तस्य पृथग्वचनम्, सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्त्तन्ते नातोऽन्यथेति साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते। तेषु प्रमाणसमवायः, आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षं, उपनयनमुपमानम्, सर्व्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति सोऽयं परमो न्याय इति एतेन वादजल्पवितण्डाः प्रवर्त्तन्ते नातोऽन्यथेति तदाश्रया च तत्त्वव्यवस्था। ते चैतेऽवयवाः शब्दविशेषाः सन्तः प्रमेयेऽन्तर्भूता एवमर्थम् पृथगुच्यन्त इति। तर्को न प्रमाणसङ्गृहीतो न प्रमाणान्तरम् प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते[1], तस्योदाहरणं

1. कल्पते instead of कल्प्यते which is the reading found in the edition of the Bibliotheca Indica.

Nyáya or Syllogism. By means of this only, the debate [Váda] wrangling [Jalpa] and cavilling [Vitaṇḍá] are carried on, and not in any other way. Moreover, the establishment of a truth is dependent upon it [Nyáya]. Its five members though included in the category of the objects, as being only different sorts of assertion, are separately enunciated for the said reason.

The reasoning [Tarka] is neither included in any of the instruments of knowledge [Pramáṇa], nor is it a different species of them; but as being subservient to the instruments of knowledge, it succeeds in establishing a truth. Take for example the following question: Does birth originate from a produced cause (i. e. a cause dependent on our activity viz. our actions during a former life) or from a non-produced cause (a cause not dependent on our activity f. i. the will of god) or is it the offspring of mere chance? In a doubtful case like this, the reasoning [Tarka] takes place on the evidence of the proofs. To explain: In the first place, if it be held that birth is caused by some produced cause, the cessation of birth can be effected by the annihilation of its cause.

---

किमिदं जन्म कृतकेन हेतुना निर्वर्त्त्यते[1] आहोस्विदकृतकेन अथाकस्मिकमिति एवमविज्ञातेर्थे कारणोपपत्त्या ऊहः प्रवर्त्तते यदि कृतकेन हेतुना निर्वर्त्त्यते[1] हेतूच्छेदादुपपन्नोयं जन्मोच्छेदः । अथाकृतकेन हेतुना ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोऽयं जन्मोच्छेदः । अथाकस्मिकमतोऽकस्मान्निर्वर्त्त्यमानं[2] न पुनर्निर्वर्त्स्यतीति निवृत्तिकारणं नोपपद्यते तेन जन्मानुच्छेद इति । एतस्मिंस्तर्कविषये कर्म्मनिमित्तं जन्मेति प्रमाणानि वर्त्तमानानि तर्केणानुगृह्यन्ते तत्त्वज्ञानविषयस्य विभागात्तत्त्वज्ञानाय कल्पते[3] तर्क इति । सोयमित्थंभूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय वाऽर्थस्य

---

1. निर्वर्त्त्यते instead of निवर्त्त्यते B. I.
2. निर्वर्त्त्यमानं instead of निर्वर्त्स्यमानं B. I.
3. कल्पते instead of कल्प्यते B. I.

In the second place, if birth is said to be produced from an unproduced cause, the cessation of it cannot be accomplished, the destruction of the cause being quite impracticable. In the third place, if it be causeless, no cause of its cessation is possible; for it is not probable that what now takes place will not do so in the future; and consequently there will be no determined cessation of birth. But in this case, the reasoning [Tarka] favours the authorities stating that birth is caused by the actions [done in a former life]. As the reasoning distinguishes the true object from what is not true, it is said to succeed in establishing the truth. The reasoning of such a description as that mentioned above, when possessed of proofs, tends in a debate either to prove or disprove an object; and for this purpose it is separately enunciated, though included in the category of the objects.—Determination [Nirṇaya] is the knowledge of the truth resulting from the proofs or the instruments of knowledge. In it terminates the debate [Váda]. The wrangling [Jalpa] and cavilling [Vitaṇḍá] are said to support it [the determination]. These two, i. e. reasoning and determination, carry on the daily business of man. For this reason, the determination [Nirṇaya] though included in the objects, is separately enunciated.

The debate [Váda] which is a collection of assertions or speeches proceeding from many speakers, tending to prove opposite

भवतीत्येवमर्थम्पृथगुच्यते प्रमेयान्तर्भूतोपीति, निर्णयस्तत्त्वज्ञानम् प्रमा-
णानां फलम्, तदवसानो वादः, तस्य पालनार्थं जल्पवितण्डे, तावेतौ
तर्कनिर्णयौ लोकयात्रां वहत इति सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थम्
पृथगुद्दिष्ट इति । वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्य-
तराधिकरणनिर्णयावसानो वाक्यसमूहः पृथगुद्दिष्ट उपलक्षणार्थम्, उपल-
क्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति तद्विशेषौ जल्पवितण्डे तत्त्वाध्य-
वसायसंरक्षणार्थमित्युक्तम् । निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे
चोदनीया भविष्यन्तीति, जल्पवितण्डयोस्तु निग्रहस्थानानीति छलजाति-

opinions and terminating in the establishment of one of the two opinions is separately enunciated for the sake of information. For, if we are informed about it, it enables us to arrive in our discussions at the knowledge of truth. It has been said, that wrangling and cavilling which are different kinds of debate, are used for the purpose of defending or supporting one's certainty of truth.—The fallacies [Hetvábhása] are enunciated separately from the predicaments of rebuke [Nigrahasthána], for the former are often started in debate [Váda], while the predicaments of rebuke are made use of in wrangling and cavilling; therefore deception [chhala] futile arguments [Játi] and predicaments of rebuke are separately enunciated for the sake of information. When the nature of deception, futile arguments and predicaments of rebuke is well known to us, we can avoid them in our own arguments and detect them in those of our adversaries. We can easily refute the futile arguments started by our opponents as well as we can make use of them ourselves. Thus Anvíkshikí or the science of review being divided into the categories of instruments of knowledge and so forth is said to be "in the department of learning as a lamp to all the sciences, a plan for all the actions and a support to all the religious duties." The meaning of the phrase 'Tattvajńána,' or knowledge of the truth which is required for the sake of the attainment of the highest

---

निग्रहस्थानानाम् पृथगुद्देश उपलक्षणार्थं इति । उपलक्षितानां स्ववाक्ये परिवर्जनम् । छलजातिनिग्रहस्थानानाम् परवाक्ये पर्य्यनुयोगः । जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः स्वयञ्च सुकरः प्रयोग इति । सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना "प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम् आश्रयः सर्व्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता" तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम् । इहत्वध्यात्मविद्यायामात्मादितत्त्वज्ञानम् । निःश्रेयसाधिगमोऽपवर्गप्राप्तिः । तत् खलु निःश्रेयसं किन्तत्त्वज्ञानानन्तरमेव भवति नेत्युच्यते किन्तर्हि तत्त्वज्ञानात् ॥ १ ॥

good, is to be understood according to the nature of the science. In this science, that is, the science of mind, knowledge of truth signifies the true knowledge of the soul and so forth; the attainment of the highest good means the attainment of beatitude. But now the question arises: is the highest good attained immediately after one has acquired the knowledge of truth? We answer: No.—How then?

### 2. APHORISM.

When (from the knowledge of truth) successive annihilation of pain, birth, activity, fault and false notions (beginning with the last member of the series) takes place, there ensues the annihilation of the member immediately preceding (in the series) and from this results emancipation.

### 2. COMMENTARY.

There is a variety of false notions concerning the objects, from the soul to beatitude; as for example, to consider the soul as not existing, the non-soul as the soul, misery as happiness, the transient as everlasting, the unsupporting as supporting, the fearful as fearless, the disgusting as agreeable, that which is to be

---

सू० दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥

भा० तत्रात्माद्यपवर्गपर्य्यन्तप्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्त्तते आत्मनि तावन्नास्तीति अनात्मन्यात्मेति दुःखे सुखमिति अनित्ये नित्यमिति अत्राणे त्राणमिति सभये निर्भयमिति जुगुप्सितेऽभिमतमिति हातव्येऽप्रतिहातव्यमिति प्रवृत्तौ नास्ति कर्म्म, नास्ति कर्म्मफलमिति दोषेषु नायं दोषनिमित्तः संसार इति प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्यच भवेदिति । अनिमित्तं जन्म । अनिमित्तो जन्मोपरम इत्यादिमान् प्रेत्यभावोऽनन्तश्चेति नैमित्तिकः सन्न

relinquished as not to be relinquished; the activity as bereft of actions and fruits from them; this worldly existence though full of vices as not causing them [vices]; there is no mind or soul transmigrating that dies to be born again; mortal life is causeless, so is the cessation of it; the transmigration of the soul has a beginning but no end and it is produced by some cause, itself not being the cause of any action. The state of being dead and that of being born, which are accompanied respectively by the destruction and restoration of the continuous connection of the body, senses, intellection and feelings, are without the soul. Beatitude is something terrible. It is the cessation of all actions and much good is lost in beatitude which is destitute of all things. How, therefore, could a wise man be pleased with such beatitude which is a mere unconscious state [of mind] deprived of all feelings of pleasure. From such false notions liking for pleasant things and dislike of unpleasant things is produced. By the influence of love and hatred the vices of calumny, jealousy, fraud, avarice and so forth are produced. Being actuated by these vices, one commits, with the body, murders, theft and illicit carnal intercourse; utters with the tongue false, harsh piercing and irrelevant language; with the mind, hates other people, covets their riches, and embraces atheism. Such is the sinful activity which is leading to irreligiousness. Whereas the

---

कर्म्मनिमित्तः प्रेत्यभाव इति । देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति । अपवर्गो भीष्मः । स खल्वयं सर्व्वकार्य्योपरमः सर्व्वविप्रयोगेऽपवर्गे बहु च भद्रकं लुप्यत इति कथं बुद्धिमान् सर्व्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति । एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः रागद्वेषाधिकाराच्चासूयेर्ष्यामायालोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति । वाचाऽनृतपरुषसूचनासम्बद्धानि मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा शरीरेण दानं परित्राणं परिचरणञ्च । वाचा सत्यं

pious activity is leading to acts of virtue and religion; such as, with the body, donation, protection and service; with the tongue speaking true, advantageous and agreeable language and reading the Vedas; with the mind, kindness, contentedness and faith. Here, by the word "activity" [Pravṛitti] are meant religion [Dharma] and irreligion [Adharma], although they really are the means of it only; just in the same manner as food is said to be the vital airs [Práṇa] of living beings, although it is only the means of [supporting] the vital airs. Such activity is the cause of birth or mortal life, either noble or ignoble. Birth is defined as the manifestation of body, senses and intellection, all of them being combined. Where there is birth there is pain, which is felt as disagreeable, it being distress, anguish or misery. Worldly existence [Sansára] is nothing but the uninterrupted existence of all these phenomena, of which the false notion is the first and pain, the last. When by means of knowledge of the truth, the false notion is removed, then the vices depart; on the removal of the vices, activity ceases; on the departure of activity, birth is stopped; on the cessation of birth, misery is annihilated; on the annihilation of misery the final or perfect beatitude or the highest good ensues. Now the knowledge of truth is explained by the contrary of the false notions: as, for

---

हितं प्रियं स्वाध्यायञ्चेति । मनसा दयामस्पृहां श्रद्धाञ्चेति सेयं धर्म्मा-य । अत्र प्रवृत्तिसाधनौ धर्म्माधर्म्मौ प्रवृत्तिशब्देनोक्तौ । यथाऽन्नसाधनाः प्राणाः । "अन्नं वै प्राणिनः प्राणा इति" । सेयं कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्, जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः । तस्मिन् सति दुःखम्, तत्पुनः प्रतिकूलवेदनीयम् बाधना पीडा ताप इति । इमे मिथ्याज्ञानादयोदुःखान्ता धर्म्मा अविच्छेदेनैव प्रवर्त्तमानाः संसार इति । यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्ति दोषापाये प्रवृत्तिरपैति प्रवृत्त्यपाये जन्मापैति जन्मापाये दुःखमपैति दुःखापाये चात्यन्तिकोऽपवर्गो निःश्रेय-

instance, to understand that the soul is existing, that the non-soul is different from the soul and that all other things, namely, misery, the transient, the unsupporting, the fearful, the disgusting and the relinquishable, are just so as they really are; that activity is possessed of actions and fruits of them. Again, that the worldly existence [Sańsára] is caused by the vices, which are found in the world; that the soul or the animal soul undergoes the state of transmigration, that is, is born again after having been dead; that the mortal life, as well as its cessation, has its cause; that the transmigration of the soul has no beginning, but terminates in beatitude, and being produced by some cause is itself the cause of [one's] activity; that transmigration, though belonging to the soul, consists of successive destruction and restoration of the continuous connection between the body, senses, intellection and feelings; that beatitude is peace and is quite destitute of all things and actions; that by means of it all pain and all dreadful sin is removed. How should a wise man, therefore, not like beatitude which eradicates all misery, being itself quite free from every feeling of pain. As food mixed with intoxicating liquor or poison is unacceptable, just so is happiness mixed with pain.

This science [Nyáyavidyá] proceeds by three different ways, namely by enunciation, definition and examination. Enunciation is

---

समिति । तत्त्वज्ञानन्तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम्, आत्मनि तावदस्तीति अनात्मन्यनात्मेति एवं दुःखेऽनित्येऽत्राणे संभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम्, प्रवृत्तौ अस्ति कर्म्म अस्ति कर्म्मफलमिति दोषेषु दोषनिमित्तोऽयं संसार इति । प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्व आत्मा वा यः प्रेत्य भवेदिति । निमित्तवज्जन्म निमित्तवान् जन्मोपरम इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्त्तत इति । अपवर्गः शान्तः खल्वयं सर्व्वविप्रयोगः सर्व्वो परमोऽवर्गः । बहु च कृच्छ्रं घोरं पापकं लुप्यत इति

the mere enumeration of the categories by their names. Definition is that character belonging to one of the enunciated objects, which distinguishes it from all the other objects not possessing that character. Examination is the investigation undertaken in order to ascertain, by means of the proofs whether the definition or character of an object agrees with it (the defined object) or not. In this work, the definitions of some categories are given after their divisions are shown; as the definition of the proofs [Pramáṇa] and those of the objects [Prameya]; and sometimes, after the definitions of some are given, their divisions are shown, as in the case of fraud [chhala]; "Fraud is to contradict another's assertion by making use of its (unintentional) ambiguity. It is of three kinds." Now the author gives the division of what has been enunciated i. e. the proofs [Pramáṇa].

### 3. APHORISM.

Perception [Pratyaksha] inference [Anumána] comparison or knowledge of resemblance [Upamána] and words or testimony [Śabda] are the instruments of knowledge or proofs [Pramáṇa].

### 3. COMMENTARY.

The word Pratyaksha [in the text] signifies the abiding of the senses in objects. The word 'abiding' means either the

कथं बुद्धिमान् सर्व्वदुःखोच्छेदं सर्व्वदुःखासंविदपवर्गं न रोचयेदिति। यथा मधुविषसंपृक्तान्नमनादेयमिति एवं सुखं दुःखानुषक्तमनादेयमिति। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः। उद्देशो लक्षणं परीक्षा चेति, तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः, तत्रोद्दिष्टस्याऽतत्त्वव्यवच्छेदको धर्म्मो लक्षणम्। लक्षितस्य तथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा, तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते यथा प्रमाणानां प्रमेयस्य च, उद्दिष्टस्य लक्षितस्य च विभागवचनं यथा छलस्य। वचनविघातोऽर्थविकल्पोपपत्त्या छलम् तत् त्रिविधमिति। अथोद्दिष्टस्य विभागवचनम्॥

connection of an organ of sense with its object, or the cognition itself [produced from the contact]. Whenever the connection [of the senses with their objects] takes place, right notion follows; and when we have the right notion there arises within us either a desire to possess (the object) or a desire to shun it or a feeling of indifference.—Inference [Anumána] means to know something through the knowledge of a sign.—

Comparison [Upamána] means the knowledge of resemblance; as, we know that just as the cow is so is the Gavaya. Resemblance is a common property [of things].—By words or testimony [Śabda] we mean significant words. It must be understood that proofs [Pramáṇa] are called the instruments of knowledge on account of the literal sense of the word Pramáṇa, namely, that by which something is known. In like manner, all the words indicating the particular kinds of proofs [Pramáṇas] are explained in the same way as the term Pramáṇa. Now, do the proofs [Pramáṇas] promiscuously show us the same objects; or do they discriminately have their proper or separate objects? Both of these cases are observed. As for instance, we know the soul

---

सू० प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

भा० अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम् । वृत्तिस्तु सन्निकर्षो ज्ञानं वा यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम् । अनुमानम् । मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानम् । उपमानं सारूप्यज्ञानम्[1] यथा गौरेवं गवय इति, सारूप्यन्तु[2] सामान्ययोगः । शब्दः, शब्द्यतेऽनेनार्थ इत्यभिधीयते ज्ञाप्यते । उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्बोद्धव्यम्, प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दस्तद्विशेषसमाख्याया अपि[3] तथैव

---

1. V. L. सामीप्यज्ञानं.
2. V. L. सामीप्यन्तु.
3. V. L. °समाख्यास्वपि.

as existing either from the words or testimony of trustworthy people or from the inference which we draw from the signs of the soul, namely, desire, aversion, volition, pleasure, pain and cognition. Moreover, the soul is directly perceived by a sage by means of his religious meditation during which his mind (manas) is united with his soul (átman). Another example is the following: we know from testimony that there is a fire in a certain place; stepping on towards the place, we can conclude that there is a fire, from the sight of the smoke; having got quite close to it we can directly perceive it. Now in order to exemplify the case where the different proofs do not apply to the same object, we quote the following injunction: one wishing to attain paradise should offer the Agnihotra-sacrifice. Here an ordinary man does not know what paradise is either by inference or by perception. On hearing thunder we know the cause of the sound only by inference, for it is known neither by perception nor by testimony. To have a cognition of our own hand which we directly perceive we need neither inference nor testimony. Amongst all the instruments of right notion, perception is the most important. Thus a person who receives information about an object which he desires to know, from the testimony of a truthful man, wants at first to know the same

---

व्याख्यानम् । किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते अथ प्रमेयं व्यवतिष्ठन्त इत्युभयथा दर्शनम् । अस्त्यात्मेत्याप्तोपदेशात् प्रतीयते तत्रानुमानमिच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति । प्रत्यक्षं युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति, अग्निराप्तोपदेशात् प्रतीयते अत्राग्निरिति, प्रत्यासीदता धूमदर्शनेनानुमीयते । प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते, व्यवस्था पुनरग्निहोत्रं जुहुयात् स्वर्गकाम इति । लौकिकस्य स्वर्गे न लिङ्गदर्शनं न प्रत्यक्षम् । स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम् तत्र न प्रत्यक्षं नागमः, पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानं नागम इति । साचेयं प्रमितिः प्रत्यक्षपरा, जिज्ञासि-

[object] through the inference drawn from the sight of its sign. And then, even after the object has been inferred from the appearance of its sign, yet he desires to perceive it directly, and when the object is directly perceived, his desire to know it ceases. Regarding the example of the fire mentioned above there is a multitude of proofs promiscuously informing the knower of the object in question. Non-promiscuity [asaṅkara] is discriminateness [Vyavasthá].

(Here ends the "trisútríbháshyam" the commentary on the first three sútras).

Now the author proceeds to give the definition of the means of knowledge which have been distinguished in the preceding aphorism.

4. APHORISM.

The not erroneous and determinate knowledge unrepresentable by words and produced from the contact of the organs of sense with the objects is called Perception [Pratyaksha].

COMMENTARY.

That knowledge which is produced from the contact of an organ of sense with its object is called perception. Now, is not

---

तमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते । लिङ्गदर्शनानुमितञ्च प्रत्यक्षतो दिदृक्षते, प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्त्तते। पूर्वोक्तमुदाहरणम् अग्निरिति प्रमातुः प्रमातव्येऽर्थे प्रमाणानां सङ्करोऽभिसंप्लवः। असङ्करो व्यवस्थेति । इति त्रिसूत्रीभाष्यम् ॥ ३ ॥

अथ विभक्तानां लक्षणवचनमिति ॥

---

सू॰ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकम् प्रत्यक्षम् ४ ॥

भा॰ इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यत् ज्ञानं तत् प्रत्यक्षम् । न तर्हीदानीमिदं भवति आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रि-

perception produced in that way that the soul is joined with the internal sensory, [Manas] this with the sense and this with the object? [Yes], but the given definition is not intended to show the full extent of the cause of perception, but only to specify that part of its cause which is particular to it; and consequently the remaining part of it which is common to the knowledge from inference and so forth, is not denied (by this definition) to perception. [It may be urged that] the contact of mind with the senses may be given as the special cause of perception. We answer, that such cannot be the case; for the contact of mind not varying with varying perception is nothing but a cause common to all sorts of perception. As many objects as there are [in the world] so many are the words of designation, by which the objects are known; and from the knowledge of these objects all the worldly business becomes possible. Now, such knowledge produced from the contact of a sense with its object is f. i. the knowledge of colour or of taste. The words "colour" and "taste" are the designations of some objects, and according to these designations of objects the cognitions of them are named. So it is said, 'one knows colour, one knows taste.' Since knowledge conveyed by words of designation would be verbal knowledge [Sábda], that is knowledge produced from hearing the words, therefore the author says in the text that knowledge originating from perception is unrepresentable by words [Avyapadeśya].

---

यमर्थेनेति, नेदं कारणावधारणमेतावत् प्रत्यक्षे कारणमिति किन्तु विशिष्टकारणवचनमिति यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते, यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्यत इति। मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः। भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति। यावदर्थं वै नामधेयशब्दास्तैरर्थसंप्रत्ययः अर्थसम्प्रत्ययाच्च व्यवहारः। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं रूपमिति वा रसइत्येवं वा भवति, रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते रसइति जानीते नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दम्

The relation between an object and its designation, that is, the fact that such and such an object has such and such a designation being known or not known, man can know the object, and after having known the relation between it and its name he can express his notion of the object by its designation. When we perceive an object, the knowledge proceeding from the act of perceiving it cannot be distinguished from our previons knowledge of the same object; the one being quite equal to the other, though differing from it in kind or nature.

F. i. the cognition of fire resulting from inference and the cognition of fire resulting from perception are equal both being cognitions of the same object; at the same time they are different by resulting from different mental processes.

Nor have we any other appellation expressive of the knowledge, whereby we may expressly communicate it to others; since the communication of knowledge is impossible if it should not be expressed. Therefore knowledge is expressed by the word of appellation of the object perceived; that word being joined with the particle 'Iti' [meaning consisting of]. As for instance 'Rúpam iti jñánam' that is, knowledge consisting of the idea of

---

प्रसज्यते अतआहाव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानं तन्नामधेयशब्देन व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसम्बन्धेऽस्यार्थस्याऽयं शब्दो नामधेयमिति, यदा तु सोऽर्थो गृह्यते तदा तत् पूर्व्वस्मादर्थज्ञानान्न विशिष्यते तदर्थविज्ञानं तादृगेव भवति तस्य त्वर्थज्ञानस्यान्यः समाख्याशब्दो नास्ति येन प्रतीयमानं व्यवहाराय कल्पेत[1] न चाप्रतीयमानेन व्यवहारः। तस्माज्ज्ञेयस्यार्थस्य[2] संज्ञाशब्देनेतिकरणयुक्तेन निर्द्दिश्यते रूपमिति ज्ञानं रस इति ज्ञानमिति तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते व्यवहारकालेतु व्याप्रियते, तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति । ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्द-

---

1. कल्पेत instead of कल्प्येत B. I.

2. तस्माज्ज्ञेयस्यार्थस्य instead of तस्याज्ञेयस्यार्थस्य· B. I.

colour; 'Rasa iti jnánam' that is, knowledge consisting of the idea of taste, and so forth.

The word of designation of an object is not employed during the act of perceiving it; it is employed only when perception of an object is to be communicated to others. Therefore, knowledge of an object produced from the contact of a sense with the object, differs from the knowledge conveyed by words. But now somebody might object: When, in summer, solar rays coming into contact with the vapours floating on the earth, meet the eye of a man, a long way off, then he forms the idea of water, produced from the contact of the sense with the object, and this knowledge may be considered 'perception.' (In order to prevent such objections) the text adds the word "not erroneous." To perceive what is not is erroneous perception; and to perceive what is, is not erroneous perception.

A person perceiving a distant object with the eye is not able to determine whether it is a column of smoke or one of dust, and this indeterminate knowledge produced from the contact of the sense with the object may be considered perception; therefore (in order to prevent this assumption) the text adds the word 'determinate.' It must not be understood that indetermi-

माना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते तच्च प्रत्यक्षम् प्रसज्यतइत्यत आह अव्यभिचारीति । यदतस्मिंस्तदिति तद्व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारी प्रत्यक्षमिति । दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा, रेणुरिति वा तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानम् प्रत्यक्षम् प्रसज्यतइत्यत आह व्यवसायात्मकमिति, न चैतन्मन्तव्यम्[1] आत्ममनःसन्निकर्षजमेवानवधारणज्ञानमिति । चक्षुषा ह्ययमर्थं पश्यन्नावधारयति । तथा चेन्द्रियेणो-

1. नचैतन्मन्तव्यं instead of तत्रैतन्मन्तव्यं. B. I.

nate knowledge is possible only from the contact of the soul with the mental sensory [Manas]; for one perceiving an object with the eye cannot determine it, therefore one apprehends, with the mental sensory what one has perceived with the organ of sense. Sometimes one cannot ascertain an object by means of the mental sensory as well as the senses. Such special kind of indetermination or the mere mental deliberation, characterised by the indeterminatedness of an object, both by an organ of sense and by the mental sensory, is doubt [Sanśaya] which is not possible before the said indetermination takes place. Always in perception the perceiver first determines and then redetermines an object of sense by means of an organ of sense and the mental sensory respectively; inasmuch as the redetermination is impossible with those persons who have lost all the organs of sense. It may be objected that the soul, pleasure and so forth, are generally received as objects of perception, but the given definition of perception does not comprise the knowledge of them, their knowledge being produced from no contact of sense with objects. We answer that the mental sensory is nothing but one of the organs of sense, and its separate enunciation is owing to the difference of its characters. For the ordinary organs of sense are material and confined to certain classes of object; the nature of their being

---

पलब्धमर्थं मनसोपलभते । एवमिन्द्रियेणानवधारयन् मनसा नावधारयति यच्चैतदिन्द्रियानवधारणपूर्व्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयो न पूर्वमिति सर्व्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः पश्चात् मनसाऽनुव्यवसायः उपहतेन्द्रियाणामनुव्यवसायाऽभावादिति । आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम् अनिन्द्रियार्थसन्निकर्षजं हि तदिति, इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो

the organs of sense rests on their possession of peculiar qualities. Whereas the mental sensory is immaterial and takes every thing as its object; nor does the nature of its being an organ of sense rest on its possession of peculiar qualities. It will be noticed in the sequel that, an object being in contact with an organ of sense, the presence of the mental sensory to one object together with its absence from another object is the reason why cognitions more than one do not take place simultaneously in the human mind. The mental sensory being one of the organs of sense, no other definition of perception [for the sake of the soul and so forth] is required. The fact that it is one of the organs of sense is supported by the authority of other sciences. For it is a general rule of science that a doctrine of one science, which is not in conflict with the rules of some other science is to be considered valid in the other science too. So much for perception.

KESAVA ŚASTRI.

*(To be continued).*

---

धर्म्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि । सगुणानाञ्चैषामिन्द्रियभाव इति । मनस्त्वभौतिकं सर्व्वविषयञ्च नास्य सगुणस्येन्द्रियभाव इति सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम इति । मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तरमिति । तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः ॥ व्याख्यातम् प्रत्यक्षम् ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७४ ॥

तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कं नपुंसकलिङ्गमिगन्तं गालवस्याचार्यस्य मतेन पुंवद्भवति । यथा पुंसि ह्रस्वनुमौ न भवतस्तद्वदत्रापि न भवत इत्यर्थः । ग्रामणीर्ब्राह्मणः । ग्रामणि ब्राह्मणकुलम् । ग्रामण्या ब्राह्मणकुलेन । ग्रामणिना ब्राह्मणकुलेन । ग्रामण्ये ब्राह्मणकुलाय । ग्रामणिने ब्राह्मणकुलाय । ग्रामण्यो ब्राह्मणकुलात् । ग्रामणिनो ब्राह्मणकुलात् । ग्रामण्यो ब्राह्मणकुलस्य । ग्रामणिनो ब्राह्मणकुलस्य । ग्रामण्योर्ब्राह्मणकुलयोः । ग्रामणिनोर्ब्राह्मणकुलयोः । ग्रामण्यां ब्राह्मणकुलानाम् । नुमचि रेति पूर्वविप्रतिषेधेन नुट् । ग्रामणीनां ब्राह्मणकुलानाम् । ग्रामण्यां ब्राह्मणकुले । ग्रामणिनि ब्राह्मणकुले । शुचिर्ब्राह्मणः । शुचि ब्राह्मणकुलम् । शुचिना ब्राह्मणकुलेन २ । शुचये ब्राह्मणकुलाय । शुचिने ब्राह्मणकुलाय । शुचेर्ब्राह्मणकुलात् । शुचिनो ब्राह्मणकुलात् । शुचेर्ब्राह्मणकुलस्य । शुचिनो ब्राह्मणकुलस्य । शुच्योर्ब्राह्मणकुलयोः । शुचिनोर्ब्राह्मणकुलयोः । शुचौ ब्राह्मणकुले । शुचिनि ब्राह्मणकुले । तृतीयादिष्विति किम् । ग्रामणिनी ब्राह्मणकुले । शुचिनी ब्राह्मणकुले । भाषितपुंस्कमिति किम् । त्रपुणे । जतुने । इह कस्मान्न भवति । पीलुर्वृक्षः, पीलु फलं, पीलुने फलायेति । समानायामाकृतौ यद्भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः । इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य । फलाकृतिर्नपुंसके । तदेतदेवं कथं भवति भाषितपुंस्कमिति । भाषितः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते । तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम् । तस्य प्रतिपादकं यच्छब्दरूपं तदपि भाषितपुंस्कमिति । इक इत्येव । कीलालपा ब्राह्म-

णः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन । अचीत्येव । यामणिभ्यां ब्राह्मणकुलाभ्याम् ॥

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७५ ॥

अस्थि दधि सक्थि अक्षि इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतो ऽनङित्ययमादेशो भवति, स चोदात्तो भवति । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । सक्थ्ना । सक्थ्ने । अक्ष्णा । अक्ष्णे । अस्थ्यादय आद्युदात्तास्तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तवचनम् । तत्र भसंज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति ॥ एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्याप्यङ्गस्य तदन्तग्रहणमिष्यते ॥ प्रियास्थ्ना ब्राह्मणेन । प्रियदध्ना * । तृतीयादिष्विति किम् । अस्थिनी । दधिनी । अचीत्येव । अस्थिभ्याम् । दधिभ्याम् ॥

छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते । यत्र विहितस्ततोऽन्यत्रापि दृश्यते । अचीत्युक्तमनजादावपि दृश्यते । इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः । तृतीयादिष्वित्युक्तमतृतीयादिषु दृश्यते । अस्थान्युत्कृत्य जुहोति । विभक्तावित्युक्तमविभक्तावपि दृश्यते । अस्थन्वता लाङ्गूलेन । अस्थन्वन्तं यदनस्था बिभर्ति ॥

ई च द्विवचने ॥ ७७ ॥

द्विवचने परतश्छन्दसि विषये ऽस्थ्यादीनामीकारादेशो भवति, स चोदात्तः । अक्षी ते इन्द्रपिङ्गले कपेरिव । अक्षीभ्यां ते नासिकाभ्याम् । अक्षी इत्यत्र नुम्परत्वादीकारेण बाध्यते । तत्र कृते सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पुनर्नुम्न क्रियते ॥

नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम्न भवति । ददत् । ददतौ । ददतः ।

* प्रियास्थ्ने । प्रियदध्ने । प्रियसक्थ्ना । प्रियसक्थ्ने । प्रियाक्ष्णा । प्रियाक्ष्णे । एतान्युदाहरणान्यधिकान्येकस्मिन् पुस्तके ।

दधत् । दधतौ । दधतः । जक्षत् । जक्षतौ । जक्षतः । जाग्रत् । जाग्रतौ । जाग्रतः । शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ॥

## वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति । ददति ददन्ति कुलानि । दधति दधन्ति कुलानि । जक्षति जक्षन्ति कुलानि । जाग्रति जाग्रन्ति कुलानि ॥

## आच्छीनद्योर्नुम् ॥ ८० ॥

अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः । तुदती कुले । तुदन्ती कुले । तुदन्ती ब्राह्मणी । तुदती ब्राह्मणी । याती कुले । यान्ती कुले । याती ब्राह्मणी । यान्ती ब्राह्मणी । करिष्यती कुले । करिष्यन्ती कुले । करिष्यती ब्राह्मणी । करिष्यन्ती ब्राह्मणी । अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुम् । उभयत आश्रये नान्तादिवदित्यन्तादिवद्भावोपि नास्ति । भूतपूर्वगत्याश्रयणे वा ऽदती घ्नतीत्येवमादिष्वतिप्रसङ्ग इति । अत्र समाधिं केचिदाहुः । शतुरवयवे शतृशब्दो वर्त्तते । अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति *। अपरे पुनराहुः । आदित्येतेन शीनद्यावेव विशिष्येते । अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम्भवतीति । तत्र येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति तकारेणैव व्यवधानमाश्रयिष्यते । आदिरिति किम् । कुर्वती । सुन्वती । शीनद्योरिति किम् । तुदताम् । नुदताम् ॥

## शप्श्यनोर्नित्यम् ॥ ८१ ॥

शप् श्यन् इत्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले । पचन्ती ब्राह्मणी । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी ।

* यथा ग्रामो दग्ध इति ग्रामैकदेशे ग्रामशब्दो निर्दिश्यतइत्यधिकमेकस्मिन्पुस्तके ।

सीव्यन्ती कुले । सीव्यन्ती ब्राह्मणी । नित्यग्रहणं वेत्यस्याधिकारस्य निवृत्त्यर्थम् । इहारम्भसामर्थ्यान्नित्यमुत्तरत्र विकल्प एवेत्याशङ्क्येत ॥

### सावनडुहः ॥ ८२ ॥

सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् । अत्र केचिदाद्दित्यधिकारादाममोः कृतयोर्नुमं कुर्वन्ति । तेन नुमामामागमौ न बाध्येते, आमम्भ्यां च नुमिति । अपरे तु सत्यपि सामान्यविशेषत्वे आममोर्नुमश्च समावेशमिच्छन्ति न बाध्यबाधकभावं, यथा चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति ॥

### दृक्स्ववस्स्वतवसां छन्दसि ॥ ८३ ॥

दृक् स्ववस् स्वतवस् इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये । ईदृङ् । तादृङ् । यादृङ् । सदृङ् । स्ववान् । स्वतवान्पायुरग्ने ॥

### दिव औत् ॥ ८४ ॥

दिवित्येतस्य सौ परतो औदित्ययमादेशो भवति । द्यौः । दिविति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः स इह न गृह्यते । अक्षद्यूः ॥

### पथिमथ्यृभुक्षामात् ॥ ८५ ॥

पथिन् मथिन् ऋभुक्षिन् इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यनुनासिकेऽपि आकारोऽननुनासिको न भवति । भाव्यमानेन सवर्णानां ग्रहणं न भवतीति * शुद्धोऽयमुच्चार्यते ॥

### इतोत्सर्वनामस्थाने ॥ ८६ ॥

पथ्यादीनामिकारस्य स्थाने आकारादेशो भवति । सर्वनामस्थाने परतः । पन्थाः । पन्थानौ । पन्थानः । मन्थाः । मन्थानौ । मन्थानः । मन्थानम् । मन्थानौ । पन्थानम् । पन्थानौ । ऋभुक्षाः । ऋभुक्षाणौ ।

* भाव्यमानोऽण् सवर्णान् न गृह्णातीति पा० २ ।

ऋभुक्षाणः । ऋभुक्षाणम् । ऋभुक्षाणौ । आदिति वर्त्तमाने पुनरद्वचनं पपूर्वार्थम् । ऋभुक्षाणमित्यत्र वा षपूर्वस्य निगमइति दीर्घविकल्पः ॥

## थोन्थः ॥ ८७ ॥

पथिमथोस्थकारस्य स्थाने न्थ इत्ययमादेशो भवति सर्वनामस्थाने परतः । पन्थाः । पन्थानौ । पन्थानः । मन्थाः । मन्थानौ । मन्थानः ॥

## भस्य टेर्लोपः ॥ ८८ ॥

पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति । पथः । पथा । पथे । मथः । मथा । मथे । ऋभुक्षः । ऋभुक्षा । ऋभुक्षे । सर्वनामस्थानइत्यनुवर्त्तमानमपि विरोधादिह न संबद्ध्यते ॥

## पुंसोऽसुङ् ॥ ८९ ॥

पुंस इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति । पुमान् । पुमांसौ । पुमांसः * । इह परमपुमानिति प्रागेव विभक्त्युत्पत्तेः समासान्तोदात्तत्वमुत्पन्नायां विभक्तौ असुङित्यनिष्टः स्वरः प्राप्नोति । तदर्थमसुङ्युपदेशिवद्वचनं कर्त्तव्यम् । तेन परमपुमानित्यन्तोदात्तो भवति । पुमानित्ययं पुनराद्युदात्त एव ॥

## गोतो णित् ॥ ९० ॥

गोशब्दात्परं सर्वनामस्थानं णिद्भवति । णित्कार्याणि तत्र भवन्तीत्यर्थः । गौः । गावौ । गावः । तपरकरणं किम् । चित्रगुः । शबलगुः । कथं हे चित्रगो हे शबलगव † इति, अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति संबुद्धिजसोर्गुणे कृते णित्त्वं न भवति । अथ वा गोत इति संबन्धलक्षणा षष्ठी । गोतः संबन्धि यत्सर्वनामस्थानमिति । यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद्गोः सर्वनामस्थानमित्युच्यते । चित्रगुशब्दात्तु सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह । तपरकरणं तु निर्द्देशार्थमेव । केचिदोतो णिदिति पठन्ति । द्योशब्दादपि विद्यते तदर्थम् । द्यौः । द्यावौ ।

* सर्वनामस्थान इत्येव । पुंसः पश्येत्यधिकमेकस्मिन्पुस्तके ।

† हे चित्रगव इति पा० २ ।

त्यावः । गोत इत्येव तपरकरणनिर्द्देशादोकारान्तोपलक्षणं द्रष्टव्यम् । वर्णनिर्द्देशेषु हि तपरकरणं प्रसिद्धम् ॥

णलुत्तमो वा ॥ ९१ ॥

उत्तमो णल्वा णिद् भवति । णित्कार्यं तत्र वा भवतीत्यर्थः । अहं चकर । अहं चकार । अहं पपच । अहं पपाच ॥

सख्युरसंबुद्धौ ॥ ९२ ॥

असंबुद्धौ यः सखिशब्दः तस्मात्परं सर्वनामस्थानं णिद्भवति । सखायौ । सखायः । असंबुद्धाविति किम् । हे सखे ॥

अनङ् सौ ॥ ९३ ॥

सखिशब्दस्य सौ परतो ऽनङित्ययमादेशो भवति स चेत्सुशब्दः संबुद्धिर्न भवति । सखा । असंबुद्धाविति किम् । हे सखे ॥

ऋदुशनस्पुरुदंशोनेहसां च ॥ ९४ ॥

ऋकारान्तानामङ्गानामुशनस् पुरुदंशस् अनेहस् इत्येतेषां चासंबुद्धौ सौ परतो ऽनङादेशो भवति । कर्त्ता । हर्त्ता । माता । पिता । भ्राता । उशना । पुरुदंशा । अनेहा । असंबुद्धावित्येव । हे कर्त्तः । हे मातः । हे पितः । हे पुरुदंशः । हे अनेहः । हे उशनः ॥ उशनसः संबुद्धावपि पक्षे ऽनङ् इष्यते ॥ हे उशनन् ॥ न ङिसंबुद्ध्योरिति नलोपप्रतिषेधोपि पक्षे इष्यते ॥ हे उशन । तथा चोक्तम् ।

संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यंदिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥

इति । तपरकरणमसन्देहार्थम् ॥

तृज्वत्क्रोष्टुः ॥ ९५ ॥

क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थाने ऽसंबुद्धौ परतः तृज्वद्भवति । तृजन्तस्य यद्रूपं तदस्य भवतीत्यर्थः । रूपातिदेशोयम् । प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद्रूपं तदतिदिश्यते । तच्च क्रोष्टृ इत्ये-

तदन्तोदात्तम् । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । सर्वनामस्थानइत्येव । क्रोष्टून् । असंबुद्धाविल्येव । हे क्रोष्टो ॥

## स्त्रियां च ॥ ९६ ॥

असर्वनामस्थानार्थमारम्भः । स्त्रियां च क्रोष्टुशब्दस्य तृज्वद्भवति । क्रोष्ट्री । क्रोष्ट्रीभ्याम् । क्रोष्ट्रीभिः । क्रोष्टुशब्दं के चिद्गौरादिषु पठन्ति । ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति । तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्च-क्रोष्टृभीरथैरिति स्त्रीशब्दस्य * लुकि कृते न सिद्ध्यति । तत्र प्रतिविधे-यम् । ये तु गौरादिषु न पठन्ति । तेषां स्त्रियामित्यर्थनिर्द्देशः, स्त्रियां वर्त्तमानः क्रोष्टुशब्दः तृज्वद्भवति । कृते ऽतिदेशे ऋन्नेभ्यो ङीबिति ङीप्प्र-त्ययः । तत्रोदात्तयणो हल्पूर्वादित्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति ॥

## विभाषा तृतीयादिष्वचि ॥ ९७ ॥

तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद्भवति । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्ट्रोः । क्रोष्टरि । क्रोष्टौ । क्रोष्ट्रोः । क्रोष्ट्वोः । तृतीयादिष्विति किम् । क्रोष्टून् । अचीति किम् । क्रोष्टुभ्याम् । क्रोष्टुभिः ॥ तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्नुटौ भवतः ॥ * ॥ प्रियक्रो-ष्टवे ऽरण्याय । प्रियक्रोष्टुने वृषलाय । नुट् । क्रोष्टूनाम् ॥

## चतुरनडुहोरामुदात्तः ॥ ९८ ॥

चतुर् अनडुह् इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः । चत्वारः । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् ॥ तदन्तविधिरत्रेष्यते ॥ प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । प्रिया-नड्वान् । प्रियानड्वाहौ । प्रियानड्वाहः ॥ अनडुहः स्त्रियां वेति वक्त-व्यम् ॥ * ॥ अनडुही । अनड्वाही । गौरादिपाठात्सिद्धम् ॥

## अम्संबुद्धौ ॥ ९९ ॥

संबुद्धौ परतश्चतुरनडुहोरमागमो भवति । पूर्वस्यायमपवादः । हे प्रियचत्वः । हे प्रियानड्वन् ॥

---

* स्त्रीप्रत्ययस्येति पा० २

## ऋत इद्धातोः ॥ १०० ॥

ऋकारान्तस्य धातोरङ्गस्य इकारादेशो भवति। किरति। गिरति। आस्तीर्णम्। विस्तीर्णम्। धातोरिति किम्। पितॄणाम्। मातॄणाम्॥ लाक्षणिकस्याप्यत्र ग्रहणमिष्यते॥ चिकीर्षतीत्यत्रापि यथा स्यादिति धातुग्रहणं क्रियते*॥

## उपधायाश्च ॥ १०१ ॥

उपधायाश्च ऋकारस्य इकारादेशो भवति। कीर्त्तयति। कीर्त्तयतः। कीर्त्तयन्ति॥

## उदोष्ठ्यपूर्वस्य ॥ १०२ ॥

ओष्ठ्यः पूर्वो यस्माद् ऋकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति। पूर्त्ताः पिण्डाः। पुपूर्षति। मुमूर्षति। दन्त्योष्ठ्यपूर्वोप्योष्ठ्यपूर्वो भवतीत्यत्रापि भवति। वुवूर्षति ऋत्विजम्। प्रावुवूर्षति कम्बलम्। ओष्ठ्योत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते। तेन ॠ गताविस्यस्य संपूर्वस्य समीर्णमिति भवति†॥ इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन॥*॥ आस्तरणम्। आस्तारकः। निपरणम्। निपारकः। निगरणम्। निगारकः॥

## बहुलं छन्दसि ॥ १०३ ॥

छन्दसि विषये ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति। ओष्ठ्यपूर्वस्येत्युक्तमनोष्ठ्यपूर्वस्यापि भवति। मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः। ओष्ठ्यपूर्वस्यापि न भवति। पप्रितमम्। क्व चिद् भवति पपुरिः॥

॥ इति काशिकायां वृत्तौ सप्तमाध्यायस्य प्रथमः पादः॥

---

* तपरकरणमसंदेहार्थमित्यधिकमेकस्मिन्पुस्तके।

† तेनेह न भवति। समीर्णमिति। ॠ गताविस्यस्य संपूर्वस्य यद्यपि समो मकार ओष्ठ्यः पूर्वो ऽस्ति तथाप्यङ्गावयवो न भवतीति समीर्णमित्यत्र न भवतीति पाठान्तरमेकस्मिन् पुस्तके।

## सप्तमाध्यायस्य द्वितीयः पादः ।

### सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥

परस्मैपदे परे सिचि परत इगन्तस्याङ्गस्य वृद्धिर्भवति । अचैषीत् । अनैषीत् । अलावीत् । अपाठीत् । अकार्षीत् । अहार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद्बाधते । न्यनुवीद् न्यधुवीद् इत्यत्र कुटादित्वाद् ङित्त्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः क्रियते । परस्मैपदेष्विति किम् । अच्योष्ट । अप्लोष्ट ॥

### अतो ल्रान्तस्य ॥ २ ॥

रेफलकारौ यावतः समीपौ तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति । चर । अचारीत् । त्सर । अत्सारीत् । ज्वल । अज्वालीत् । ह्मल । अह्मालीत् । अतो हलादेर्लघोरिति विकल्पस्यायमपवादः । अत इति किम् । न्यखोरीत् । न्यमीलीत् । ल्रान्तस्येति किम् । मा भवानशीत् । मा भवानटीत् । अन्तग्रहणं किम् । अवभीत् । अश्वल्लीत् । अत्र यौ रेफलकारावङ्गस्यान्तौ न तावतः समीपौ ॥

### वदव्रजहलन्तस्याचः ॥ ३ ॥

वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदिव्रजिग्रहणम् । हलन्तानाम् । अपाक्षीत् । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् । अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिद्ध्यति । कथं, वदिव्रज्योरित्यत्र प्रथमयोगे अत इति स्थानी अनुवर्त्तते । ततो यदच इति सूत्रं तत्राङ्गेनाज्विशेष्यते । अङ्गस्याचः सिचि परतो वृद्धिर्भवति । तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम् । इहापि स्यात् । अराङ्क्षीत् । अभाङ्क्षीत् । अन्यथा हि येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधाने स्याद्नेकेन हला न स्यात् । उदवोढामुदवोढमित्यत्र वहेः सिचि ढत्वसलोपादीनां पूर्वत्रासिद्धमित्यसिद्धत्वात्पूर्वं हलन्तलक्षणा

वृद्धिः क्रियते पश्चाद् ढलोपनिमित्तमोत्वम्। तत्र कृते पुनर्वृद्धिर्न भवति, कृतत्वात्। यत्र त्वकृता वृद्धिरोकारस्यैव तत्र भवति। सोढामित्रस्यापत्यं सौढामित्रिरिति॥

## नेटि॥ ४॥

इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति। अदेवीत्। असेवीत्। अकोषीत्। अमोषीत्। हलन्तस्येत्येव। अलावीत्। ननु च एतदप्यन्तरङ्गत्वाद्गुणावादेशयोः कृतयोर्हलन्तं भवति। नैतदेवम्। अन्तरङ्गमपि गुणं वचनारम्भसामार्थ्यात्सिचि वृद्धिर्बाधते इत्युक्तम्॥

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्॥ ५॥

हकारान्तानां मकारान्तानां यकारान्तानामङ्गानां क्षण श्वस जागृ णि श्वि इत्येतेषामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति। ग्रह। अग्रहीत्। स्यम। अस्यमीत्। व्यय। अव्ययीत्। टुवम्। अवमीत्। क्षण। अक्षणीत्। श्वस्। अश्वसीत्। जागृ। अजागरीत्। णि। ऊनयीत्। ऐलयीत्। श्वि। अश्वयीत्। एदिताम्। रगे। अरगीत्। कखे। अकखीत्। ह्म्यन्तक्षणश्वसामेदितां च अतो हलादेर्लघोरिति विकल्पे प्राप्ते प्रतिषेधः। जागृणिश्वीनां तु सिचि वृद्धिः प्राप्ता, सा च नेटीति न प्रतिषिध्यते। न वान्तरङ्गत्वादत्र पूर्वं गुणो भवति सिचि वृद्धिरनवकाशत्वात्। यदि पूर्वं गुणः स्यादिह णिश्विग्रहणमनर्थकं स्यात्। गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। तस्मादिदमेव णिश्विग्रहणं ज्ञापकं न सिच्यन्तरङ्गमस्तीति। अथ जागृग्रहणं किमर्थम्। जाग्रो विचिण्णल्ङित्सु इति जागर्त्तेर्गुणो वृद्धेरपवादो विधीयते। स यथा अचो ञ्णितीति वृद्धिं बाधते, तथा सिचि वृद्धिमपि बाधिष्यते। नैतदस्ति। कृते गुणे ऽतो लान्तस्येति या वृद्धिः प्राप्नोति सा प्रतिषिध्यते। अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते। यथा जागरयतीत्यत्रात उपधाया इत्यपि वृद्धिर्न भवति। तथा चिण्णलोः प्रतिषेधोर्थवान्भवति इति शक्यमिह जागृग्रहणमकर्त्तुम्। तत्तु क्रियते विस्पष्टार्थम्॥

## ऊर्णोतेर्विभाषा ॥ ६ ॥

उर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । प्रौर्णावीत् । प्रौर्णवीत् । विभाषोर्णोरित्यङित्त्वपक्षे वृद्धिविकल्पोऽयम् । ङित्त्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति । प्रौर्णुवीत् ॥

## अतो हलादेर्लघोः ॥ ७ ॥

हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । अकणीत् । अकाणीत् । अरणीत् । अराणीत् । अत इति किम् । अदेवीत् । असेवीत् । न्यकुटीत् न्यपुटीत् इत्यत्रात इत्यस्मिन्नसति स्थानिनिर्द्देशार्थमच इत्येतदनुवर्त्तयितव्यम् । तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति क्ङिति चेति प्रतिषेधो न स्यात् । हलादेरिति किम् । मा भवानशीत् । मा भवानटीत् । लघोरिति किम् । अतक्षीत् । अरक्षीत् । अथेह कस्मान्न भवति अचकासीदिति । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति हला व्यवधानमाश्रितं न पुनरचापि व्यवधानमिति वृद्धिर्न भवति । अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते न पुनरनेकेनेति कल्पने शक्यमकर्तुं लघोरिति, अतक्षीदित्यत्रानेकेन व्यवधानमिति न भविष्यति, तत्क्रियते विस्पष्टार्थम् । इटीत्येव । अपाक्षीत् ॥

## नेड्वशि कृति ॥ ८ ॥

वशादौ कृति प्रत्यये परत इडागमो न भवति । वरमनादौ प्रयोजनम् । ईशिता । ईशितुम् । ईश्वरः । दीपिता । दीपितुम् । दीप्रः । भसिता । भसितुम् । भस्म । याचिता । याचितुम् । याच्ञा । वरमनादौ इत्युदाहरणप्रदर्शनार्थम् । न परिगणनम् । तेन जमन्ताड्ड इत्येवमादावपि हि प्रतिषेधो भवति । अथ तत्रोणादयो बहुलमिति समाधीयते । संभवोदाहरणप्रदर्शनमेतत् । कृतीति किम् । रुदिव । रुदिम ॥

## तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥

ति तु त्र त थ सि सु सर कस इत्येतेषु कृत्सु इडागमो न भवति ।

तीति क्तिन्क्तिचोः सामान्यग्रहणम् । क्तिच् । तनिता । तनितुम् । तन्तिः । क्तिन् । दीपिता । दीपितुम् । दीप्तिः । तु ॥ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ सचिता । सचितुम् । सिक्तुः । त्र । दाम्नीशसयुयुजेति ष्ट्रन् । पतिता । पतितुम् । पत्त्रं वाहनम् । उणादिष्वपि सर्वधातुभ्यः ष्ट्रन् । तनिता । तनितुम् । तन्त्रम् । त ॥ हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥ हसिता । हसितुम् । हस्तः । लविता । लवितुम् । लोतः । पविता । पवितुम् । पोतः । धूर्विता । धूर्वितुम् । धूर्त्तः ॥ औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते न पुनः क्तस्य ॥ हसितमित्येव हि तत्र भवति । थ । हनिकुषिनीरमिकाशिभ्यः क्थन् । कोषिता । कोषितुम् । कुष्ठम् । काशिता । काशितुम् । काष्ठम् । सि । उषिशुषिकुषिभ्यः क्सिः । कोषिता । कोषितुम् । कुक्षिः ॥ सुक् च इषेः ॥ एषिता । एषितुम् । इक्षुः । सर ॥ आशेः क्सरन् ॥ अशिता । अशितुम् । अक्षरम् । क ॥ इणभीकापाशल्यतिमर्चिभ्यः कन् ॥ शलिता । शलितुम् । शल्कः । स ॥ वृतृवदिहनिकमिकषियुमुचिभ्यः सः ॥ वदिता । वदितुम् । वत्सः ॥ तितुत्रेष्वग्रहादीनामिति वक्तव्यम् ॥ * ॥ ग्रहादयो ग्रहप्रकाराः । येषामिट् क्तिनि दृश्यते । विगृहीतिः । उपस्तिहितिः । निकुचितिः । निपठितिः । कृतीत्येव । रोदिति । स्वपिति ॥

## एकाच उपदेशे ऽनुदात्तात् ॥ १० ॥

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति । प्रकृत्याश्रयो ऽयं प्रतिषेधः । के पुनरुपदेशेनुदात्ता, ये तथा पठ्यन्ते । त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते ।

अनिट्स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृञ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवन्तयोर्णातिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत ॥

द्वये एव धातवः स्वरान्ता व्यञ्जनान्ताश्च । तत्र सर्वे स्वरान्ता

एकाचो ऽनुदात्ता अदन्तादीन्वर्ज्जयित्वा । दाता । नेता । चेता । स्तोता । कर्त्ता । हर्त्ता । अदन्तादय उदात्ताः । अवधिष्ट । ऋदन्तम् । तरिता । तरीता । ऋतां च वृङ्वृञौ । निर्वरिता । निर्वरीता । प्रवरिता । प्रवरीता । श्विडीङिवर्णेष्वथ शीङ्श्रियावपि । श्वयिता । डडुयिता । शयिता । श्रयिता । गणस्थमूदन्तम् । लविता । पविता । उतां च रुक्ष्णुवौ नुवन्तयोर्णौतिमथो युणुद्वावः । रविता । प्रस्नविता । नविता । प्रोर्णविता । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनमित्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते । यविता । नविता । क्ष्णविता ।

इति स्वरान्ता निपुणं समुच्चितास्ततोहलन्तानपि सन्निबोधत ।
शकिस्तु कान्ते ष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ॥

घसिः प्रकृत्यन्तरमस्ति । घस्ता । वसिः प्रसारणी । वस्ता । प्रसारणीति किम् । वसिता वस्त्राणाम् । वसनिवास इत्यस्य यजादित्वात्संप्रसारणं विहितं, न तु वस आच्छादन इत्यस्य ।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ।
आरब्धा । यब्धा । लब्धा ।

यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥

यन्ता । रन्ता । तन्ता । मन्ता । श्यनीति किम् । मनुतेर्मनितेत्येव भवति । नन्ता । हन्ता । गन्ता ।

दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमे ऽनिटोष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्त्तिताः ॥

देग्धा । दोग्धा । मेढा । वोढा । रोढा । नद्धा । दग्धा । लेढा । मुक्तसंशया इति किम् । तत्रान्तरे चत्वारो ऽपरे पठ्यन्ते । सहिमुहिरिहिलुहय,स्तत्र सहेरिड्विकल्पस्तकारादौ । मुहिरपि रधादौ । तेन तौ ससंशयौ सविकल्पौ । इतरौ तु धातुषु न पठ्येते । कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ ॥

द्विशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्।
लिशं च शान्तानिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥

देष्टा। द्रष्टा। दंष्टा। आम्रष्टा। आमर्ष्टा। स्प्रष्टा। स्पर्ष्टा। अनुपधानामुदात्तोपदेशानां मृजिदृशी वर्जयित्वा अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति रमागमविकल्पः। रेष्टा। रोष्टा। क्रोष्टा। प्रवेष्टा। लेष्टा।

रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यति बुध्यती व्यधिः।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिद्ध्यतिरेव नेतरे ॥

रोद्धा। राद्धा। योद्धा। बंद्धा। साद्धा। क्रोद्धा। क्षोद्धा। शोद्धा। योद्धा व्यद्धा। सेद्धा। बुद्ध्यतिसिद्ध्यत्योः श्यना निर्देशादन्यविकरणयोर्बुद्धिसिद्ध्योरिड्भवत्येव। बोधिता। सेधिता। निष्ठायामपि प्रतिषेधाभावात् बुधितं सिधितमित्येव भवति।

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम्।
इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षती तथा ॥

शेष्टा। पेष्टा। शोष्टा। पोष्टा। त्वेष्टा। वेष्टा। श्लेष्टा। तोष्टा। दोष्टा। द्वेष्टा। आक्रष्टा। आकर्ष्टा। कृषेस्तौदादिकस्य भौवादिकस्य कृषिकर्षती इति निर्देशः।

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम्।
स्वरेण नीचेन शपिं क्षुपिं क्षिपिं प्रतीहि पान्तान्पठितांस्त्रयोदश ॥

तप्ता। तेप्ता। आप्ता। वप्ता। स्वप्ता। लेप्ता। लोप्ता। तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव। इट् च तयोरधादिपाठाद्विकल्पेन भवति। त्रप्ता। तर्प्ता। तर्पिता। द्रप्ता। दर्प्ता। दर्पिता। तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव। स्रप्ता। सर्प्ता। शप्ता। छेप्ता। क्षेप्ता ॥

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन्
शदिं सदिं स्विद्यतिपद्यती खिदिम्।
तुदिं नुदिं विद्यतिविन्त इत्यपि
प्रतीहि दान्तान्दश पञ्च चानिटः ॥

अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । तोत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यतीति श्यना निर्द्देशोऽस्विद्येदा इत्यस्य निवृत्त्यर्थः । उदात्त एवायम् । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यतिविन्त इत्यपि श्यना श्नमा च निर्द्देशोऽन्यविकरणनिवृत्त्यर्थः । वेत्तिविन्दती उदात्तावेव । वेदिता विद्यानाम् । वेदिता धनस्य ॥

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥

पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । प्रष्टा । निर्णेक्ता । सेक्ता । मोक्ता । भक्ता । भङ्क्ता । भ्रष्टा । भर्ष्टा । त्यक्ता । यष्टा । योक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा । मृजिरयमूदित्पठ्यते । ततोऽस्य विकल्पेनेटा भवितव्यम् । मार्ष्टा, मर्जिता इति । अयमागमोऽप्यस्य न दृश्यते । तदस्य पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति । सृजिं विजिं विद्ध्यनिट्स्वरानिति । निजादिषु यो विजिरसावनिडिष्यते । तथा च ग्रन्थान्तरे * निजिविजिष्वञ्जिवर्जमित्युक्तम् । एकाच इति किम् । अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते । उपदेशग्रहणं किम् । इह हि यथा स्यात् लविष्यति पचिष्यति । इह च मा भूत् । कर्त्ता कटान्कर्त्तुमिति ॥

## श्र्युकः किति ॥ ११ ॥

श्रि इत्येतस्योगन्तानां च किति प्रत्यये परत इडागमो न भवति । श्रित्वा । श्रितः । श्रितवान् । उगन्तानां च । युत्वा । युतः । युतवान् । लूत्वा । लूनः । लूनवान् । वृत्वा । वृतः । वृतवान् । तीर्त्वा । तीर्णः । तीर्णवान् । श्र्युक इति किम् । विदितः । कितीति किम् । श्रयिता । श्रयितुम् । श्रयितव्यम् । केचिदत्र द्विककारनिर्द्देशेन गकारप्रश्लेषं वर्णयन्ति ।

* तन्त्रान्तरे पा० २ ।

भूष्णुरित्येवं यथा स्यात् । सौत्रत्वाच्च निर्द्देशस्य श्युकः कितीत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतं विसर्जनीयश्च कृत इति । ग्लाजिस्थश्चग्स्नुरित्यत्र स्था आ इत्याकारप्रश्लेषेण स्थाखोः सिद्धत्वान्न किं चिदेतत् । उपदेश इत्येव । तीर्णं इत्यत्रापि यथा स्यात् । इत्वे हि कृते रपरत्वे च न स्यात् । मा भूदेवम् । इट् सनि वेति विकल्पे विहिते यस्य विभाषेति निष्ठायां प्रतिषेधो भविष्यति । कस्य पुनः सा विभाषा, ॠतः, यद्येवमित्वे कृते नायमॄकारान्तो भविष्यति । स्थानिवद्भावाद्भविष्यति । अनल्विधौ स्थानिवद्भावः । अल्विधिश्चायम् । तस्मादनुवर्त्तयितव्यमुपदेश इति । तथा च सति जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थमेकाच इत्यनुवर्त्तयितव्यम् । ऊर्णोतेस्तु ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

प्रोर्णुतः । प्रोर्णुतवान् ॥

## सनि ग्रहगुहोश्च ॥ १२ ॥

ग्रह गुह इत्येतयोरुगन्तानां च सनि प्रत्यये परत इडागमो न भवति । जिघृक्षति । जुघुक्षति । उगन्तानां च । रुरूषति । लुलूषति । सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनामिति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । ग्रहेर्नित्यं प्राप्तः । गुहेरुदित्वाद्विकल्पः ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यये इडागमो न भवति । कृ । चकृव । चकृम । सृ । ससृव । ससृम । भृ । बभृव । बभृम । वृञ् । ववृव । ववृम । वृङ् । ववृवहे । ववृमहे । स्तु । तुष्टुव । तुष्टुम । द्रु । दुद्रुव । दुद्रुम । स्रु । सुस्रुव । सुस्रुम । श्रु । शुश्रुव । शुश्रुम । सिद्धे सत्यारम्भो नियमार्थः । कादय एव लिट्यनिटस्ततोऽन्ये सेट इति । बिभिदिव । बिभिदिम । लुलुविव । लुलुविम । अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः । वृञ्वृङोस्तु प्रत्ययाश्रयस्तदुभयस्याप्ययं नियमः ।

वृञो हि थलि ववर्थेति निपातनाट्टवस्था, स्तुद्रुस्रुश्रुवां तु ऋतो भारद्वाज-स्येत्यस्मादपि नियमाद् य इट् प्राप्नोति सोपि नेष्यते । तुष्टोथ । दुद्रोथ । सुस्रोथ । शुश्रोथ ॥ क्रञोऽसुट इति वक्तव्यम् ॥ * ॥ ससुट्कस्य इडागमो यथा स्यात् । संचस्करिव । संचस्करिम ॥ ऋतो भारद्वाजस्ये-त्येतदप्यसुट एवेष्यते ॥ संचस्करिथ ॥

## श्वीदितो निष्ठायाम् ॥ १४ ॥

श्वयतेरीदितश्च निष्ठायामिडागमो न भवति । शूनः । शून-वान् । ईदितः । ओलज्जी । लग्नः । लग्नवान् । ओविजी । उद्विग्नः । उद्विग्नवान् । ओदितश्चेति निष्ठातकारस्य नकारः । दीपी । दीप्तः । दीप्तवान् । डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य । स हि नत्वार्थो, नत्वं च निष्ठातो ऽनन्तरस्य विधीयते । उड्डीनः । उड्डीनवान् । निष्ठायामित्यधिकार आर्द्धधातुकस्येड्वलादेरिति यावत् ॥

## यस्य विभाषा ॥ १५ ॥

यस्य धातोर्विभाषा क्व चिदिडुक्तस्तस्य निष्ठायां परत इडागमो न भवति । वक्ष्यति । स्वरतिसूतिसूयतिधूञूदितो वा । विधूतः । विधूतवान् । गुहू । गूढः । गूढवान् । उदितो वा । वृद्धः । वृद्धवान् । तनिपतिदरिद्राणामुपसंख्यानमिति पतेर्विभाषितेट्कस्यापि द्वितीयाश्रिता-तीतपतितेति निपातनादिडागमः ॥

## आदितश्च ॥ १६ ॥

आदितश्च धातोर्निष्ठायामिडागमो न भवति । ञिमिदा । मिन्नः । मिन्नवान् । ञिक्ष्विदा । क्ष्विणः । क्ष्विणवान् । ञिष्विदा । स्विन्नः । स्विन्नवान् । चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः । वान्तः । योगविभागकरणं किम् । आदितश्च विभाषा भावादिकर्म्मणोरित्येवं पठितव्यम् । अन्यत्र हि भावादिकर्म्मभ्यां यस्य विभाषेति प्रतिषेधो भविष्यति । ज्ञापनार्थमेतत् । ज्ञापयति । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति, तेन विभाषा गमहनविदविशामित्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञापनार्थस्य प्रतिषेधो न भवति । विदितः । विदितवान् ॥

विभाषा भावादिकर्म्मणोः ॥ १७ ॥

भावे आदिकर्म्मणि च आदितो धातोर्विभाषा निष्ठायामिडागमो न भवति । मिन्नमनेन । मेदितमनेन । प्रमिन्नः । प्रमेदितः ॥ सौनागाः कर्म्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन ॥ शकितो घटः कर्त्तुम् । शक्तो घटः कर्त्तुम् । भावे न भवत्येव । शक्तमनेन । आस्यतेर्भावे । असितमनेन । आदिकर्म्मणि च न भवत्येव । अस्तः काण्डः ।

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥

क्षुब्ध स्वान्त ध्वान्त लग्न म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासंख्यं मन्थ मनस्तमः सक्ताविस्पष्ट स्वरानायास भृश इत्येतेष्वर्थेषु । क्षुब्ध इति भवति मन्थाभिधानं चेत्। क्षुब्धो मन्थः । क्षुभितमन्यत् । क्षुभितं मन्थेन क्षुब्धो गिरिः, नदीत्येवमाद्युपमानाद्भविष्यति । स्वान्तमिति मनोभिधानं चेत् । स्वनितमन्यत्, स्वनितो मृदङ्गः । स्वनितं मनसा । ध्वान्तमिति भवति तमोभिधानं चेत् । ध्वनितमन्यत् । ध्वनितो मृदङ्गः । ध्वनितं मनसा । लग्नमिति भवति सक्तं चेत् । लगितमन्यत् । म्लिष्टमिति भवति । अविस्पष्टं चेत् । म्लेच्छितमन्यत् । इत्वमप्येकारस्य निपातनादेव । विरिब्धमिति स्वरश्चेत् । विरेभितमन्यत् । रेभृ शब्दइत्यस्यैतन्निपातनम् । अन्ये तु विरिभितमन्यदिति पठन्ति । रिभिं सौत्रं धातुं पठन्ति । ते विरिभितमिति प्रत्युदाहरन्ति । फाण्टमिति भवत्यनायासश्चेत् । फाणितमन्यत् । यदशृतमपिष्टं च कषायमुदकसंपर्कमात्राद् विभक्तरसमीषदुष्णं तत्फाण्टम् । तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते । बाढमिति भवति भृशं चेत् । बाहितमन्यत् । बाहृ प्रयत्नइत्यस्य धातोरेतन्निपातनम् । अतिशयश्च भृशमिहोच्यते ॥

धृषिशसी वैयात्ये ॥ १९ ॥

वियातस्य भावो वैयात्यम् । प्रागल्भ्यमविनीतता । तत्र धृष शस

इत्येतयोर्निष्ठायामिडागमो न भवति । धृष्टोयम् । विशस्तोयम् । धृषेरादितश्चेति प्रतिषेधः सिद्ध एव शसेरप्युदितो वा यस्य विभाषेति, नियमार्थं वचनम् । धृषिशस्योर्वैयात्ये एवेड् न भवति भावादिकर्म्मणोरपि वैयात्ये धृषिर्नास्ति । धृष्टः । विशस्तः । वैयात्यइति किम् । धर्षितः । विशसितः ॥

## दृढस्थूलबलयोः ॥ २० ॥

दृढ इति निपात्यते स्थूले बलवति चार्थे । दृढः स्थूलः । दृढो बलवान् । किमत्र निपात्यते । दृंहेः क्तप्रत्यये इडभावः । हकारनकारयोर्लोपः । परस्य ढत्वम् । अथ दृहिः प्रकृत्यन्तरमस्ति । तत्राप्येतदेव सर्वं नलोपवर्जम् । नकारस्याभावात् । हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा द्रढीयान् द्रढयतीत्यत्र र ऋतो हलादेर्लघोरिति न स्यात् । इह च परिद्रढय्य गत इति ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात् । इह च परिदृढस्यापत्यं पारिदृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ् च प्रसज्येत । स्थूलबलयोरिति किम् । दृंहितम् । दृहितम् ॥

## प्रभौ परिवृढः ॥ २१ ॥

परिवृढ इति निपात्यते प्रभुश्चेद्भवति । परिवृढः कुटुम्बी । पूर्वेण तुल्यमेतत् । वृंहेर्निपातनम् । वृहिश्च यदि प्रकृत्यन्तरमस्ति तस्यापि तदेव सर्वं हलोपनिपातनस्य च तदेव प्रयोजनम् । परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्येति । परिवृढमाचष्ट इति विगृह्य वृढशब्दादेव णिजुत्पद्यते । संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते नान्यस्मादिति । तथा सति परिव्रढयतीति तिङ्ङतिङ इति निघातः । परिव्रढय्येत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति । प्रभाविति किम् । परिबृंहितम् । परिवृहि तम् ॥

## कृच्छ्रगहनयोः कषः ॥ २२ ॥

कृच्छ्र गहन इत्येतयोरर्थयोः कषेर्द्धातोर्निष्ठायामिडागमो न भवति । कष्टोग्निः । कष्टं व्याकरणम् । ततोपि कष्टतराणि सामानि ।

कृच्छ्रं दुःखं तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते । गहने । कष्टानि वनानि । कष्टाः पर्वताः । कृच्छ्रगहनयोरिति किम् । कषितं सुवर्णम् ॥

## घुषिरविशब्दने ॥ २३ ॥

घुषेर्धातोरविशब्दनेर्थे निष्ठायामिडागमो न भवति । घुष्टा रज्जुः । घुष्टौ पादौ । अविशब्दनइति किम् । अवघुषितं वाक्यमाह । विशब्दनं प्रतिज्ञानम् । घुषिरशब्दार्थइति भूवादिषु पठ्यते । घुषिरविशब्दनइति चुरादिषु तयोरिह सामान्येन ग्रहणम् । विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज् विशब्दनार्थस्यानित्य इति, तेनायमपि प्रयोग उपपन्नो भवति । महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवा इति । स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः ॥

## अर्देः सन्निविभ्यः ॥ २४ ॥

सं नि वि इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति । समर्णः । न्यर्णः । व्यर्णः । अर्देरिति किम् । समेधितः । संनिविभ्य इति किम् । अर्दितः ॥

## अभेश्चाविदूर्ये ॥ २५ ॥

अभिशब्दादुत्तरस्यार्देराविदूर्येर्थे निष्ठायामिडागमो न भवति । अभ्यर्णा सेना । अभ्यर्णा शरत् । आविदूर्यइति किम् । अभ्यर्दितो वृषलः । शीतेन पीडित इत्यर्थः । विदूरं विप्रकृष्टं ततोन्यदविदूरं, तस्य भाव आविदूर्यम् । एतस्मादेव निपातनान्न नञ्पूर्वात्तत्पुरुषादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ पञ्चदशस्तबकावशेषः ॥

स्थाने स्थाने च वाणिन्यो वाणिन्यो ननृतुस्तरामधिकमधिकमनीयतमं च जगुश्च किंपुरुषाः किंपुरुषास्त एवेति न निश्चेतुं

शक्याः कतिचन संगीतचणाश्च नानाविधे तत्र कौतुके कौतुकेना-
त्मानं विसस्मरुः ॥ ४८ ॥

स्थाने स्थाने प्रतिस्थलमेव वाणिन्यो नर्तक्यो ननृतुस्तराम् ।
वाणिन्यः मत्ताः सत्य इत्यर्थः । "वाणिन्यौ नर्तकीमत्ते" इत्यमरः ॥ ४८ ॥

अभितोऽभितोषेण च सर्वेषामहो महोत्सवस्य महिमायं गिरि-
वरस्य रस्यतमः ॥ ४९ ॥

गिरिवरस्य यो महोत्सवस्तस्यायं महिमा रस्यतमः प्रशस्त्यनुमो-
दनादत्यास्वाद्यः ॥ ४९ ॥

यदयं स्वानुरूपं रूपं समास्थाय समास्थायतं व्रजपुरपुरंदरस्य
समर्हणां समग्रहीत् ॥ ५० ॥

सम्यगास्थया विश्वासेन आयतं समर्हणम् ॥ ५० ॥

इति जनरवो नरबोधदुर्गमो दुर्गमोचनायैव बभूव भूवलयस्य ॥ ५१ ॥

जनरवः परंपरया सर्वदेशगतः सन्, दुर्गमोचनायैव भूतः कीर्ति-
तश्च संसारादिदुःखत्राणार्थमेवाभूत् ॥ ५१ ॥

तदनु दनुजदमनजनकेन निर्वाहिते हिते महीधरमहे कृत-
भोजनेषु जनेषु च संतर्पितेषु गीतवादिचादिजीवेषु जीवेषु चाश्वपा-
कपाकपतितादिषु दिव्याम्बरवरमणिमयालङ्कारकारणमौखर्यपर्याकुलि-
तदिग्वलयं सलयं सरसममी पर्वतपर्वतरलाः सर्वत एव प्रदक्षिणां
कर्तुमारेभिरे ॥ ५२ ॥

पाकाः बालकाः ॥ ५२ ॥

तद्यथा ।

अग्रेणाव्यग्रजाग्रत्सुपटिमपटहप्रौढझांकारिभेरी-
ढक्काढक्कारहिक्कामुखरितककुभो वादकाः संप्रतीयुः ।
पश्चाद्गाश्चालयन्तो मणिकनकचिताः कुङ्कुमैरङ्किताङ्गी-
राभीरा वीतभीकाः करकृतलगुडा लागुडात्तप्रतीकाः ॥ ५३ ॥

अव्ययं यथा स्यात् तथा जायत् प्रकाशमानः शोभनः पटिमा वादनचातुर्यं यत्र तथाभूतः पटहश्च प्रौढभांकारिणी भेरी च ढक्कानां ढक्कारश्च त एव हिक्कास्ताभिर्मुखरिता इव ककुभो दिशो यैस्ते ॥ ५३ ॥

किंच ।

वीणावेणुप्रवीणा मृदुमधुरकलोत्तानगानावधानाः
पश्चात् पश्चात् प्रनृत्यप्रमुदितमनसो वादका नर्तकाश्च ।
तत्पश्चात् स्वर्णकर्णीरथसमशकटीगर्भनिर्भातवासा
गोप्यो गोप्यानि गोपेश्वरसुतचरितान्युद्गिरा प्रोद्गिरन्त्यः ॥ ५४ ॥

स्वर्णस्य कनकस्य कर्णीरथो विमानं तत्समास्तत्तुल्याः शकट्यस्तासां गर्भे निर्भातः प्रदीप्तो वासो यासां ता गोप्यः, संप्रतीयुरिति पूर्वस्यानुषङ्गः ॥ ५४ ॥

किंच ।

प्रत्यूहव्यूहहारी हरिरिह विहरन् सुप्रशस्यैर्वयस्यैः
सार्धं श्रद्धानुबद्धात्मभिरभि रभसारब्धहासोपहासैः ।
पश्चादाभीरराजप्रभृतिरतिमुदामोदिमन्दारदामो-
द्दामाम्नातोरुवक्षाः स्मितसुरसमुखो मुख्य आभीरवर्गः ॥ ५५ ॥

प्रत्यूहो विघ्नः । अभि निःशङ्कमेव । अतिमुदा· अत्यानन्देन । प्रतीयायेति वचनविपरिणामेनात्रानुषङ्गः । आमोदिनीभिर्मन्दारदामभिरुद्दामं स्वच्छन्दं यथा स्यात् तथा· आम्नातानि· आच्छन्नानि· उरूणि बृहन्ति वक्षांसि यस्य तथाभूतः सन् ॥ ५५ ॥

इत्येवं यथाविधिविहितविप्रदक्षिणं प्रदक्षिणं गिरेरथ तथा विधाय तथाविधाय प्रमोदाय प्रमोदायस्थलमनाकलयन्तो लयं तोष एव ते जग्मुः ॥ ५६ ॥

विधिमनतिक्रम्य विहिता विप्रेभ्यो दक्षिणा यत्र तत् प्रदक्षिणं विधाय कृत्वा तथाविधाय प्रमोदाय तादृशमानन्दं निवासयितुं प्रमायाः

प्रमाणस्य· उत्कर्षेण· आयो वृद्धिर्यत्र तथाभूतं स्थलम्· अनाकलयन्तः· अपश्यन्तः· आत्मनामल्पप्रमाणत्वात् तस्य तु प्रमोदस्यातिवृहत्त्वात् तोषे तस्मिन् प्रमोद एव लयं श्लेषं जग्मुः प्रापुः, तमानन्दमात्मसु वासयितुमशक्ता आनन्द एव तस्मिन्नात्मनो वासयामासुरित्यर्थः। अत्रोद्देश्यप्रतिनिर्द्देश्यतया प्रमोदे· इति वक्तव्ये तोषे· इत्युक्तिर्यमकानुरोधात् ॥ ५६ ॥

ततश्च परेद्यवि द्यवि भुवि प्रथमानमानमहत्या महत्या मुदैवानकादिशब्दमनिवार्यैव तेनैव क्रमेण भाविन्यां भाविन्यां यमयमभगिनीप्रियायामद्वितीयायां द्वितीयायां यमुनास्नानार्थं तत्तटमेव सर्वे समाजग्मुः ॥ ५७ ॥

ततः परेद्यवि भाविन्यां तत्परदिने भविष्यन्त्यां भाविन्यां कान्तिरत्तिण्यां यमश्च यमभगिनी यमुना च तयोः प्रियायां द्वितीयायां प्रातर्यमुनास्नानार्थं प्रतिपद्येव सायं समाजग्मुः। द्यवि भुवि स्वर्गे मर्त्यलोके च प्रथमानो मान आदरो यस्य तं शब्दम्· अहत्या प्रतिघाताभावेनैवानिवार्यं ॥ ५७ ॥

विभातायां च तस्यां क्षणदायां क्षणदायां विशिष्टशिष्टसमाचारलब्धे भ्रातृद्वितीयानिमन्त्रणे मन्त्रणेन चतुरया रयादेवोपनन्दात्मजयात्मजयाय सदा मोदरस्य दामोदरस्य भ्रातुर्निमन्त्रणं यदाकारि ॥ ५८ ॥

उपनन्दात्मजया यदि भ्रातुर्निमन्त्रणमकारि तदा तया परिवेष्यमाणमोदनपानादिकं भुञ्जानः श्रीकृष्णो हसता माणवकेन जगद इत्यन्वयः। निमन्त्रणे विषये यन्मन्त्रणं योग्यविवेचनशक्तिस्तेन हेतुना चतुरया· उपनन्दात्मजया सुनन्दया। भ्रातुः कथंभूतस्य, आत्मजयार्थं सदा· एव मोदरस्य हर्षयुक्तस्य हर्षदायिनो वा ॥ ५८ ॥

तदा स च सचराचरजगन्मनोरञ्जनोऽरं*ञ्जनोचितभगिनीवा-

* —रं जनो—इति मुद्रणीये परसवर्णः प्राप्यत्।

त्सल्यानुरोधेन विरोधेन विरहितं हितं समुपचितचित्तद्रवोदयया दयया शरीरिण्येव तया परिवेष्यमाणविष्यमाणमिष्टपिष्टकादिकमतिसुरसबहुरसबहुविधमामोदनमोदनपानादिकं सहचरैर्हासरसपटुनावटुना वलितैः सह कुतूहलिना हलिना च सुरसं भुञ्जानो हसता सता तेनैव माणवकेन नवकेन नदनविनोदेन जगदे जगदेकमोहनः श्रीकृष्णः ॥ ५८ ॥

अरं क्षिप्रमेव सम्यगुपचितश्चित्तद्रवस्य· उदयो यस्यास्तया, इष्टान्यनपकारीणि पिष्टकादीनि यत्र तत्, अतिसुरसं च तद्· बहुभी रसैर्बहुविधं चेति तत्, नदनविनोदेन वचोविलासेन ॥ ५९ ॥

हन्त हन्तारघस्य वयस्य दुर्मेधसा वेधसा वेह सकला एव तिथयोऽतिथयो भ्रातृद्वितीयात्वेन न कृताः कथं वा हे श्रीवत्सर वत्सरदिनसंख्यासंख्याताः स्वसारोदयाः स्वसारो दयाः शरीरिण्य इव नाभवन् भवतः ॥ ६० ॥

भ्रातृद्वितीयात्वेन· अतिथयः· नित्यमागमनपराः । श्रीवत्सर हे श्रीवत्साख्यसल्लक्षणयुक्त, इदमप्येकं मद्वाचकमुत्तमलक्षणं कथं तव नाभूदिति भावः । यद्वा श्रीः संपत्तिस्तद्युक्तं वत्सं वक्षो रातीति, एषापि संपत्तिस्तवोचितैवेति भावः । स्वेषां सारः श्रेष्ठ उदयः सुखभोजनात्मको याभ्यस्ताः, स्वसारो भगिन्यः ॥ ६० ॥

* यद्युभयोः कतरदेकतरदेव समभविष्यदभविष्यदतिकौतुकं तदैव नः ॥ ६१ ॥

नह्यीदृशं पर्वतपर्वतरले गतेऽहनि च निचयीभूतेऽन्नपानेमया मो जनप्रिय भोजनप्रियतमेन भुक्तं यथाद्येति तदुपहासहाससरसव-

* व्याख्याकृतैतद् वाक्यं परित्यक्तमिति टीकाक्रमे मूलानुरोधिसंख्याप्रदर्शनाभावोऽवसेयः ।

चसा च सानन्दमभ्यवजहार जहार च सकलजनमनो मनोज्ञचरितः स घोषराजयुवराजः ॥ ६२ ॥

भो हे जनप्रिय, जनसंघट्ट एव प्रीयसे न पुनरेकान्ते मिष्टद्रव्यभक्षणसुखपरिपाटीं जानासीति भावः । तदुपहासस्य हासः प्रकाशस्तेन सरसवचसा ॥ ६२ ॥

अथ परस्परादरपरा परार्घ्यमणिकनकालंकारसिचयचयव्यावदायी समजनि जनितकौतुका जनिमतामतानवेनैव ॥ ६३ ॥

व्यावदायी परस्परदानम् । जनिमतां जन्मवताम्· अतानवेनैव बाहुल्येनैव जनितं कौतुकं यया सा ॥ ६३ ॥

एवं समाप्ते भ्रातृद्वितीयामहे या महेन्द्रस्य मखभङ्गापीडा पीडाजनि तदुपशमकृते कृतेयं तस्य या कुरीतिरीतिकरी साधुना साधुना मतेन वर्ण्यते ॥ ६४ ॥

मखभङ्ग एव· आपीडः शेखरो यस्याः सा पीडा । ईतिरतिवृष्टिलक्षणा उपद्रवः ॥ ६४ ॥

तथाहि स्थितोऽधिसुरसभं रसभङ्गविमना विहते निजमखे सखेदं खे दंदह्यमान इव पुरंदरोऽदरोऽदरोदितमनस्तापरुषा परुषाक्षरमजल्पत् ॥ ६५ ॥

अदरो निर्भयः, अत एव· अदरोदितेन· अनल्पोद्गमेन मनस्तापेन या रुट् क्रोधस्तया ॥ ६५ ॥

अहो चित्रमहो महो मे पातितः पाल्यमानपशुभिः पशुभिः शिशुवाचाशु ॥ ६६ ॥

पाल्यमानपशुभिर्गोपैः पशुभिः पशुतुल्यैः· आशु शीघ्रं शिशुवाचा मे महः पातितः । वस्तुतस्तु पशुभिरपि पाल्यमानमपेत्यमाणं पशु दर्शनं येषां तैः, "अव्ययं पशु दर्शने" इति मेदिनी ॥ ६६ ॥

वाचामधीशापि यस्य मे वास्तवं स्तवं कुरुते तत्र मदुपासापासनाकारमागो मा गोपा गणयन्ति स्म यन्ति स्म केवलं बलं मदान्धतायाः ॥ ६७ ॥

वाचामधीशापि सरस्वत्यपि । तत्र मयि· आगोऽपराधं गोपा मा गणयन्ति स्म । आगः कथंभूतं, मदुपासनाया अपासना त्यागस्तदाकारम् । मदान्धताया मदान्धत्वस्यैव बलं यन्ति स्म प्राप्तवन्तः । वस्तुतस्तु मे वाचाम्· अधीशापि मम दुर्मतेरपि सरस्वती यस्य शिशोर्वास्तवं स्तवं कुरुते तत्र तस्मिन् श्रीकृष्णे सति, किंच मम· आ सम्यक् प्रकारेण· अन्धता एव यास्ता बलं यन्ति स्म प्रापुः, तत्र श्रीकृष्णे मम त्वज्ञत्वान्येव वर्धन्त इत्यर्थः ॥ ६७ ॥

भद्रं भो भद्रमाभीरा भीराहित्येन कथं सन्ति संतिग्ममतयो भवन्तः ॥ ६८ ॥

एवं परुषवल्गनैरप्यशान्तो बुद्धा· अभिमुखीकृत्य सतर्जनमाह भद्रमिति । भीराहित्येन निर्भयत्वेन संतिग्ममतयः सम्यक्कटुबुद्धयः । वस्तुतस्तु भीराहित्ये सति भवन्तः सुतीक्ष्णमतयः कथं न सन्ति, अपितु सन्त्येव, अत्र पक्षे भद्रं भो भद्रमित्युल्लासे ॥ ६८ ॥

कथं बालो वा लोलमतिरयं तिरयंस्त्वादृशामघं शतमन्युमन्युतो युष्मानायुष्मानासादयतु प्रियं प्रियंभावुको भावुकोदयेन कथं भवतु वः पश्यामि ॥ ६९ ॥

लोलमतिरयं बालः कृष्णः शतमन्युमन्युतो हेतोस्त्वादृशामघमपराधं तिरयन् दूरीकुर्वन् स्वयं वा· आयुष्मान् सन् कथं युष्मान् प्रियम्· आसादयतु प्रापयतु, कथं वा वो युष्माकं भावुकोदयेन मङ्गलोदयेन हेतुना प्रियंभावुको भवतु, तदहं पश्यामि । वस्तुतस्तु· अलोलमतिरतिधीरस्त्वादृशां त्वद्विधानामन्येषामप्यघं व्यसनं तिरयन् सन् भावुकोदये सति कथं न प्रियम्· आसादयतु, कथं वा न प्रियंभावुको भवत्विति,नेत्यस्य· उभयत्रापि संबन्धः ॥ ६९ ॥

इति प्रतिघाप्रतिघातभग्नमना मनाग् विचिन्त्य महाकल्पकल्पनकारिणो महापघनान् घनान् क्रोधनिर्बन्धतो बन्धतो मोचयित्वा रचयित्वारमतिश्लाघया बलमानमाननाभाजनान् कृतसभाजनान् कृतसदयावलोकान् संवर्तकादीनुवाच ॥ ७० ॥

प्रतिघायाः क्रोधस्य प्रतिघातेन भग्नं मनो यस्य सः, "प्रतिघा रुट्क्रुधौ स्त्रिया"वित्यमरः, महाकल्पस्य महाप्रलयस्य कल्पनकारिणो निर्माणसमर्थान् महापघनान् बृहच्छरीरान्· अतिश्लाघया यूयं महाबलिन एव मम परमसहाया इत्येवं प्रोत्साहनेन बलमानमाननाया अत्यादरस्य भाजनान्· अरं शीघ्रमेव रचयित्वा·उवाच । कृतं सभाजनं भवत्किंकरा एव वयमाज्ञानुवर्तिन इत्येवमिन्द्रस्तुतिर्यैस्तान् ॥ ७० ॥

हंहो रंहोरञ्जिता जिताखिलासारकृतः सारकृतः खलु भवतां मदो मदोजसां वर्धकः ॥ ७१ ॥

जितमखिलं यैस्तथाभूतान्· आसारान् धारासंपातान् कुर्वन्तीति ते । सारकृतो मदः· बलजनितो गर्वः ॥ ७१ ॥

यन्मया निगद्यतेऽद्य तेन भवन्तो भवन्तो मत्प्रियाय कृतार्थयन्तु माम् ॥ ७२ ॥

भवन्तो यूयं, मत्प्रियाय मत्प्रीत्यर्थं भवन्तो वर्तमानाः ॥ ७२ ॥

मास्तु विलम्बो निराविलं वो निरासकत्वमस्ति जगतः किमेकस्य प्रदेशस्य तदधुना धुनाना इव भुवनकोशं व्रजनगरनाशाय वर्षन्तु ॥ ७३ ॥

वो युष्माकं निराविलं यथा तथा जगतो विश्वस्यापि निरासकत्वं संहारकत्वम्· अस्ति, तादृशी योग्यता वर्तत इत्यर्थः ॥ ७३ ॥

इत्येवमुक्तो मुक्तो बन्धनतो नतोऽतितरां संवर्तको नाम गणः प्रचक्रमे क्रमेण स्वदर्पमुपपादयितुम् ॥ ७४ ॥

अतितरां नतः कृतप्रणामः ॥ ७४ ॥

प्रथमतः क्वापि कादम्बिनी गगनसरसः शैवालावली बलीयसीव किरणमालिमालिन्यमासादयामास ॥ ७५ ॥

कादम्बिनी मेघमाला ॥ ७५ ॥

क्षणमात्रतो रसातलतलत उत्थिता वलमानमाननागनागरीनिः-श्वासधूमधोरणीव दिग्वलयमन्धकारितं चकार क्वापि घनश्रेणी ॥ ७६ ॥

मानः परिमाणं गर्वो वा ॥ ७६ ॥

तदविलम्बतः केदारदारणखेलापरिणतदिक्करिकरिणीगणा इव युगपदेव देववर्त्म रुरुधुरुरुधुराः केचिदम्भोदा दम्भोदात्ताः ॥ ७७ ॥

केदारः पर्वतविशेषः । देववर्त्म आकाशम् । दम्भेन उदात्ता उद्गृहीताः ॥ ७७ ॥

तदनु शतकोटिकोटिभिरक्षुण्णपक्षतयाक्षतया कायव्यूहमिवार-चयन् मैनाको नाकोपरि परिभ्रमन्निव कोऽपि घनगणो घनत्वमास-साद ॥ ७८ ॥

शतकोटिकोटिभिर्वज्राग्रैः । अक्षतयेति अक्षुण्णपक्षतयेत्यस्य विशे-षणम् । अक्षुण्णपक्षता तस्य अक्षता संपूर्णैव, न त्वेकांशेनेत्यर्थः ॥ ७८ ॥

तत्समकालमेव लोकालोकाचल इव खरशिखरशिखाभिरभित एव युगपदूर्ध्वमूर्ध्वमूर्जस्वलतया वर्धमानाभिरितरेतरेण परित एव समासक्ताभिर्ज्योतिश्चक्रं निर्वाप्य बहिर्लोकमिवान्तरं लोकमपि तमो-मयं कुर्वाणः कश्चन धाराधाराणां निकायोऽतिकायोऽतितरामा-सीत् ॥ ७९ ॥

खराभिः शिखरशिखाभिः शृङ्गाग्रैः ऊर्ध्वमूर्ध्वं व्याप्य ॥ ७९ ॥

एवं सति स तिमिरसंघातः खरतरपरपरशुच्छेद्योऽपि यदि नाभूत् तदा तमोभूरिव भूरि वर्धिष्णुतमा भुवनत्रयीयमासीत् ॥ ८० ॥

परपरशुनापि छेत्तुमशक्य इति कविप्रौढोक्तिरतिनैविड्यतात्पर्या । तमोभूरन्धकारस्वामिका भूमिः ॥ ८० ॥

इदमसीममसीमयमिव जगदण्डभाण्डं च ॥ ८१ ॥

असीममसीमयमिवेति, वस्त्वन्तरस्यापि कालिमापादकत्वांशेनो-त्प्रेक्षा ॥ ८१ ॥

तथापि व्रजपुरपुरंदरनन्दनचरणनखसुधाकिरणकिरणकन्दलीद-लितमिव व्रजपुरं प्रति प्रतिकूलं तथा नासीत् ॥ ८२ ॥

सुधाकिरणश्चन्द्रः ॥ ८२ ॥

एवं द्रव्यमिव दशम*न्दश मन्दीकृत्य दिशो भृशमन्धतम-समन्धतमसकलजनमिव जगत् कुर्वाणमिव मुहूर्तं यदि समव-र्तत ॥ ८३ ॥

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभ्यो नवभ्यो द्रव्येभ्योऽति-रिक्तम्·अन्धतमसं नाम दशममिव द्रव्यं दश दिशो मन्दीकृत्य·अन्धतमाः सकला एव जना यत्र तथाभूतं जगत् कुर्वाणमिव ॥ ८३ ॥

तदा तदाकस्मिकमिव घुणविद्धादिवोपरितनजगदण्डकटाहाद् गलतामावरणवारां वारान्तरानुत्पपन्नं विन्दुजालं महीमहीनकर्दमां चक्रे ॥ ८४ ॥

तत् प्रसिद्धम्· आवरणवाराम्·अण्डकटाहबहिःस्थितजलानामिव विन्दुजालं कर्तृ· आकस्मिकमकस्मादुद्भूतमिव, किंच वारान्तरेऽनुत्पन्नम्, अहीनकर्दमां संपूर्णकर्दमयुक्तां महीं चक्रे ॥ ८४ ॥

समनन्तरमनन्तरयास्त एव विन्दवो विन्दुतामपहाय गगनम-हान्यग्रोधस्य न्यग्रोधस्यदा महावरोहाकारा धाराभावमापेदिरे ॥ ८५ ॥

अनन्तरयाः· अनन्तवेगाः, गगनमेव महान् न्यग्रोधो वटस्तस्य महान्तः· अवरोहाः शाखाशिखास्तदाकाराः, न्यञ्चो न्यग्भूता रोधस्यदा आवरणवेगा येषां ते ॥ ८५ ॥

*—न्दशेति परसवर्णः प्राग्वत् ।

एवं सति ।

वत्सानाच्छाद्य सास्नावलयवलनया द्राघयन्त्यः शिरोधीन्
मूर्धानं नम्रयन्त्यः कुटिलितनयना निश्चला लम्बिलूमाः ।
धारापातावघातक्षुभितपृथुतरोत्कम्पभूयिष्ठपृष्ठाः
कातर्येणेक्षमाणाः शरणमुपययुर्धेनवः कृष्णमेव ॥ ८६ ॥

सास्नाभिर्गलकम्बलैर्वलयवलनया मण्डलीकरणेन वत्सानाच्छाद्य । शिरोधीन् ग्रीवाः । कुटिलितनयना इति, आसारसंमर्दभीत्या नेत्रयोर्मुद्रणात् बहिर्दर्शनार्थं च किंचिदुन्मीलनाच्च । लम्बिलूमाः लम्बमानपुच्छाः ॥ ८६ ॥

किंच ।

आविद्धः शृङ्गकोटावतिपृथुनि ककुन्मण्डले गण्डशैले
संशीर्यन् जर्जरत्वं प्रगत इत इतः शीकराकारमाप्तः ।
भग्नः पृष्ठे गरिष्ठे स्फटिकमणिशिलापेशले हन्त वारां
धारापातः प्रकोपं रुजमपि विदधे धावतां पुंगवानाम् ॥ ८७ ॥

पुंगवानां शृङ्गककुत्पृष्ठपतितानासारान् यथास्वरूपोदयं वर्णयति आविद्ध इति । प्रकोपं युयुत्साभिप्रायेण क्रोधम् । रुजम् अत्याघातवशात् पीडाम् ॥ ८७ ॥

अथ क्षणक्षणतो विलक्षणलक्षणतो रम्भास्तम्भास्तरुणतरा इव स्थूलभावलभा वर्षीयसीर्धाराः सुदुर्वारा वारामवलोक्य सर्व एव सातङ्कं त*ङ्कंचनाकालकल्पकल्पमाशु मन्यमाना वलमानावलभावा व्रजपुरजना जनानन्दकरं श्रीकृष्णमुपसंगम्य गम्यमानखेदातिशयं निवेदयांचक्रुः ॥ ८८ ॥

तरुणतरा अतिपुष्टा रम्भाणां स्तम्भा इव स्थूलभावं स्थौल्यं लभन्त

* तङ्कमित्यत्र परसवर्णः प्राग्वत् ।

इति ताः वारां धाराः । तम्· अकाले· असमयेऽपि कल्पः कल्पनं यस्य तादृशं कल्पं प्रलयम् । वलमानोऽवलभाव आवल्य येषां ते ॥ ८८ ॥

भो भोः कृष्ण महावाहो महावाहो नः खलु विशंकटं संकटं संचचार ॥ ८६ ॥

हे महाव हे· उत्सवरक्षक, सदा सुखदायिनि त्वयि तिष्ठति कथमेतद्दुःखमिति भावः । अहो· आश्चर्यम् । नोऽस्माकम् । विशंकटं बृहत् ॥ ८९ ॥

तदिदं गोकुलमात्मनाथमात्मनाथ मा विलम्बेन प्रतिपालयितुमर्हसि ॥ ६० ॥

आत्मनाथं त्वन्नाथकम्, आत्मना स्वयमेव, यद्वा· आत्मना सह, अथ· अनन्तरमेव, मा विलम्बेन· अविलम्बेन ॥ ९० ॥

पश्य पश्य ।

इयं विद्युद्वीथीकुपितफणिजिह्वेव वलते
शिलासारः सारं हरति पुरवाटीक्षितिरुहाम् ।
अयं मेघज्योतिर्व्यतिकर उदीर्णोऽधिसलिलं
ज्वलत्युच्चैरौर्वानल इव समुद्रोदरचरः ॥ ६१ ॥

शिलानाम्· आसारः संपातः, मेघज्योतिषां वज्राग्नीनां व्यतिकरो व्यतिषङ्गः ॥ ९१ ॥

किंच ।

यथोर्ध्वं स्फायन्ते पुरुपरुषगर्जं जलमुचः
क्रमस्थूणास्थौल्यं तिरयति च धाराततिरियम् ।
अयं चोणीनत्युन्नतिपरिचयच्छित् परमपा-
मपारो व्यापारः प्रलयजलधित्वं प्रथयते ॥ ६२ ॥

यथा स्फायन्ते वर्धन्ते तथैवेयं धाराततिः स्थूणास्थौल्यं स्तम्भस्य

स्थूलतामपि तिरयति तिरस्करोति । अप्यर्थे चकारः, ततश्च क्षोण्याः पृथिव्या नत्युन्नत्योः निम्नत्वोच्चत्वयोः परिचयं छिनत्तीति तथाभूतोऽपां जलानां व्यापारोऽपारः ॥ ९२ ॥

परितश्च पश्य ।

निषण्णानुत्सङ्गे खरतरशिलापातविकलान्
स्वतन्वा संछाद्य व्यथितवपुषो वत्सनिचयान् ।
दवाग्नेः संत्राताः सपदि सलिलात् पाहि न इति
प्रतीक्षन्ते बाष्पाकुलचलदृशस्त्वां सुरभयः ॥ ६३ ॥

कृपां जनयितुं धेनूनां दुरवस्थां तर्जन्या दर्शयन्त आहुः निषण्णानिति ॥ ९३ ॥

अन्यतश्च पश्य ।

चूर्णायित्वा महति ककुदि श्रोणिपृष्ठं गते द्रा-
गोघे मुक्ताव्यतिकर इव स्थूलवर्षोपलानाम् ।
मेघान् क्रोधोन्नमितशिरसो भीममुद्वीक्षमाणा
धारापातप्लुतमुखदृशो यान्ति कष्टं महोक्षाः ॥ ६४ ॥

प्रियाणां पुंगवानामोजःपरिभवं तच्चरित्रेण दर्शयन्तस्त्राणे सत्वरमेव समुत्साहयन्त आहुः । चूर्णायित्वा चूर्णानीवाचर्य, चूर्णीभूयेति यावत्, स्थूलवर्षोपलानाम् ओघे समूहे श्रोणिपृष्ठं गते सति, महोक्षा महावृषाः ॥ ९४ ॥

किंच ।

अनल्पः कल्पान्तक्षमतममहावर्षणतनू-
रनर्थानां सार्थो दुरुपशम एष व्यजनि नः ।
परित्राता नान्यस्त्वदपर इति त्वामिह वयं
प्रपन्ना व्यापन्नानहह निजलोकान् न कुरु नः ॥ ६५ ॥

कल्पान्ते महाप्रलये तमतममतिसमर्थं यन्महावर्षणं तस्य तनूर्मूर्तिरूपः· अनर्थानां सार्थः समूहः । नोऽस्मात् प्रपचात् व्यापन्नान् न कुरु । अत्र प्रत्युपद्रवसमयमेव सर्वव्रजवासिनां "नारायणसमो गुणै"-रिति "य एतस्मिन् महाभाग" इति "अराजके रक्ष्यमाणा" इत्यादि-सर्वज्ञगर्गवाक्यानां सहसा स्मरणात् तत्प्रपत्तिर्नासंगतेति ॥ ९५ ॥

इत्याकर्णयन्नाकर्णयन्नयनप्रान्तो विलोकयन्नपि धेनूनामनूनामपग्लानिं शतमन्युमन्युजन्यमिदमिति विचारयन् मधुमधुरमकम्पानुकम्पानुचर्या गिरा मा भैष्ट भो मा भैष्ट क्षुद्रो हि क्षुद्राहिबाधोदय इवायमुपद्रव इत्याश्वास्य ॥ ९६ ॥

इत्याकर्णयन् मा भैष्ट मा भैष्टेत्याश्वास्य लीलाविशेषं तन्वानो यदा गोवर्धनमुद्दिधीर्षुरभवत् तदैवास्य कृष्णस्य करोदरे गोवर्धनो लोकेन व्यालोकीत्यन्वयः । आकर्णं कर्णपर्यन्तं यन् गच्छन् नयनप्रान्तो यस्य सः । ग्लानिं कथंभूतां, न· ऊनाम्· अनूनां, संपूर्णामित्यर्थः । इदम्· अतिवर्षणम् । अकम्पा निश्चला या· अनुकम्पा सैव· अनुचरी यस्यास्तया गिरा, तद्वागधीनैव कृपाशक्तिस्तामाश्रित्य प्रवर्तितया· इत्यर्थः । यद्वा प्रथममनुकम्पा तदनुचरी तदनुगामिनी च या गीस्तया । हि निश्चितं क्षुद्रोऽयमुपद्रवः क्षुधो बुभुक्षाया द्रोही द्रोहकरो बाधोदयः पीडोद्गम इव, अल्पप्रयोगमात्रेणैव सुचिकित्स्य इति भावः ॥ ९६ ॥

संकल्पकल्पनमात्रादेव तमनर्थमनर्थकत्वमापादयितुं समर्थोऽपि भजतामाकल्पमाकल्पमिव वाङ्मनसयोः सुरकिंनरनरनिकरेण गास्यमानममरपरिवृढमदालीलाविशेषं लीलाविशेषं कुसुमसुमधुरया तन्वा तन्वानोऽकृतपरिकरबन्धोऽवहेलावहे लावण्यसरसि स रसिकशेखरःसुस्नात इव ॥ ९७ ॥

लीलाविशेषं तन्वानो विस्तारयितुम् । कथंभूतं, भजतां जनानाम्· आकल्पं कल्पपर्यन्तं वाङ्मनसयोराकल्पं भूषणमिव कीर्तनीयत्व-

चिन्तनीयत्वाभ्याम् । किंच· भ्रमरपरिवृढस्य· इन्द्रस्य मद्यालीनां मदश्रेणीनां लावी छेदी शेषो यस्य तम् । अवहेला· इन्द्रं प्रत्यवज्ञा तां वहति व्यनक्तीति तथाभूते लावण्यसरसि ॥ ९७ ॥

छत्राकं कुतुकेन बालक इव स्तम्बेरमः स्तम्बवत्
श्रीगोवर्धनमुद्दिधीर्षुरभवच्चित्तेन कृष्णो यदा ।
तर्ह्येवास्य करोदरे चटचटाध्वानध्वनत्कन्दरा-
सुप्तोद्बुद्धकिशोरकेशरिसभो व्यालोकि लोकेन सः ॥ ९८ ॥

स्तम्बेरमो हस्ती । स्तम्बवत्, गुच्छमिवेत्यर्थः । बालकस्य छत्राकोद्धरण एव बलं पर्याप्तमित्यपर्याप्तबलेन स्तम्बेरमेण सह पुनरुपमानम् । यदैव चित्तेनोद्दिधीर्षुरभवत् तदैव तस्य करोदरे लोकेन स व्यालोकि, इति संकल्पसमकालमेव तादृशव्यापारोदयात् तत्रानायासः सूचितः । चित्तेनेति, केवलेन मनसैव न तु स्वकरेणापीति दिधीर्षाया अपि सामान्यतः प्रथमावस्थैव· उक्ता, मनसा पाटलिपुत्रं प्रथमं जिगमिषतीतिवत् । कीदृशः सन् व्यालोकि, चटचटाध्वानेन ध्वनन्तीषु कन्दरासु सुप्ता एवोद्बुद्धा स्वापावस्थतयैव सहसोच्छलनात् प्राप्तजागरा किशोरकेशरिणां सभा बलिष्ठसिंहश्रेणी यत्र सः ॥ ९८ ॥

ततश्च ।

धातुर्ध्यानप्रतानक्षपणपणपटुः प्रौढनागेन्द्रनारी-
क्रीडामाध्वीकपानोत्सवनवरभसास्वादबाधप्रगल्भः ।
दिङ्मातङ्गेन्द्रदानद्रवणविघटनस्तत्समुल्लासनोत्थो
भ्राम्यन् ब्रह्माण्डभाण्डोदरमधि न ममौ कोऽपि
कोपी प्रणादः ॥ ९९ ॥

चटचटाध्वानमेव सविशेषं वर्णयति धातुरिति । क्रमेणोर्ध्वाधोमध्यलोकव्याप्तिः । ध्यानप्रतानस्य क्षपणं दूरीकरणमेव पणस्तत्सिद्धौ चतुरः । आस्वादस्य बाधे प्रतिबन्धे प्रगल्भः । दानस्य द्रवणं स्रवणं तद् विघटयति

दूरीकरोतीति सः । तत्समुल्लासनोत्थः पर्वतोत्क्षेपेण जनितः । त्रयाणामप्येषामन्यावधानासंभवेऽपि सहसा त्रासोदयसूचनात् प्रणादस्य जातिप्रमाणाभ्यामतिशयः सूचितः ॥ ९९ ॥

किंच ।

ओजःकण्डूललीलालसकरकमलेनालमुल्लास्यमान-
स्याद्रेर्हासप्रकाशप्रसर इव समाम्नातहर्षप्रकर्षः ।
उल्लासावेगविघ्नक्षितिरुहविततेर्वृन्ततो विच्युतानां
पुष्पाणां वर्षमासीदधिधरणि यशःपातवद्व्रजपाणेः ॥ १०० ॥

वर्षं वर्षणम्, "वृष्टिर्वर्ष" मित्यमरः । तदेवोत्प्रेक्षते । ओजसो बलस्य कण्डूला स्वानुरूपपात्रादृष्ट्या कण्डूवती या लीला तया लसति शोभत इति तेन करकमलेन उत्थाप्यमानस्याद्रेः स्वप्रभुपराक्रमदृष्ट्येव हासप्रकाशस्य प्रसरः प्रसरणं स इव सम्यगाम्नातोऽभ्यस्तस्तत्कारणभूतो हर्षप्रकर्षो यत्र सः, बहुहर्षजनित एवायं हास इत्यर्थः ।

किंच हासोऽयं स्वगोत्रशत्रुमिन्द्रं प्रत्यवज्ञार्थं प्रयुक्त इत्युत्प्रेक्षान्तरं सूचयन् पुष्पाणां धरणौ पतनलिङ्गवशात् पुनरुत्प्रेक्षते यशःपातवदिति ॥ १०० ॥

किंच ।

ऊर्ध्वोर्ध्वं वर्धमानैः खरतरशिखरैश्छिन्नभिन्नाभ्रपङ्क्ति-
स्तस्य क्षोणीरुहौघैः परिभवितुमिव प्रोद्ययै नन्दनद्रून् ।
सिंहैर्दन्तावलेन्द्रभ्रमकुपिततमैर्दारुणं दारयद्भि-
स्तीक्ष्णाभुग्नैर्नखाग्रैर्जलधरपटलीं सर्वतः संप्रसस्रे ॥ १०१ ॥

तस्य गोवर्धनस्य क्षोणीरुहौघैः प्रोद्ययै प्रोदगम्यत । नन्दनद्रून् नन्दनवनवृक्षान् । दन्तावलो हस्ती । जलधरपटलीं दारयद्भिः सद्भिः सिंहैः सर्वतः समन्तात् संप्रसस्रे प्रोद्गम्यते स्म ॥ १०१ ॥

उदस्ते कृष्णेनावरकरतलेनाचलपता-
वहो कोऽयं व्योम स्थगयति किमेतत् कथमिति ।
चकम्पे कैलाशः समजनि सुमेरुः पुरुभयो
ममज्जोच्चैर्गङ्गापयसि चकितो दिग्गजगणः ॥ १०२ ॥

अवरकरस्य वामहस्तस्य तलेन· उदस्ते· उत्क्षिप्ते सति ॥ १०२ ॥

किंच ।

जलासारैर्विष्वक्स्रुतिभिरथ मुक्ताकरचयै-
र्मुरारातेः श्रीदोर्मरकतमणीदण्डरुचिरम् ।
अभेद्यं दम्भोलेरपि पवनवेगैश्च न धुतं
महारत्नच्छत्रं समजनि गिरिर्गोकुलजुषाम् ॥ १०३ ॥

विष्वक् समन्ततः स्रुतिः क्षरणं येषां तैः । दम्भोलेर्वज्रस्यापि ॥ १०३ ॥

एवं नाम वामकरकमलेनोल्लास्य निजगिरिवरं निजगिरि वरं विश्वासमासादयन्नुवाच वाचस्पतिभिरप्ययमनिर्वचनीयचारुचरितः ॥ १०४ ॥

निजगिरि निजवाक्ये वरं विश्वासम्· आसादयन् प्रापयितुम् ॥ १०४ ॥

मातर्मा तरलं मनः कुरु पितर्मा चिन्तनीयं त्वया
संदेहं सुहृदो न धत्त पतिता नायं गिरिर्मत्करात् ।
साक्षादेव विलोकितं तनुमता येनार्चनं स्वीकृतं
तस्य व्योम्नि कृतावलम्बनतया किं दुष्करावस्थितिः ॥ १०५ ॥

तरलं शङ्काचपलम् । न पतिता न पतिष्यति ॥ १०५ ॥

किंच ।

आकारेण महानयं गिरितया यद्यप्ययं स्थावरो
देवत्वात् सहजादलौकिकतया तर्कस्य नो गोचरः ।
पश्यायं लघिमास्य येन हि मयाप्युल्लासितो लीलया
तत्राहं तु निमित्तमात्रमहह स्वेच्छामयोऽयं गिरिः ॥ १०६ ॥

येन लघिम्ना हेतुना, मयापि शिशुनापि ॥ १०६ ॥

ततः ।

अस्याधः प्रविशन्तु सन्तु सुखिनः स्वं स्वं गृहीत्वा व्रजं
स्वच्छन्दं निवसन्तु गोपनगरान्नेदं विलं भिद्यते ।
कल्पान्ते जगतां जना हि वपुषा नारायणस्योदरे
सूक्ष्मेणैव वसन्ति तत्र नतरामेतादृशं कौतुकम् ॥ १०७ ॥

गोपनगरान्न भिद्यते ततो न भिन्नं, तत्तुल्यमेवेत्यर्थः ॥ १०७ ॥

किंच ।

उल्लासक्रमवेगतः समुदितैः सारैर्मृदां संचयैः
प्राकाराभतया स्थितैस्तत इतो नास्मिन्नपामागमः ।
स्वेच्छाकाननचारतोऽपि सुखिभिर्वृन्दैर्गवां भूयतां
स्वस्वावासविलासवासरभसो विस्मर्यतां बन्धुभिः ॥ १०८ ॥

सारैर्दृढैरासारैः, भेत्तुमशक्यैरित्यर्थः ॥ १०८ ॥

इति धराधराधिपभृता भृतोऽमृतरसेनेव व्याहारो हारोपमो यदि सपदि स परिशशाम तदा तदाश्वस्तहृदः सुहृदः सुतकलत्र-धनगोधनगोष्ठसहिताः सपुरोधसोऽरोधसोष्यमाणसुखा निःषमपर-मपरभागतं गतं भूधरवरस्य रवरस्यमाविविशुः ॥ १०९ ॥

धराधराणां पर्वतानामधिपं प्रभुं श्रीगोवर्धनं बिभर्तीति तेन भृतः पुष्टः । हारोपम इति, हृदये सादरधारणात् परिशशाम परिशान्तः, विरत इत्यर्थः । अरोधमवारितं यथा स्यात् तथा सोष्यमाणानि सुखानि येषां ते । निःषमेण निस्तुलेन परमपरभागेन अतिशोभया ऋतं दीप्तम्, "ऋतमुञ्छशिले जले । क्लीबं सत्ये च दीप्ते स्यात्", इति मेदिनी । रवेण कोलाहलेन रस्यं रसनीयं यथा स्यात् तथा विविशुः ॥ १०९ ॥

॥ शेषमग्रे ॥

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य दशमः परिच्छेदः ॥

२० ॥ प्राकृतिककार्याणां सर्वदा नैयत्यस्य कल्पना ऽस्य दुष्प्रयोगस्य हेतुः ॥—मन्ये विशेषजातीनामार्थस्वरूपाणां प्रातिनिध्येन पदानां प्रयोगस्य विशेषतः प्रतिबन्धकं प्रकृतिः साधारणनामबोध्यायां प्रत्येकस्यां व्यक्तौ वास्तविकरूपाभ्यन्तरावयवसंस्थानस्य रचनया सर्वस्या अपि तत्तद्विशेषजातेः परिच्छेदं करोति तत्तत्कार्याणि च नियतान्येव करोतीति पूर्वं वर्णितं कल्पनमेवास्ति । परं तु यस्तेषां भिन्नान् भिन्नान् धर्मान् परीक्षते स एकपदवाच्या अनेकव्यक्तयः स्वीयाभ्यन्तरसंस्थित्या पृथङ्नामविशेषवाच्यव्यक्तिभ्य इव परस्परं भिद्यन्ते इति न कदापि संदिह्यात् । परं तु एकरूपं यथार्थमाभ्यन्तरं चावयवसंस्थानमेकरूपविशेषनाम्ना सह सर्वदा संगतमितीदं कल्पनं पदानां प्रयोगकालिकवक्त्रधारितमिश्रविज्ञानातिरिक्ताबोधकत्वेपि तदार्थस्वरूपप्रातिनिध्येन तेषां नाम्नां प्रयोगाय मनुष्यान् प्रवर्तयति । इत्थं चैकमर्थं बोधयन्ति पदानि यद्यपरत्रार्थे प्रयुक्तानि स्युस्तर्हि एवंविधेषु प्रयोगेष्ववश्यं मनुष्यसंवादेषु महान्तं संदेहमुत्पादयन्ति, विशेषतश्च ये वस्तूनां तत्तद्विशेषजातीनां पृथग्भावस्य नियमनस्य च दृढसाधनतया परिकल्पितानां वास्तविकाकाराणां सिद्धान्तं व्यवस्थापयन्ति तेषामप्यनिश्चयं जनयन्ति ॥

२१ ॥ अयं दुष्प्रयोगो मिथ्याकल्पनाद्वयात्मकः ॥ परं तु अस्मदविज्ञातविज्ञानानां तथाभूतानां स्वरूपाणां वा बोधाय शब्दप्रयोगस्य कामं व्याहतत्वे ऽसंगतत्वेपि चास्य वस्तुसामान्याभावबोधकत्वे पर्यवसानात् लोकैः कृते शब्दानां प्रयोगे किं चिदप्यवधानं कुर्वाणस्य सर्वस्यापि सुस्पष्टमस्ति यदेतदतिपरिचितमस्ति । यदा मनुष्यो वस्तुविशेषं पश्यंस्तस्य मर्कटत्वे कुरूपप्राणित्वे मनुष्यत्वे तद्भिन्नत्वे ऽपि वा तत्तद्वस्तु जिज्ञासति, तदा मनुष्यपदबोध्यता यस्य कल्प्यते तद्वस्तुविशेष-

जातेराथै स्वरूपं तस्मिन्नस्ति न वेत्येव परं जिज्ञासति । अस्मिन् द्रव्य-नाम प्रयोगप्रकारे वक्ष्यमाणभ्रान्तकल्पनाद्वयमस्ति । यथा ।—

प्रथमं तावत् सन्ति कानि चिद् यथार्थानि स्वरूपाणि प्रकृति-र्यदनुरूपान् सर्वान् वस्तुविशेषान् सृजति, यैश्च ते विशेषजातिरूपेण विविच्यन्ते इति । येन तत्तद्वस्तुनः स्वरूपं निर्वक्तुं शक्यते यदाश्रिताश्च तस्य प्रत्यक्षग्राह्या गुणाः सन्ति तादृशमाभ्यन्तरमवयवसंस्थानं सर्वस्यापि वस्तुनो ऽस्तीति त्वसंदिग्धं तथापि, मन्ये, यथा वयं तान् वस्तुविशेषान् जातिषु व्यवस्थापयामस्तथैतद् विशेषजातिरूपेण तान् न विभेदयति नापि तन्नाम्नां परिच्छेदकं भवति ।

द्वितीयतश्च तूष्णीमिवेदं क्रमश अमीषां प्रस्तुतस्वरूपाणां वि-ज्ञानानि अस्माकं सन्तीतीव व्याप्नोति, यतो यदीदृशः स्वरूपविशेषो ज्ञातोऽस्तीति वयं न कल्पयेम तर्हि तस्मिन्नस्मिन् वा वस्तुनि विशेषजाते-राथ स्वरूपमस्तीति कस्मै प्रयोजनाय कल्पयेम । एवमपीदमस्त्ययथार्थम् । अतश्चास्मदविज्ञातविज्ञानज्ञापनाय रचितानां नाम्नामीदृशः प्रयोगो ऽवश्यं तद्विषयकेषु तर्केषु संवादेषु च महतीमव्यवस्थां जनयेत्, शब्दैः संभाषणे च महद्दौष्कर्यं प्रसज्येत ॥

२२ ॥ (६) शब्दा नियतं स्फुटमर्थं बोधयन्तीति कल्पना ॥—ष-ष्ठतः, प्रायो विरलं परिदृश्यमानो ऽपि पूर्वोक्तादपरो ऽधिकं व्यापकः शब्दानां दुष्प्रयोगो ऽवशिष्यते । स चेत्थम् । यत्किं चिद्विज्ञानसंबद्धानां शब्दानां प्रयोगस्य चिरपरिचयाद् मनुष्या येष्वर्थेषु तान् प्रयुञ्जते तैरर्थैः सार्द्धं तेषां शब्दानामावश्यकं साक्षात्संबन्धं कल्पयितुमर्हन्ति, येन ते शब्दस्य यावानर्थोऽस्ति तदतिरिक्तं किमपि बोद्धुं न शक्यन्ते इत्यपरमपि कल्पयन्ति । अतश्च साधारणपरिगृहीतनाम्नां प्रयोगेषु वक्तृश्रोतारावश्य-मेकरूपं यथार्थं विज्ञानमवधारयत इति निःसंदिग्धमस्तीतीव शब्देषु संतोष्टुमर्हन्ति । अतो यदा संवादे किमपि पदं प्रयुज्यते तदा तेन पदेन तैः परेषां पुरतो यदधिकृत्य भाष्यते तदुपस्थाप्यते इति प्रकल्प्य तथैव च परैः

प्रयुक्तानि पदानि स्वव्यवहृतपदार्थमेव स्वभावत एव बोधयन्तीति निश्चित्य च परेषां पदानां सुस्पष्टमर्थस्यावगमाय स्वीयानां व्याख्यानाय च न कदापि श्रमं सहन्ते। अत एव वस्तुतः शब्दानां स्वैरिकास्थिरविज्ञानलिङ्गत्वे ऽपि सर्वानुमतविज्ञानानां स्थिरनियतलिङ्गतया पदानि मनुष्यैः परिगृह्यन्ते इति निरर्थको ऽपरिष्कृतः सार्वलौकिकः प्रवादः। किं चैवमपि याथार्थ्यैकरूपो विज्ञानसमुदायः स्वल्पेषामेव मिश्रविज्ञाननाम्नामस्तीत्यस्य तर्कैः सुप्रसिद्धत्वेपि यदि कश्चन संवादे वादे वा यत्र वस्तुतः प्रश्न आवश्यकस्तत्र परेषां पदानामर्थं पृच्छेत् तर्हि मनुष्या आश्चर्यं मन्वते। एतस्य सुस्पष्टमुदाहरणं न स्या,देवंविधः शब्दो दुर्लभ एव। प्राण इति पदस्यात्यन्तं परिचितत्वेपि प्रायः सर्वोपि तेन पदेन वक्ता किमभिप्रेतमिति जिज्ञासते एव। किं चैवमपि बीजान्तर्गतो वृक्षो, ऽण्डस्थितः पक्षिगर्भो, मूर्छागतश्चेष्टासंविच्छून्यो मनुष्यश्च जीवन्नस्ति न वेति यदि जिज्ञास्येत तर्हि प्राणेतिपदसदृशसुप्रसिद्धपदस्य प्रयोगेण सह स्फुटं विविक्तं नियतं च विज्ञानं सर्वदा संगतं नास्तीति सुखेन ज्ञायेत। मनुष्याः प्रायशः स्थूलानि विसंकुलानि विज्ञानानि वस्तुतो ऽवधार्य तत्र स्वस्वभाषीयान् साधारणशब्दान् प्रयुञ्जते। एवं यथार्थमक्रियमाणोपि तेषां शब्दप्रयोगस्तेषां लौकिककार्याणि संवादांश्च साधु निर्वाहयति। परं तु शास्त्रीयविमर्शाय नायं पर्याप्तः। प्रमातर्काभ्यां यथार्थानां नियतानां च विज्ञानानामपेक्षणात्। किं च यद्यपि मनुष्या न सर्वथा तथा जडा येन परैः प्रयुक्तशब्दानां विवरणजिज्ञासामकृत्वैव तेषां भाषितं किमपि न बुद्ध्येयुर्नापि तथा हठिनो दोषैकदृशो येन ते परैः क्रियमाणशब्दप्रयोगाणां खण्डनायोद्यता भवेयुस्तथापि यादृशस्थले वस्तुतत्त्वं ज्ञानं च संगते स्तस्तत्र येषां शब्दानां तात्पर्ये संदेहस्तेषां विवरणस्य जिज्ञासायां न कमपि दोषं पश्यामि। नापि ऋते प्रयोक्त्रा स्वाभिप्रेतार्थविवरणाद् यथार्थार्थनिश्चयस्योपायान्तराभावात् परेण कीदृशार्थतात्पर्येणायं शब्दः प्रयुक्त इति स्वीयाज्ञानस्वीकारात् कुतो मनुष्यो जिह्रेतीत्यत्र हेतुं पश्यामि। यथा चायं परप्रयुक्तशब्दार्थेषु विश्रम्भरूपो दोषो विद्वत्सु बहुलं प्रसृतो

हानिकरश्च तथा नान्यत्र कुत्रापि। बुद्धिमद्भिः पुरुषैः क्रियमाणेषु विवादेषु पुनः पुनश्चर्वणं हठश्चकारणान्तरमपेक्ष्याधिकमस्मादेव शब्दानां दुष्प्रयोगाद्भवतः। यतो यद्यपि लोकानां व्यामोहजनकेषु नानाविधेषु भूयःसु विवादेषु मतानामत्यन्तं वैविध्यमस्तीत्यत्र सर्वेषां विश्वासस्तथापि भिन्नभिन्नमतावलम्बिनो विवदन्तो विद्वांसः परस्परं तर्कोपन्याससमये विभिन्नभाषाद्वयमेव भाषन्तइत्येव प्रायःसर्वत्रोपलभ्यते। यतो यदा तेषां मध्ये कोपि पदानि परित्यज्य वस्तुमात्रविषयकं विमर्शं करोति तदा तेषां वादिनां प्रतिपाद्यस्य कदा चिद्भेदे ऽपि तेषां विचारणीयं विषयं ज्ञात्वा ते सर्वे एकमेव विषयं विचारयन्तीति कल्पयितुं युज्यते॥

२३॥ अथ भाषायाः फलानि। तत्र प्रथममस्मद्विज्ञानानां संप्रदानम्॥—भाषाया अपूर्णत्वाख्यदोषस्य दुष्प्रयोगस्य चैतावद्विमर्शस्योपसंहाराय परैः सह संभाषणे भाषाया इमानि त्रीणि मुख्यानि फलानि विमृश्यन्ते। तत्र प्रथमं फलमेकस्य मनुष्यस्य विमर्शानां विज्ञानानां वा मनुष्यान्तरं प्रति ज्ञापनम्। द्वितीयं च यावच्छक्यं शैघ्र्येण सौकर्येण चैतस्य करणम्। तृतीयं च तथाकरणेन पदार्थानां ज्ञानस्य संपादनम्। एषां त्रयाणां मध्ये एकस्यापि फलस्यासिद्धौ भाषा दुष्प्रयुक्ता वा ऽपूर्णा वा भवति॥

प्रथमं तावत् शब्दा एषां फलानां प्रथमस्य संपादनाच्च्यवन्ते। ततश्चैकस्य विज्ञानानि परात्मगोचराणि न कुर्वन्ति। तत्र प्रथमतो यदा स्वोदीरितशब्दवाच्यानि नियतानि विज्ञानानि वक्त्रा स्वात्मन्यनवधार्य शब्दा उदीर्यन्ते। द्वितीयतो यदा यस्याः कस्या अपि भाषायाः सर्वलोकव्यवहृतानि पदानि लोकप्रसिद्धार्थविलक्षणे ऽत्यन्ताप्रसिद्धे ऽर्थविशेषे प्रयुज्यन्ते। तृतीयतश्च कदा चिदेकत्रार्थे ऽन्यदा ऽपरस्मिन्नेवार्थे ऽनियमेन शब्दा यदा यदा प्रयुज्यन्ते॥

२४॥ द्वितीयस्य फलस्य शैघ्र्येण पदैः स्वाभिप्रायाविष्करणस्या संपादनम्॥—मनुष्या यदा येषां प्रसिद्धनामानि न सन्ति तादृशमिश्रवि-

ज्ञानानि पदैर्ज्ञापयितुमिच्छन्ति तदा स्वाभिप्रेतार्थं शैघ्र्येण सौकर्येण वा परान् प्रति ज्ञापयितुं न शक्नुवन्ति। कुत्र चिदयं दोषो भाषाया एव यत्र तादृशार्थविशेषप्रतिदकानि पदानि न सन्ति, कुत्र चिच्च स्वविवक्षितार्थप्रतिपादकं शब्दविशेषमजानानस्य पुरुषस्येति ॥

२५ ॥ तृतीयतो वस्तूनां ज्ञानस्य भाषणेन संपादनरूपस्य भाषाफलस्यासिद्धिः ॥—तृतीयतो विज्ञानानां यथार्थवस्त्वनुरूपत्वाभावेन मनुष्यादीरितैः पदैर्वस्तूनां ज्ञानं न भवति। यद्यप्ययमस्मद्विज्ञानगतो दोष एव यदभ्यासावधानपरीक्षाभिर्व्यवस्थापितानि विज्ञानानि वस्तुस्वभावानुसारीणि न सन्ति, तथापि शब्दानां वास्तविकसद्वस्त्वसंबद्धत्वेपि यदा वयं सद्वस्तुलिङ्गतया तान् प्रयुञ्ज्मस्तदा ऽस्माकं शब्देष्वप्ययं प्रसरति ॥

२६ ॥ मनुष्याणां शब्दाः कथं सर्वाणीमानि त्रिण्यपि फलानि न साधयन्ति ॥—प्रथमतो, यदर्थं शब्दः प्रयुज्यते तद्विविक्तं विज्ञानं स्वात्मनि अनवधार्यैव यत्किंचिद्भाषीयान् शब्दान् यः प्रयुङ्क्ते स तावत् संवादे तैः शब्दैरर्थशून्यं तात्पर्यशून्यं वा ध्वनिमेव केवलं करोति। किं च तेषां शास्त्रीयानां कठिनानां शब्दानां प्रयोगेण प्रतीयमानं तस्य विद्वत्त्वं तु अनधीतग्रन्थविषयस्य ग्रन्थनाममात्रमभ्यस्यतः पाण्डित्येन समानमेव नतु ततो ऽणुमात्रमप्यधिकम्। यतः सर्वेषाममीषां शब्दानां व्याकरणविधिप्रतिषेधाननुल्लङ्घ्य सुपरिष्कृतसमयानुसारेण तेषां परस्परानुकूल्येन च वाक्यशो व्यवस्थापने ऽपि केवलं शुष्कं ध्वनिमात्रं विहाय नेषदपि किमपि फलं सिद्ध्यति ॥

२७॥ द्वितीयतो यो नामविशेषवैधुर्येण मिश्रविज्ञानान्यवधारयति स स्वगृहे संचितानां वस्त्रादिबन्धनपरिष्काररहितानां पुस्तकाभिधानसूचकाग्रपत्रविधुराणां ग्रन्थानां केवलं ग्रन्थसंदर्भक्रमेणाव्यवस्थितपत्राणां प्रदर्शनेन परान् प्रति तान् ज्ञापयता भूतकथामात्रेण तादृशग्रन्थानधिकृत्य संवादं कुर्वता च केनापि पुस्तकक्रेत्रा तुल्यावस्थापन्न एव स्यात्। एवंविधो मनुष्यः शब्दाज्ञानेन स्वीये संवादे स्वविवक्षितानि मिश्रविज्ञानानि परान् प्रत्याविष्कर्तुं प्रयतमानो भ्राम्यति, तत एव चानेक शुद्धवि-

ज्ञानद्वारा बोधनाय बलादिव प्रवर्तितो ऽत एव च यद्विज्ञानं परेणैकेन पदेन बोधयितुं शक्यते तद्विज्ञानबोधाय पदानां विंशतिं प्रयुज्य प्रायः श्रान्तो भवति ॥

२८ ॥ तृतीयतो य एकमेव पदं तस्यैव विज्ञानस्य बोधाय न प्रयुङ्क्ते ऽपि तु तदेव पदं कदा चिदेकविधार्थे कदा चिच्चापरस्मिन्नेवार्थे प्रयुङ्क्ते स विद्वत्समाजे संवादे च स तथैव धूर्तोऽभिधीयेत, यथैव कश्चन विक्रेता ऽऽपणे बहूनि वस्तून्येकेन नाम्ना विक्रीणाति ॥

२९ ॥ चतुर्थतो यः कस्या अपि भाषायाः पदानि तद्देशीयसकललोकप्रसिद्धाद्भिन्नएवार्थे प्रयुङ्क्ते तस्य वस्तुतत्त्वज्ञत्वे स्फुरत्प्रतिभाशालित्वे ऽपि च स स्वीयानां पदानां लक्षणानि पूर्वमकृत्वा तादृशैः पदैः परान् प्रति न कथमपि बोधयितुं प्रभवति । यतस्तेषां पदानां चिरपरिचितत्वेपि तदभ्यासशीलानां सुश्राव्यत्वे ऽपि च तत्पदसहचरितप्रायिकविज्ञानात् श्रोतुरात्मनि यस्योपस्थितये तानि पदानि लोकैः प्रयुज्यन्ते तेभ्यश्च भिन्ने ऽर्थे प्रयोगेण लोकास्तादृशार्थे पदानि प्रयोक्तुर्विवक्षितार्थान् कथमपि ज्ञातुं न शक्नुवन्ति ॥

३० ॥ पञ्चमतो यश्च कदाप्यभूतद्रव्याणि मनसा परिकल्प्य यथार्थवस्तुस्वभावाननुसारीणि विज्ञानानि मनसि संगृह्य च तादृशार्थे पदानि व्यवस्थाप्य लक्षणानि च तेषां प्रदर्शयति स्वीये संवादे यद्यपि स तानि पदानि प्रयोक्तुमर्हति कदा चिच्च स्वमनःकल्पितानि विज्ञानानि परात्मस्वपि संग्राहयितुं शक्नोत्यथापि यथार्थज्ञानलेशमपि न जनयितुं प्रभवति ॥

३१ ॥ यश्च विनैवार्थावधारणं शब्दानभ्यस्यति तस्य शब्दानामर्थाभावादर्थशून्यान्ध्वनीनिव पदमात्राणि स रटति । तत्र निरर्थकता दोषः प्रथमः, पदविधुराणां मिश्रविज्ञानानामवधारयिता स्वाभिप्रायाविष्करणे ऽस्वातन्त्र्यात्तत्साधनानां पदानामभावाच्च विवशो भूत्वा तत्समानार्थकानि लघुवाक्यानि प्रयुङ्क्ते । तत्र गौरवं द्वितीयो दोषः । यश्च स्वीयानि पदानि विकलानीवानियतार्थेषु प्रयुङ्क्ते सो ऽनवहिता-

न्तःकरणो वा तदर्थज्ञानविमुखो वा स्यात् । तत्रानिश्चितार्थकता तृतीयो दोषः । यः पुनः स्वीयानि पदानि लोकप्रसिद्धाद्भिन्नविज्ञानतात्पर्येण प्रयुङ्क्ते तस्य भाषणे ऽऔचित्यभावान्निरर्थकं जल्पनमिव भाषते । तत्र वक्त्रभिप्रेतार्थानवगमश्चतुर्थः । यस्तु सद्वस्त्वननुरूपाणां कल्पितद्रव्याणां विज्ञानान्यवधारयति तस्य बुद्धौ तावद्यथार्थज्ञानसाधनस्याभावात्सो ऽवश्यं भ्राम्यतेव । तत्र यथार्थज्ञानासाधनत्वं दोषः पञ्चमः ॥

३२ ॥ कथं द्रव्येष्वमीदोषाः संभवन्ति॥— द्रव्यसंबद्धेष्वस्माकं विज्ञानेषु पूर्वोक्ताः सर्वे दोषाः संभाव्यन्ते । यस्मिन्नर्थे 'टारंतुला' इति शब्दः प्रयुज्यते तमर्थमनवधार्यैव तं शब्दं प्रयुञ्जानः साधु पदमुच्चारयन्नपि न कमप्यर्थं विवक्षतीति तत्राद्यो दोषः । अदृष्टचरे देशे ऽदृष्टपूर्वान् जीवविशेषान् महीरुहविशेषांश्च पश्यंस्तद्विज्ञानानि अश्वमृगविज्ञानानीव यथार्थान्यवधारयन्नपि पुरुषो यावत्तद्देशीयैस्तत्तदर्थे प्रयुज्यमानानि पदानि नाभ्यस्यति स्वयं वा तेषां नामान्तराणि न कल्पयति तावत्तद्विज्ञानान्यधिकृत्य केवलं विवरणमात्रेण भाषितुं शक्नोति तत्र द्वितीयो दोषो गौरवम् । कदा चिद्विस्तारमात्रबोधाय कदाचिच्च घनत्वविस्तारयोर्बोधाय द्रव्यपदं प्रयुञ्जानस्य भाषणे ऽर्थव्यभिचारो ऽनियतार्थकत्वं वा तृतीयो दोषः । यत्राश्वतरपदाभिधेयतया प्रसिद्धे विज्ञाने ऽश्वपदं प्रयुङ्क्ते तत्र वक्तृविवक्षितार्थानवगमश्चतुर्थो दोषः । यत्र वक्ता मयुरिति पदं सद्वस्तुविशेषमभिदधातीति कल्पयति तत्र शब्दान् वस्तुत्वेन व्यपदिशन् भ्राम्यतीति प्रमाजनकत्वं दोषः पञ्चमो ऽवसरं लभतइति ॥

३३ ॥ कथं भावेषु संबन्धेषु च ॥— भावेषु संबन्धेषु चैतेषां दोषाणामाद्याश्चत्वारः संभाव्यन्ते । तथा हि । (१) कृतज्ञतादयेत्यादीनि भाववाचकानि पदानि तत्तत्पदवाच्ययथार्थविज्ञानान्यनवधार्यैवावधारयितुं शक्यन्ते इति तत्र प्रथमदोषस्य प्रसरः । (२) एवं तथाविधभाववाचकानि नामान्यज्ञात्वापि तत्तद्भावविज्ञानान्यवधारयितुं शक्यन्तइति तत्र गौरवावसरः । तथा हि । सुरापानेनयावद्वैवर्ण्यं संपद्यते पातुर्जिह्वा यावदविस्पष्टाक्षरा भवति नेत्रे रक्ते भवतः पादौ च स्खलतः तावत्पानस्य

विज्ञानमवधारयितुं शक्यते ऽथापि न ज्ञायते इदमुन्मादपदेनाभिधातव्यमिति । (३) पुण्यपापयोर्विज्ञाने तन्नामनी च ज्ञात्वापि यत्र भ्रान्त्या ते पदे प्रयुज्येते । यथा । यदा परैर्लोभपदेनाभिधीयमानविज्ञानस्य बोधाय कार्पण्यमिति पदं प्रयुनज्मि तदा तुरीयः । (४) इमानि सर्वाणि पदानि अनियतार्थे प्रयोक्तुं शक्यन्ते इति तृतीयदोषस्य संभवः । एवमपि भावेषु संबन्धेषु च सद्वस्त्वननुकूलानि विज्ञानानि न कल्पयितुं शक्यन्ते । यतो भावानां स्वैरमनःकल्पनाजन्यमिश्रविज्ञानात्मकतया, संबन्धानां च केवलं वस्तुद्वयतुलनाप्रकारेणात्मकल्पितविज्ञानरूपतया चेमानि विज्ञानानि कस्यापि सद्वस्तुनो ऽननुरूपाणि भवितुं नार्हन्ति । यतस्तानि प्रकृतिसिद्धनियतवस्तुप्रतिमानतया ऽऽत्मनि न सन्ति नापि स्वरूपतः कस्यापि द्रव्यस्य आभ्यन्तरसंस्थितेर्वा संपद्यमानानामव्यभिचरितधर्माणां रूपेणाप्यात्मनि सन्ति अपि तु क्रियाणां संबन्धानां च बोधाय प्रयुक्तनामभिः सहितानि तानि सद्वस्तुत्वेन आत्मनि अवधार्यन्ते । परंतु स्वीयविज्ञानबोधाय तदर्थाबोधकशब्दप्रयोगरूप एव सार्वत्रिको भ्रमः । एवं लोकप्रसिद्धातिरिक्तेर्थे शब्दप्रयोगेण बोधो न भवति, परंतु यदा तदबोधकः शब्दस्तस्मिन्नेव विज्ञाने प्रयुज्यते तदा वक्तुरयथार्थविज्ञानवत्त्वं चिन्त्यते । केवलं यदि मिश्रभावानां संबन्धानां च विज्ञानेषु किं चिदप्यननुगुणं विज्ञानं योज्येत तर्हि काल्पनिकविज्ञानमेवावधार्येत । एवंविधानां विज्ञानां सुपरीक्षणे सति आत्मगतानि तानि तत्पदबोध्यवास्तविकवस्तुसरूपाणि कथमपि भवितुं नार्हन्ति ॥

३४ ॥ (७) औपचारिकशब्दप्रयोगोपि भाषया दुष्प्रयोगः ॥—वैदग्ध्याः कल्पनायाश्च शुष्कतत्त्वयथार्थज्ञानाभ्यामधिकमाह्लादजनकत्वाद्भाषायामौपचारिकशब्दप्रयोगसंक्षिप्तकथान्तरसंवादौ विरलमेव भाषादोषत्वेन परिगणितौ । सत्यं चैतत् संभाषणस्य यदि केवलमितिवृत्तकथनज्ञानपरिष्कारावनुपेक्ष्यानन्दजनकत्वं कर्तुमिष्यते तर्हि औपचारिकशब्दप्रयोगकथान्तरसंवादोत्थानि भूषणानि दोषत्वेन न व्यवहर्तुं शक्यन्ते । परं त्वेवमपि यदि वयं वस्तुतत्त्वान्यधिकृत्य भाषेमहि तर्ह्यवश्यमस्माभिः

स्वीकरणीयं यत् क्रमं व्यक्ततां च विहायान्या सर्वाप्यालंकारिकाणां वैदग्धी वाग्मितयोहिताः सर्वेप्यौपचारिकाः शब्दप्रयोगाः केवलमयथार्थविज्ञानान्युत्पादयन्ति मनोवृत्तीश्चालयन्ति, तत एव च तत्त्वनिर्णयांश्चान्यथयन्ति । इत्थं च पूर्णोच्छलरूपा भवन्ति । किं चात एवैमौ रसिकवाक्येषु लौकिकसंभाषणे च यद्यपि श्लाघनीयौ लोकानुमतश्च वाग्मी योजयति तथापि सर्वेषु विश्वसनीयेष्वितिवृत्तप्रतिपादकेषु च वाक्येषु वस्तुतस्तौ सर्वथा परिहरणीयौ । यत्र च तत्त्वं प्रमा चाधिकृत्य भाष्यते तत्र तौ भाषाया वक्तुर्वा महादोषतया विचिन्त्येते । कथं कौ च ताविति त्यस्य विवरणमत्रानुपयुक्तमिति तत्परित्यज्यते । संसारे प्रचरिता अलंकारग्रन्था यथार्थेतिवृत्तजिज्ञासाशून्यपुरुषैः पठनीयाः सदोषवैदग्धीनां भूषितत्वात्सर्वजनप्रियतया च मनुष्येषु तत्त्वज्ञानयोः परिष्कारपरिरक्षणे विरल एव स्त इत्येव पश्यामि । प्रसिद्धं चैतन्मनुष्येभ्यः कथं बहुशो वञ्चनं वञ्चितत्वं च रोचेते ॥ यतो भ्रमवञ्चनयोर्दृढसाधनभूतमलंकारशास्त्रं विद्यामण्डलेषुलब्धपदैर्महाध्यापकैः सुप्रसिद्धमध्याप्यते स्तूयते च भृशं सर्वदा जनैः । किं चैतस्य विरोधेन यत्किमप्येतावदवोचं तेन निःसंदेहं मम साहसमरसिकत्वं वा विचिन्तयिष्यन्ति लोकाः । वाग्मिता वैदग्धी वा सुन्दरीव स्वस्मिन्परमलावण्यमादधती न कथमपि जनापवादं सहते । किं च यत्र मनुष्या वञ्चितभावेनैव सुखमनुभवन्ति तत्रैतद्वञ्चनवैदग्ध्यादिदोषोद्भावनं निरर्थकमेवेतिसुधियोविभावयन्तु ॥

॥ इति दशमः परिच्छेदः ॥

## SARVA-DARS'ANA-SANGRAHA.

### CHAPTER XI.

### THE AKSHAPÁDA (OR NYÁYA) DARŚANA.

*(Continued from page 445).*

The principle that final bliss or the absolute abolition of pain arises from the knowledge of the truth, although established

॥ सर्वदर्शनसङ्ग्रहः ॥



तत्त्वज्ञानाद्दुःखात्यन्तोच्छेदलक्षणं निःश्रेयसं भवतीति समानतन्त्रे

as only a tenet of the Nyáya School [and not universally accepted] is expressly declared by the author of the aphorisms in the words "proof, that which is to be proved, &c.—from knowledge of the truth as to these things there is the attainment of final bliss." This is the first aphorism of the Nyáya Sástra. Now the Nyáya Śástra consists of five books; and each book contains two 'daily portions.' In the first daily portion of the first book the venerable Gotama discusses the definitions of nine categories, beginning with 'proof,' and in the second those of the remaining seven, beginning with 'discussion' (*váda*). In the first daily portion of the second book he examines 'doubt,' discusses the four kinds of 'proof,' and refutes the suggested objections to their being instruments of right knowledge; and in the second he shews that 'presumption,' &c. are really included in the four kinds of 'proof' already given, [and therefore need not be added by the Mímánsakas as separate ones]. In the first daily portion of the third book he examines the soul, the body, the senses, and their objects; in the second 'understanding' (*buddhi*) and 'mind' (*manas*). In the first daily portion of the fourth book he examines 'volition' (*pravṛítti*), the 'faults,' 'transmigration,' 'fruit,' 'pain,' and 'final liberation;' in the second he investigates the truth* as to the causes of the 'faults,' and also

* In p. 112, line 16 of the Calcutta edition I read दोषनिमित्ततत्त्व for दोषनिमित्तकत्व compare Nyáya Sút. iv. 68.

ऽपि प्रतिपादितं, तदाह सूत्रकारः प्रमाणप्रमेयेत्यादि तत्त्वज्ञानान्निःश्रेयसाधिगम इति । इदं न्यायशास्त्रस्यादिमं सूत्रं न्यायशास्त्रञ्च पञ्चाध्यायात्मकं तत्र प्रत्यध्यायस्याह्निकद्वयम् । तत्र प्रथमाध्यायस्य प्रथमाह्निके भगवता गौतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय द्वितीये वादादिसप्तपदार्थलक्षणनिरूपणं कृतम् । द्वितीयस्य प्रथमे संशयपरीक्षणं प्रमाणचतुष्टयाप्रामाण्यशङ्कानिराकरणञ्च द्वितीये अर्थापत्त्यादेरन्तर्भावनिरूपणम् । तृतीयस्य प्रथमे आत्मशरीरेन्द्रियार्थपरीक्षणं द्वितीये बुद्धिमनःपरीक्षणम् । चतुर्थस्य प्रथमे प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गपरीक्षणं

'wholes,' and 'parts.' In the first daily portion of the fifth book he discusses the various kinds of futility, (*játi*) and in the second the various kinds of 'occasion for rebuke' (*nigrahasthána* or 'unfitness to be argued with.')

In accordance with the principle that 'to know the thing to be measured you must first know the measure,' 'proof' (*pramána*) is first enunciated, and as this must be done by defining it, we have first a definition of 'proof.' 'Proof' is that which is always accompanied by right knowledge, and is at the same time not disjoined from the proper instruments [as the eye, &c.] and from the site of knowledge, [i. e. the soul]; * and this definition thus includes the peculiar tenet of the Nyáya School that God is a source of right knowledge, † as the author of the Aphorisms has expressly declared (ii. 68,) "and the fact of the Veda's being a cause of right knowledge, like spells and the medical science, follows from the fact that the fit one who gave the Veda was a source of right knowledge." And thus too hath the universally renowned teacher Udayana, who saw to the furthest shore of the ocean of logic, declared in the fourth chapter of the Kusumánjali :

* Without this last clause the definition might include the objects (*vishaya*) as these are of course connected with right knowledge.

† Íśwara is a cause of right knowledge according to the definition, because *pramáyá áśraya.*

द्वितीये दोषनिमित्ततत्त्वनिरूपणं अवयव्यादिनिरूपणञ्च । पञ्चमस्य प्रथमे जातिभेदनिरूपणं । द्वितीये निग्रहस्थानभेदनिरूपणम् । मानाधीना मेयसिद्धिरिति न्यायेन प्रमाणस्य प्रथममुद्देशे तदनुसारेण लक्षणस्य कथनीयतया प्रथमोद्दिष्टस्य प्रमाणस्य प्रथमं लक्षणं कथ्यते । साधनव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणम् एवञ्च प्रतितन्त्रसिद्धान्तसिद्धं परमेश्वरप्रामाण्यं सङ्गृहीतं भवति । तदेतदकथयत् सूत्रकारः मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति । तथाच न्यायपारावारपारदृश्वा विश्वविख्यातकीर्त्तिरुदयनाचार्यो ऽपि कुसुमाञ्जलौ चतुर्थे स्तवके ॥

"Right knowledge is accurate comprehension, and right knowing is the possession thereof; authoritativeness is, according to Gotama's school, the being separated from all absence thereof.

"He, in whose intuitive unerring perception, inseparably, united to Him and dependent on no foreign inlets, the succession of all the various existing objects is contained,—all the chaff of our suspicion being swept away by the removal of all possible faults as caused by the slightest want of observation in Him,—He, Śiva, is my authority; what have I to do with others, darkened as their authority must ever be with rising doubts?"

'Proof' is four-fold, as being divided into perception, inference, analogy, and testimony. The 'thing to be proved' or the 'object of right notion' is of twelve kinds, viz. soul, body, the senses, their objects, understanding, mind, volition, faults, transmigrations, fruit, pain, and final liberation. 'Doubt' is a knowledge whose nature is uncertainty; and this is three-fold, as being caused by the object's possessing only qualities which are common to other things also and therefore not distinctive,—or by its possessing only peculiar qualities of its own, which do not help us in determining our particular point in question,*—or by conflicting

* On this compare Siddhánta-muktávali, p. 115.

मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते इति ॥

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ ।
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ॥
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः ।
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिव इति ॥

तच्चतुर्व्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् । प्रमेयं द्वादशप्रकारम् आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदात् । अनवधारणात्मकं ज्ञानं संशयः स त्रिविधः साधारणधर्म्मासाधारणधर्म्म-

testimony.—That thing which one proposes to one's self and then proceeds to act, is 'a motive' (*prayojana*); this is two-fold, i. e. visible and invisible. An 'example' is a fact brought forward as a ground for establishing a general principle, and it may be either affirmative or negative.* A 'tenet' (*siddhánta*) is something which is accepted as being authoritatively settled as true; it is of four kinds, as being 'common to all the schools,' 'peculiar to one school,' 'a pregnant assumption' (leading, if conceded, to a further conclusion), and 'an implied dogma' (i. 26—31). The 'member' (of a demonstration) is a part of the sentence containing an inference for the sake of another; and these are five, the proposition, the reason, the example, the application and the conclusion (i. 32—38). 'Confutation' (i. 39,) is the shewing that the admission of a false minor necessitates the admission of a false major † (cf Sút. i. 39, and iv. 3); and this is of eleven kinds, as *vyágháta*, *átmáśraya*, *itaretaráśraya*, &c.

'Ascertainment' (i. 40,) is right knowledge or a perception of the real state of the case. It is of four kinds as produced by

* On these compare my note to Colebrooke's Essays, Vol. i. p. 315.

† "Our coming to the conclusion that there can be no smoke in the hill if there be no fire, while we *see* the smoke, is the confutation of there being no fire in the hill." (*Ballantyne*). Or in other words, "the mountain must have the absence-of-smoke (*vyápaka*) if it has the absence-of-fire (the false *vyápya*)."

विप्रतिपत्तिलक्षणभेदात् । यमधिकृत्य प्रवर्त्तन्ते पुरुषास्तत्प्रयोजनं तद्द्विविधं दृष्टादृष्टभेदात् । व्याप्तिसंवेदनभूमिर्दृष्टान्तः । स द्विविधः, साधर्म्यवैधर्म्य-भेदात् । प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः स चतुर्विधः सर्व्वतन्त्र-प्रतितन्त्राधिकरणाभ्युपगमभेदात् । परार्थानुमानवाक्यैकदेशोऽवयवः । स पञ्चविधः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात् । व्याप्यारोपे व्यापकारोपस्तर्कः । स चैकादशविधः, व्याघातात्माश्रयेतरेतराश्रयचक्रकाश्रयानवस्थाप्रतिबन्धिकल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात् । यथार्थानुभवपर्य्याया प्रमितिर्निर्णयः । स चतुर्विधः, साक्षात्कृत्यनुमित्युपमितिशाब्दीभेदात् । तत्त्वनिर्णयफलः कथाविशेषो वादः । उभयसाधनवती

perception, inference, analogy, or testimony. 'Discussion' (*váda*) is a particular kind of conversation, having as its end the ascertainment of truth (i. 41). 'Wrangling' (*jalpa*) is the talk of a man only wishing for victory, which is ready to employ arguments for either side of the question (i. 42). 'Cavilling' (*vitaṇḍá*) is the talk of a man who does not attempt to establish his own side of the question (i. 43). 'Dialogue' (*kathá*) is the taking of two opposite sides by two disputants. A 'fallacy' is an inconclusive reason which is supposed to prove something, and this may be of five kinds,—the 'erratic,' the 'contradictory,' the 'indifferent,' the 'unproved,' and the 'precluded' or 'mistimed,' (*Sút.* i. 44—49). 'Unfairness' (*chhala*) is the bringing forward a contrary argument by using a term wilfully in an ambiguous sense; this is of three kinds, as there may be fraud in respect of a term, the meaning, or a metaphorical phrase (i. 50—54). 'Futility' (*játi*) is a self-destructive argument (i. 58). This is of twenty-four kinds,—(as described in the fifth book of the Nyáya Aphorisms 1—38). 'Occasion for rebuke' is where the disputant loses his cause [by stupidity] and this is of twenty-two kinds, (as described in the fifth book of the Aphorisms 44—67). We do not insert here all the minute sub-divisions through fear of being two prolix,—they are fully explained in the Aphorisms.

---

विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीनः कथाविशेषो वितण्डा । कथा नाम वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः । असाधको हेतुत्वेनाभिमतो हेत्वाभासः । स पञ्चविधः, सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालभेदात् । शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुश्छलं । तत्त्रिविधम्, अभिधानतात्पर्य्योपचारव्यत्ययवृत्तिभेदात् । स्वव्याघातकमुत्तरं जातिः । सा चतुर्विंशतिविधा, साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्तिविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमभेदात् । पराजयनिमित्तं निग्रहस्थानं तद्द्वाविंशतिप्रकारं प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासन्न्यासहे-

But here an objector may say, 'if these sixteen topics proof, &c., are all thus fully discussed, how is it that it has got the name of the Nyáya Śástra, as reasoning [i. e. *Nyáya* or logic properly] forms only a small part of the topics which it treats of?" We allow the force of the objection, still as names are proverbially said to be given for some special reason, we maintain that the name Nyáya was rightly applied to Gotama's system, since 'reasoning,' or inference for the sake of another, is justly held to be a predominant feature, from its usefulness in all kinds of knowledge and from its being a necessary means for every kind of pursuit. So it has been said by Sarvajna 'this is the pre-eminent science of Nyáya from its establishing our doctrines against opponents and from its producing action'; * and by Pakshila Swámin, 'This is the science of reasoning (*ánvikshikí*) divided into the different categories, 'proof,' &c.;—the lamp of all sciences, the means for aiding all actions, the ultimate appeal of all religious duties, well proved in the declarations of science'.†

But here an objector may say,—"When you declare that final liberation arises from the knowledge of the truth, do you

* Action *(pravṛitti)* follows after the ascertainment of the truth by *Nyáya*.

† Cp. Vátsyáyana's Comment. p. 6. The Calcutta edition reads *prakírtitá* or *paríkshitá*.

त्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्तानननुभाषणाज्ञानाप्रतिभाविक्षेपमतानुज्ञापर्य्यनुयोज्योपेक्षणनिरनुयोज्यानुयोगापसिद्धान्तहेत्वाभासभेदात् । अत्र सर्व्वान्तर्गणिकस्तु विशेषस्तत्रशास्त्रे विस्पष्टो ऽपि विस्तरभिया न प्रस्तूयते ।

ननु प्रमाणादिपदार्थषोडशके प्रतिपाद्यमाने कथमिदं न्यायशास्त्रमिति व्यपदिश्यते सत्यं तथाप्यसाधारण्येन व्यपदेशा भवन्तीति न्यायेन न्यायस्य परार्थानुमानापरपर्य्यायस्य सकलविद्यानुग्राहकतया सर्व्वकर्म्मानुष्ठानसाधनतया प्रधानत्वेन तथा व्यपदेशो युज्यते । तथाभाणि सर्व्वज्ञेन सो ऽपरमो न्यायः विप्रतिपन्नपुरुषप्रतिपादकत्वात् तथा प्रवृत्तिहे

mean that liberation ensues immediately upon this knowledge being attained?" We reply 'no,' for it is said in the second Nyáya Aphorism, 'pain,' birth, activity, faults, false notions,—on the successive annihilation of these in turn, there is the annihilation of the one next before it,"—by means of this knowledge of the truth. Now false notions are the thinking the body, &c., which are not the soul to be the soul; 'faults' are a desire for those things which seem agreeable to the soul and a dislike to those things which seem disagreeable to it,* though in reality nothing is either agreeable or disagreeable to the soul. And through the mutual reaction of these different 'faults,' the stupid man desires, and the desiring man is stupid, the stupid man is angry, the angry man is stupid,—and the man, impelled by these faults, does those things which are forbidden,—thus by the body he does injury, theft, &c.—by the voice falsehood, &c.,—by the mind malevolence, &c., and this same sinful 'activity' produces demerit. Or, again, he may do laudable actions by his body, as alms, saving others, &c.,—truthful speaking and upright counsel by his voice,—and guilelessness, &c., by his mind; and this same right activity produces merit. But both are two kinds of activity; and each

* The printed text omits the third fault, "a stupid indifference, *moha*," which is however referred to presently.

तुत्वाच्चेति । पक्षिलस्वामिना च सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना ।

प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम् ।
आश्रयः सर्व्वधर्म्माणां विद्योद्देशे परीक्षितेति ॥

ननु तत्त्वज्ञानान्निःश्रेयसम्भवतीत्युक्तं तत्र किं तत्त्वज्ञानादनन्तरमेव निःश्रेयसं सम्पद्यते नेत्युच्यते किन्तु तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभाव इति । तत्र मिथ्याज्ञानं नामानात्मनि देहादावात्मबुद्धिः तदनुकूलेषु रागः तत्प्रतिकूलेषु द्वेषः वस्तुतस्त्वात्मनः प्रतिकूलमनुकूलं वा न किञ्चित् समस्ति, परस्परानुब-

leads to a similar laudable or blameable birth or bodily manifestation; and while this birth lasts, there arises the impression of 'pain,' which we are conscious of as of something that jars against us. Now this series beginning with 'false notions' and ending with 'pain' is continually going on and is what we mean by the words 'mundane existence' which rolls on ceaselessly like a potter's wheel. And whenever some pre-eminent man, by the force of his previous good deeds, obtains through the teaching of a great teacher, the knowledge that all this present life is only a scene of pain and bound up with pain,—he recognises that it is all to be avoided, and desires to abolish the ignorance &c., which are the causes that produced it.* Then he learns that the one means to abolish it is the knowledge of the truth; and as he meditates on the objects of right knowledge divided into the four sciences,† there arises in his mind the knowledge of the truth, or, in other words, a right view of things

* In p. 116 l. 3. I would read *tannirvartakam* for *tannivartakam*.

† This refers to the couplet so often quoted in Hindu authors, "Logic,—the three vedas,—trade and agriculture,—and the eternal doctrine of polity,—these four sciences are the causes of the stability of the world," (Cf. Manu, vii. 43). It occurs in Kámandaki's *Nítisára,* ii. 2. and seems to be referred to in Vátsyáyana's Comm. p. 3. from which Mádhava is here borrowing.

न्यत्वाच्च रागादीनां मूढो रज्यति रक्तो मुह्यति मूढः कुप्यति कुपितो मुह्यतीति ततस्तैर्दोषैः प्रेरितः प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेयादीन्याचरति वाचा अनृतादीनि मनसा परद्रोहादीनि सेयं पापरूपा प्रवृत्तिरधर्म्ममावहतीति । शरीरेण प्रशस्तानि दानपरपरित्राणादीनि वाचा हितसत्यादीनि मनसा अहिंसादीनि सेयं पुण्यरूपा प्रवृत्तिर्धर्म्मः । सेयमुभयीवृत्तिः ततः स्वानुरूपं प्रशस्तं निन्दितं वा जन्म पुनः शरीरादेः प्रादुर्भावः तस्मिन् सति प्रतिकूलवेदनीयतया बाधनात्मकं दुःखं भवति, त इमे मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन प्रवर्त्तमानाः संसारशब्दार्थो घटीचक्रवदविरवधिरनुवर्त्तते । यदा कश्चित् पुरुषधौरेयः पुराकृतसुकृतपरिपाकवशादाचार्य्योपदेशेन सर्व्वमिदं दुःखायतनं दुःखानुषक्तञ्च पश्यति

as they are; and from this knowledge of the truth false notions disappear. When false notions disappear, the 'faults' pass away; with them ceases 'activity;' and with it ceases 'birth;' and with the cessation of 'birth' comes the entire abolition of 'pain,' and this absolute abolition is final bliss. Its absoluteness consists in this, that nothing similar to that which is thus abolished can ever revive, as is expressly said in the second Aphorism of the Nyáya Sútras;—"pain, birth, activity, faults, false notions,—since, on the successive annihilation of these in turn, there is the annihilation of the one next before it, there is [on the annihilation of the last of them] final beatitude."

"But is not your difinition of the summum bonum, Liberation i. e. "the absolute abolition of pain,"—after all as much beyond our reach as treacle on the elbow is to the tongue; why then is this continually put forth as if it were established beyond all dispute?" We reply that as all those who maintain Liberation in any form do include therein the absolute abolition of pain, our definition, as being thus a tenet accepted in all the schools, may well be called the royal highway* of philosophy. No one in fact maintains that pain is possible without the individual's activity.

* Literally the 'bell-road,' i. e. "the chief road through a village, or that by which elephants, &c., decorated with tinkling ornaments, proceed," Wilson's Dict.

तदा तत्सर्व्वं हेयत्वेन बुध्यते ततस्तन्निवर्त्तकमविद्यादि निवर्त्तयितुमिच्छति तन्निवृत्त्युपायश्च तत्त्वज्ञानमिति कस्यचिच्चतसृभिर्विद्याभिर्विभक्तं प्रमेयं भावयतः सम्यग्दर्शनपदवेदनीयतया तत्त्वज्ञानं जायते, तत्त्वज्ञानान्मिथ्याज्ञानमपैति, मिथ्याज्ञानापाये दोषा अपयान्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमत्यन्तं निवर्त्तते सात्यन्तिकी निवृत्तिरपवर्गः । निवृत्तेरात्यन्तिकत्वे नाम निवर्त्त्यसजातीयस्य पुनस्तत्रानुत्पाद इति । तथाच पारमर्षं सूत्रं, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायेतदनन्तराभावादपवर्ग इति ।

ननु दुःखात्यन्तोच्छेदो ऽपवर्ग इत्येतदद्यापि कफोणिगुडायितं वर्त्तते तत् कथं सिद्धवत्कृत्य व्यवह्रियत इति चेन्मैवं सर्वेषां मोक्षवादि-

Thus even the Mádhyamika's opinion that 'Liberation consists in the abolition of soul,' does not controvert one point, so far at any rate as that it is the abolition of pain. But if you proceed to argue that the soul, as being the cause of pain, is to be abolished just like the body, &c.—we reply that this does not hold, since it fails under either alternation. For do you mean by 'the soul' *a.* the continued succession of cognitions, or *b.* something different therefrom? *a.* If the former, we make no objection [since we Naiyáyikas allow that cognition is evanescent,* and we do desire to abolish cognition as a cause of *pravṛitti* or action,†] and who would oppose a view which makes for his own side? *b.* But if the latter then since it must be eternal‡ its abolition is impossible; and again, a second objection would be that no one would try to gain your supposed 'summum bonum.' For surely no sensible person would strive to annihilate the soul which is always the dearest of all, (on the principle that 'everything else is dear for the soul's pleasure;') and, again, every body uses such as a phrase as 'liberated,' [and this very term refutes the idea of annihilation or abolition.]

* The cognition is produced in the first moment, remain during the second, and classes in the third.

† See Náya Sút. 1. 2.

‡ As otherwise why should we require Liberation at all? or the author may assume that other Naiyáyiks have sufficiently established this point against its opponents.

नामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्तीत्यस्यार्थस्य सर्वतन्त्रसिद्धान्तसिद्धतया घण्टापथत्वात् नह्यप्रवृत्तस्य दुःखं प्रत्यापद्यते इति कश्चित् प्रपद्यते तथाहि आत्मोच्छेदो मोक्ष इति माध्यमिकमते दुःखोच्छेदोऽस्तीत्येतावत्तावदविवादम् । अथ मन्येथाः शरीरादिवदात्मापि दुःखहेतुत्वादुच्छेद्य इति तन्न सङ्गच्छते विकल्पानुपपत्तेः किमात्मा ज्ञानसन्तानो विवक्षितः तदतिरिक्तो वा । प्रथमे न विप्रतिपत्तिः कः खल्वनुकूलमाचरति प्रतिकूलमाचरेत् । द्वितीये तस्य नित्यस्य निवृत्तिरशक्यविधानैव प्रवृत्त्यनुपपत्तिश्चाधिकं दूषणं न खलु कश्चित् प्रेक्षावानात्मनस्तु कामाय सर्व्वं प्रियं भवतीति सर्व्वतः प्रियतमस्यात्मनः समुच्छेदाय प्रय-

"But why not say with those Bauddhas who hold the doctrine of pure intelligence, [i. e. the Yogácháras and the Sautrántikas,*] that 'the summum bonum is the rising of pure intelligence consequent on the cessation of the conscious subject?" To this view we object that there is an absence of means; and, also, it cannot be established that the locus [or subject,] of the two states is the same. For the former,—if it is replied that the well-known fourfold set of Bauddha contemplations † are to be accepted as the cause, we answer that, as, (according to the Bauddha tenet of the momentary existence of all things,) there cannot be one abiding subject of these contemplations, they will necessarily exercise a languid power like studies pursued at irregular intervals, and be thus ineffectual to produce any distinct recognition of the real nature of things.

And for the latter,—since the continued series of cognitions when accompanied by the natural obstacles ‡ is said to be 'bound, and when freed from those obstacles is said to be 'liberated,' you cannot establish an identity of subject in the two states so as to be able to say that the very same being which *was* bound *is* now liberated.

Nor do we find the path of the Jainas,—viz. that 'Liberation is the releasing from all 'obstructions,'—a path entirely free from

* See S. D. Sangraha, pp. 17, 22.

† All is momentary,—all is pain,—all is sui generis,—all is unreal.

‡ In the form of the various *kleśas* or 'afflictions.'

ततो सर्व्वोहि प्राणी मुक्त इति व्यवहरति । ननु धर्म्मिनिवृत्तौ निर्म्मलज्ञानोदयो महोदय इति विज्ञानवादिवादे सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरैकाधारासम्भवात् लङ्घनाभ्यासादिवदनासादितप्रकर्षं न स्फुटमभिज्ञानमभिजनयितुं प्रभवति सोपप्लवस्य ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स एव मुक्त इति सामानाधिकरण्यं न सङ्गच्छते । आवरणमुक्तिर्मुक्तिरिति जैनजनाभिमतोऽपि मार्गो न निर्गतो निरर्गलः बद्ध

bars to impede the wayfarer. Pray, will our Jaina friend kindly inform us what he means by 'obstruction?' If he answers "merit, demerit, and error," we readily grant what he says. But if he maintains that "the body is the true obstruction and hence Liberation is the continual upspringing of the soul consequent on the body's annihilation, as of a parrot released from its cage,"—then we must enquire whether this said soul possesses form or not. If it possesses form, then has it parts or not? If it has no parts, then since the well-known definition of an atom will apply here as 'that which has form without parts,' it will follow that the attributes of the soul are, like those of an atom, imperceptible to the senses.* If you say that it has parts, then the general maxim that 'all which has parts is non-eternal' would necessitate that the soul is non-eternal, and if this were conceded, then two grand difficulties [against the Providential course of the world,] would burst in unopposed, viz. that what the soul had done would, at its cessation, perish with it [and thus fail of producing the proper fruit,] while it would have reaped during life the effects of what it had not done, [as the good and evil which happened to it would not be the consequeces of its actions in a former birth.] If, on the other hand, the Jaina maintains that the soul does not possess form at all, then how can he talk of the soul's 'upspringing,'

* But the Nyáya holds that the attributes of the soul, as happiness, desire aversion, &c., are perceived by the internal sense, mind, (Bháshá P. § 83.)

भवान् पृष्टो व्याचष्टां किमावरणं? धर्म्माधर्म्मभ्रान्तय इति चेत् इष्टमेव। अथ देहमेवावरणं तथाच तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवात्मनः सततोर्द्धगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्त्तोऽमूर्त्तो वा। प्रथमे निरवयवः सावयवो वा निरवयवत्वे निरवयवो मूर्त्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्म्मवदात्मधर्म्माणामतीन्द्रियत्वं प्रसज्येत। सावयवत्वे यत्सावयवं तदनित्यमिति प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसरेताम्। अमूर्त्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियायाः मूर्त्तप्रतिबन्धात् पारतन्त्र्यं बन्धः

since all such actions as motion necessarily involve an agent possessing form?*

Again, if we take the Chárváka's view that "the only bondage is dependence on another, and therefore independence is the true liberation,"—if by 'independence' he means the cessation of pain, we have no need to controvert it. But if he means autocratic power, then no sensible man can concede it, as the very idea of earthly power involves the idea of a capability of being increased and of being equalled. †

Again, the Sánkhya opinion, which first lays down that nature and soul are utterly distinct, and then holds that "Liberation is the soul's remaining as it is in itself after nature [on being known] has withdrawn,"—even this opinion accepts our tenet of the abolition of pain; but there is left a difficulty as to whether this cognition of the distinction between nature and soul resides in the soul or in nature. It is not consistent to say that it resides in the soul, since the soul is held to be unchangeable and this would seem to involve that previously it had been hampered by ignorance, nor can we say that it resides in nature, since nature is always held to be unintelligent. Moreover, is nature spontaneously active or inactive? If the former, then it follows that there can be no Liberation at all, since the spontaneous actions of things cannot be set aside; and if the latter, the course of mundane existence would at once cease to go on.

* The reading मूर्तप्रतिबन्धात् is difficult, but I believe that *pratibandha* means here *vyápti*, as it does in Sánkhya Sútras, i. 100.

† The true summum bonum must be *niratiśaya*,—incapable of being added to.

स्वातन्त्र्यं मोक्ष इति चार्व्वाकपक्षेऽपि स्वातन्त्र्य दुःखनिवृत्तिश्चेदविवाद
ऐश्वर्य्यं चेत्सातिशयतया सदृशतया च प्रेक्षावतां नाभिमतम् प्रकृतिपुरु-
षान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति साङ्ख्या-
ख्यातेऽपि पक्षे दुःखोच्छेदेऽभ्युपेयते विवेकज्ञानं पुरुषाश्रयं प्रकृत्याश्रयं वेति
एतावदवशिष्यते तत्र पुरुषाश्रयमिति न श्लिष्यते पुरुषस्य कौटस्थ्यात्

Again, we have the same recognition of our 'abolition of pain' in the doctrine of Bhaṭṭa Sarvajna and his followers, that "Liberation is the manifestation of an eternal happiness incapable of being increased;" but here we have the difficulty that an eternal happiness does not come within the sphere of definite proof. If you allege Śruti as the proof, we reply that Śruti has no place when the thing itself is precluded by a valid non-perception,* or if you allow its authority then, you will have to concede the existence of such things as floatings stones.†

"But if you give up the view that "Liberation is the manifestation of happiness," and then accept such a view as that which holds it to be only the cessation of pain,—does not your conduct resemble that of the dyspeptic patient who refused sweet milk and preferred sour rice-gruel?" Your satire however falls powerless, as fitter for some speech in a play (rather than for a grave philosophical argument.] The truth is that all happiness must be included under the category of pain, since, like honey mixed with poison, it is always accompanied by pain, either as admitting of

* *Yog yánupalabdhi* is when an object is not seen and yet all the usual concurrent causes of vision are present, as the eye light, &c.

† Alluding to the Vedaic phrase '*grávánah plavanti,*' See Uttara Naishadha, xvii. 37. The phrase *aśmánah plavanti* occurs in Shaḍv. Br. 5, 12.

स्थाननिरोधापातावापि प्रकृत्याश्रयः अचेतनत्वात् तस्याः । किञ्च प्रकृतिः प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा आद्ये अनिर्मोक्षः स्वभावस्यानपायात् द्वितीये सम्प्रति संसारोऽस्तमियात् । नित्यनिरतिशयसुखाभियुक्तिर्मुक्तिरिति भट्टसर्व्वज्ञाद्यभिमते ऽपि दुःखनिवृत्तिरभिमतैव परन्तु नित्यसुखं न प्रमाणपद्धतिमध्यास्ते । श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यनुपलब्धिबाधिते तदनवकाशादवकाशे वा ग्रावप्लवे ऽपि तथा भावप्रसङ्गात् ॥

ननु सुखाभियुक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः क्षीरं विहायारोचकग्रस्तस्य सौवीररुचिमनुभवतीति चेत्तदेतच्चाटकपक्षपतितं त्वद्वच इत्युपेक्ष्यते । सुखस्य सातिशयतया प्रत्यक्षतया

increase* or as being an object of perception or as being exposed to many hostile influences, or as being under an irksome sense of obligation to all kinds of instruments for its production. Nor may you retort on us that we have fulfilled the proverb of 'seeking one thing and dropping another in the search,' since we have abolished happiness as being ever tainted by some incidental pain, and at the same time our own favourite alternation is one which no one can consider desirable. For the truth is that any attempt to establish happiness as the summum bonum,—since it is inevitably accompanied by all kinds of causes of pain,—is only like the man who would try to grasp a red hot ball of iron under the delusion that it was gold. In the case of objects of enjoyment got together by rightful means, we may find many firefly-like pleasures, but then how many are the rainy days to drown them; and in the case of those got together by wrong means, the mind cannot even conceive the future issue which will be brought about. Let our intelligent readers consider all this and not attempt to disguise their own conscious experience. Therefore it is that we hold it as indisputable that for him, pre-eminent among his fellows, who, through the favour of the Supreme Being, has, by the regular method of listening to the revealed Śruti, &c., attained unto the knowledge of the real nature of the soul,—for him the absolute abolition of pain is the true Liberation.

* Or perhaps 'capable of being surpassed.'

बहुप्रार्थनीकाक्रान्ततया साधनप्रार्थनापरिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवत् दुःखपक्षनिक्षेपात् । नन्वेकमनुसन्धित्सतो ऽपरं प्रच्यवते इति न्यायेन दुःखवत् सुखमित्युच्छिद्यत इति अकान्यो ऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसम्पादने दुःखसाधनबाहुल्यं नुषङ्गनियमेन तप्तायःपिण्डे तपनीयबुद्ध्या प्रवर्त्तमानेन साम्यापातात् तथाहि न्यायोपार्ज्जितेषु विषयेषु कियन्तः सुखखद्योताः कियन्ति दुःखदुर्दिनानि अन्यायोपार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुं न शक्यमित्येतत् स्वानुभवमपच्छादयन्तः सन्तो विदांकुर्वन्तु विदांवरा भवन्तः । तस्मात् परिशे-

But it may be objected, "is there any proof at all for the existence of a Supreme Being, i. e. perception, inference or Śruti? certainly perception cannot apply here, since the Deity, as devoid of form, &c., must be beyond the senses. Nor can inference hold, since there is no universal proposition or true middle term which can apply.* Nor can Śruti, since neither of the resulting alternatives can be sustained,—for is it supposed to reveal, as being itself eternal or non-eternal? Under the former view, an established tenet of our school would be contradicted, [viz. that the Veda is non-eternal;] under the second, we should be only arguing in a circle.† As for comparison and any other proof which might be adduced [as that sometimes called presumption, &c.,] they need not be thought of for a moment, as their object matter definitely limited and cannot apply to the present case.‡ Therefore Supreme Being seems to be as unreal as a hare's horn." But all this elaborate disputation need excite no flurry in the breast of the the intelligent, as it can be at once met by the old argument, "the mountains, seas, &c., must have had a maker from their possessing the nature of effects just as a jar." *a*. Nor can our middle term [possessing the nature of effects'] be rejected as unproved,—

* Since the Supreme Being is a single instance.

† Since the Veda, if non-eternal, must [to be authoritative] have been created by God, and yet it is brought forward to reveal the existence of God.

‡ the Nyáya holds presumption to be included under inference, and comparison is declared to ascertain the relation of a name to the thing named.

षात् परमेश्वरानुग्रहवशाच्छ्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारवतः पुरुष-
धौरेयस्य दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति निरवद्यम् ।

नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा । न तावदत्र प्रत्यक्षं क्रमते रूपादिरहितत्वेनातीन्द्रियत्वात् नाप्यनुमानं तद्व्याप्तिलिङ्गाभावात् नागमः विकल्पासहत्वात् किं नित्यो ऽवगमयत्यनित्यो वा । आद्ये अपसिद्धान्तापातः द्वितीये परस्पराश्रयापातः । उपमानादिकमशक्यशङ्कं नियतविषयत्वात् । तस्मादीश्वरः शशविषाणायते इति चेत्तदेतच्च चतुरचेतसां चेतसि चमत्कारमाविष्करोति । विवादास्पदं नगसाग-

since it can be established beyond a doubt by the fact of the subject's possessing parts. "But what are we to understand by this 'possessing parts?' is it 'existing in contact with parts,' or 'in intimate relation with parts?' It cannot be the first, since this would equally apply to such eternal things as ether* &c.; nor can it be the second, since this would prove too much as applying to such cases as the [eternal] species, thread, which abides in intinate relation with the individual threads. It therefore fails as a middle term for your argument." We reply, that it holds, if we explain the 'possessing parts' as 'the belonging to the class of those substances which exist in intimate relation†'

Or we may adopt another view and maintain, that it is easy to infer the 'possessing the nature of effects' from the consideration of their possessing intermediate magnitude.‡ *b.* Nor can our middle term be rejected as 'contradictory' *(viruddha,§)* since there is no such acknowledged universal proposition connected with it as would establish opposite major term to that in our syllogism, [i. e, that they must have had no maker.] *c.* Nor is our middle term too general *(anaikánta)*, since it is never found in opposite instances such as the lake, which is the *vipaksha*

* Since ether is connected by contact with the parts of everything, as e. g. a jar.

† The whole (as the jar,) resides by intimate relation in its parts (as the jar's two halves;)—But the eternal substances, ether, time, the soul, mind, and the atoms of earth, water, fire and air, do not so reside in anything,—although of course the category *viśesha* does reside in them by intimate relation.

‡ Intermediate between infinite and infinitesimal,—all eternal substances being the one or the other.

§ The *viruddha-hetu* is that which is never found where the major term is.

रादिकं सकर्तृकं कार्य्यत्वात् कुम्भवत् । न चायमसिद्धो हेतुः सावयवत्वेन तस्य सुसाधनत्वात् । ननु किमिद सावयवत्वं अवयवसंयोगित्वं अवयवसमवायित्व वा नाद्यः गगनादेः व्यभिचारात् न द्वितीय· तन्तुत्वादावनैकान्त्यात् । तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्व सावयवत्वमिति निरुक्तेर्वक्तुं शक्यत्वात् । अवान्तरमहत्त्वेन वा कार्य्यत्वा-

in the argument, "the mountain has fire because it has smoke."] *d.* Nor again is it precluded, *(bádhita,)* for there is no superior evidence to exercise such a precluding power. *e.* Nor is it counter-balanced, *(sat-pratipakska,)* for there does not appear to be any such equally valid antagonist E. B. C.

---

नुमानस्य सुकरत्वात् । नापि विरुद्धो हेतुः साध्यविपर्य्ययव्याप्तेरभावात् नाप्यनैकान्तिकः पक्षादन्यत्र वृत्तेरदर्शनात् नापि कालात्ययोपदिष्टः बाधकानुपलम्भात् नापि सत्प्रतिपक्षः प्रतिभटादर्शनात् ॥

---

## GAṆARATNÁVALÍ, BY BHAṬṬA YAJNEŚVARA.

An exceedingly useful work on the Gaṇapáṭha by Bhaṭṭa Yajneśvara who is well-known as the author of the excellent "Áryavidyásudhánidhi." The text of the Gaṇaratnávalí contains all the words of the Gaṇapáṭha thrown into a metrical form; an arrangement which exactly meets the wants of the Indian student who wishes to commit the whole Gaṇapáṭha to memory, and which at the same time affords an efficient protection against words being either interpolated or omitted. The commentary explains the more difficult words and gives throughout the forms which result from the application of the respective grammatic rules to the single words of the Gaṇa. In many places there are added short practical explanations showing the reasons for which a word has been received into a certain Gaṇa and recalling to the reader's mind the changes which the word has to undergo in consequence of other rules not immediately connected with the Gaṇa in question. The author's great learning and the conscientiousness with which he has done his work are conspicuous throughout. He has used the Gaṇaratuamahodadhi as his chief authority. Considering the difficulty with which the latter work is procurable and the absence of other books explanatory of the Gaṇas, a treatise like the Gaṇaratnávalí must be said to meet a real want of all students desirous of completely mastering Sanscrit Grammar.

G. THIBAUT.

## ण्रेरध्ययने वृत्तम् ॥ २६ ॥

ण्यन्तस्य वृत्तेर्निष्ठायामध्ययनार्थे वृत्तमितीडभावो णिलुक्च निपात्यते । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन । अध्ययनइति किम् । वर्त्तितमन्यत् । वृतिरयमकर्म्मकः, स ण्यर्थे वर्त्तमानः सकर्म्मको भवति । तेन निर्वृत्तइति हि प्रकृतेरेव कर्म्मणि क्तप्रत्ययो दृश्यते । तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेर्वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकं, तत्क्रियते यदापि णिचैव ण्यर्थोऽभिधीयते तदा वर्त्तितमित्यध्ययने मा भूदिति के चित् । अपरे तु वर्त्तितो गुणो देवदत्तेनेत्यपीच्छन्ति ॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥

णेरित्यनुवर्त्तते । दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते * । दान्तः । दमितः । शान्तः । शमितः । पूर्णः । पूरितः । दस्तः । दासितः । स्पष्टः । स्पाशितः । छन्नः । छादितः । ज्ञप्तः । ज्ञपितः । इट्प्रतिषेधो णिलुक्च निपात्यते । ज्ञपेस्तु भरज्ञपिसनामिति विकल्पविधानाद् यस्य विभाषेति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ॥

## रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥

वेति वर्त्तते । रुषि अम त्वर संघुष आस्वन इत्येतेषां निष्ठायां वा इडागमो न भवति । रुष्टः । रुषितः । तीषसहलुभरुषरिष इति विकल्पविधानाद् यस्य विभाषेति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् । अम् ।

* दान्त शान्त पूर्ण दस्त स्पष्ट छन्न ज्ञप्त इत्येतानि निपात्यन्ते । दम्यादीनां धातूनां णयन्तानां निष्ठायां वा इडागमो निपात्यते इत्येकस्मिन्पुस्तके पाठः ।

अभ्यान्तः । अभ्यमितः । त्वर । तूर्णः । त्वरितः । आदितश्चेति प्रतिषेधे प्राप्ते वचनम् । संघुष । संघुष्टौ पादौ । संघुषितौ पादौ । संघुष्टं वाक्यमाह । संघुषितं वाक्यमाह । सघुष्टौ दम्यौ । संघुषितौ दम्यौ । संपूर्वस्य घुषेरविशब्दनेपि परत्वादयमेव विकल्पो भवति । आस्वन् । आस्वान्तो देवदत्तः । आस्वनितो देवदत्तः । आस्वान्तं मनः । आस्वनितं मनः । आङ्पूर्वस्य स्वनेर्मनोभिधाने ऽपि परत्वादयं विकल्पः क्षुब्धस्वान्तेति निपातनं बाधते ॥

## हृषेर्लोमसु ॥ २९ ॥

लोमसु वर्त्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति । हृष्टानि लोमानि । हृषितानि लोमानि । हृष्टं लोमभिः । हृषितं लोमभिः । हृष्टाः केशाः । हृषिताः केशाः । हृष्टं केशैः । हृषितं केशैः । हृषु अलीकइत्युदित्त्वान्निष्ठायामनिट् । हृष तुष्टावित्ययं सेट् । तयोरुभयोरिह ग्रहणमित्युभयत्र विभाषेयम् । लोमानि मूर्द्धजानि अङ्गजानि च सामान्येन गृह्यन्ते । यथा लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यमिति । तद्विषये च हर्षे वर्त्तमानो लोमसु वर्त्तत इत्युच्यते । लोमस्विति किम् । हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ॥ विस्मितप्रतिघातयोश्चेति वक्तव्यम् ॥ * ॥ हृष्टो देवदत्तः । हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः । हृषिता दन्ताः । प्रतिहता इत्यर्थः ॥

## अपचितश्च ॥ ३० ॥

अपचित इति वा निपात्यते । अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते । अपचितोनेन गुरुः । अपचायितोनेन गुरुः ॥ क्तिनि नित्यमिति वक्तव्यम् ॥ * ॥ क्तिनि नित्यं चिभावो निपात्यते, अपचितिः ॥

## ह्रु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेर्धातोर्निष्ठायां छन्दसि ह्रु इत्ययमादेशो भवति । ह्रुतस्य चाह्रुतस्य च । अह्रुतमसि हविर्धानम् । छन्दसीति किम् । ह्वृतम् ॥

अपरिह्वृताश्च ॥ ३२ ॥

अपरिह्वृता इति निपात्यते छन्दसि विषये। ह्वृ इत्येतस्यादेशस्याभावो निपात्यते। अपरिह्वृताः सनुयाम वाजम् ॥

सोमे ह्वरितः ॥ ३३ ॥

ह्वरित इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति। मा नः सोमो ह्वरितो, विह्वरितस्त्वम् ॥

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ३४ ॥

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति क्षमिति वमित्यमिति इत्येतानि छन्दसि निपात्यन्ते। तत्र ग्रसितस्कभितस्तभितोत्तभितेति ग्रसु स्कम्भु स्तम्भु इत्येतेषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते। ग्रसितं वा एतत्सोमस्य। ग्रस्तमिति भाषायाम्। स्कभित। विष्कभिते अजरे। विष्कब्धेति भाषायाम्। स्तभित। येन स्वस्तभितम्। स्तब्धमिति भाषायाम्। उत्तभित। सत्येनोत्तभिता भूमिः। उत्तब्धेति भाषायाम्। उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति। चत्त विकस्तेति। चतेः कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते। चत्ता वर्षेण विद्युत्। चतितेति भाषायाम्। विकस्त। उत्तानाया हृदयं यद् विकस्तम्। विकसितमिति भाषायाम्। निपातनं बहुत्वापेक्षं विकस्ता इति बहुवचनं कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः। विशस्तृ शंस्तृ शास्त्विति शसेर्विपूर्वस्य शंसेः शासेश्च तृचि इडभावो निपात्यते। विशस्तृ। एकस्त्वष्टुरश्वस्या विशस्ता। विशसितेति भाषायाम्। शंस्तृ। उत शंस्ता सुविप्रः। शंसितेति भाषायाम्। शास्तृ। प्रशास्ता। प्रशासितमिति भाषायाम्। तरुतृतरूतृवरुतृवरूतृवरू-

त्रीरिति तरतेर्वृङ्वृञोश्च तृचि उट् ऊट् इत्येतावागमौ निपात्येते। तरुतारं रथानाम्। तरुतारम्। तरितारं तरीतारमिति भाषायाम्। वरूतारं रथानाम्। वरूतारं रथानाम्। वरितारं वरीतारमिति भाषायाम्। वरूत्रीष्ट्वा देवीर्विश्वदेव्यावती। जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम्। अतन्त्रं चैतत्, इदमपि हि भवति अहोरात्राणि वै वरूत्रय इति। छान्दसिकमत्र ह्रस्वत्वम्। प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्। वरूतृशब्दो हि निपातितस्तत एव ङीपि सति सिद्धो वरूत्रीशब्दः। उज्ज्वलिति क्षरिति क्षमिति वमित्यमितीति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम अम् इत्येतेषां च तिपि शप इकारादेशो निपात्यते। शपो लुग्वा इडागमः। अग्निरुज्ज्वलिति। उज्ज्वलतीति भाषायाम्। क्षरिति। स्तोकं क्षरिति। क्षरतीति भाषायाम्। क्षमिति। स्तोमं क्षमिति। क्षमतीति भाषायाम्। वमिति। यः सोमं वमिति। वमतीति भाषायाम्। अमिति। अभ्यमिति वरुणः। अभ्यमतीति भाषायाम्। इतिकरणः प्रदर्शनार्थस्तेन क्व चिदीकारो भवति। रविमभ्यमीति वरुण इत्यपि हि वेदे पठ्यते॥

## आर्द्धधातुकस्येड्वलादेः॥ ३५॥

छन्दसीति निवृत्तम्। आर्द्धधातुकस्य वलादेरिडागमो भवति। लविता। लवितुम्। लवितव्यम्। पविता। पवितुम्। पवितव्यम्। आर्द्धधातुकस्येति किम्। आस्ते। वस्ते। रुदादिभ्यः सार्वधातुकइत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवतीति आर्द्धधातुकग्रहणं क्रियते। वलादेरिति किम्। लव्यम्। पव्यम्। लवनीयम्। पवनीयम् इडिति वर्त्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्॥

## स्नुक्रमोरनात्मनेपदनिमित्ते॥ ३६॥

नियमार्थमिदम्। स्नुक्रमोरार्द्धधातुकस्य वलादेरिडागमो भवति, न चेत्स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः। क्व च तावात्मनेपदस्य निमित्तं, यत्रात्मनेपदं तदाश्रयं भवति। भावकर्म्मकर्म्मकर्तृकर्मव्यतिहाराः। क्रमेर्वृत्त्यादयश्च। तेनायं सत्यात्मनेपदे प्रतिषेधो नास्तीति प्रतिषेधफलं

चेदं सूत्रम् । स्नुक्रमोरुदित्त्वादिट् सिद्ध एव । प्रस्नविता । प्रस्नवितुम् । प्रस्नवितव्यम् । प्रक्रमिता । प्रक्रमितव्यम् । अनात्मनेपदनिमित्त इति किम् । प्रस्नोषीष्ट । प्रक्रंसीष्ट । प्रस्नोष्यते । प्रक्रंस्यते । प्रस्नुस्नुषिष्यते । प्रचिक्रंसिष्यते । सर्वत्रैवात्र स्नौतिः क्रमिश्चात्मनेपदस्य निमित्तम् । सनन्तादपि हि पूर्ववत्सन इत्यात्मनेपदं विधीयते । निमित्तग्रहणं किम् । सीयुडादेस्तत्परस्य च प्रतिषेधार्थम् । इह तु प्रस्नवितेवाचरतीति प्रस्नवित्रीयतइति क्यङन्तमात्मनेपदस्य निमित्तं न स्नौतिः ॥ क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यात्मनेपदे क्त्वि प्रतिषेधो वक्तव्यः ॥ * ॥ प्रक्रन्ता । उपक्रन्ता । कर्त्तरीति किम् । प्रक्रमितव्यम् । उपक्रमितव्यम् । आत्मनेपदविषयादिति किम् । निष्क्रमिता । स्नौतेः सनि क्विति च प्रत्यये श्र्युकः किति सनि ग्रहगुहोश्च इत्येव प्रतिषेधो भवति । प्रसुस्नूषति । प्रस्नुतः । प्रस्नुतवान् ॥

## ग्रहो ऽलिटि दीर्घः ॥ ३७ ॥

ग्रह उत्तरस्य इटः अलिटि दीर्घो भवति । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । अलिटीति किम् । जगृहिव । जगृहिम । प्रकृतस्येटो दीर्घत्वमिदं चिण्वदिटो न भवति । ग्राहिता । ग्राहिष्यते ॥

## वृतो वा ॥ ३८ ॥

वृ इति वृङ्वृञोः सामान्येन ग्रहणं तस्मादुत्तरस्य ॠकारान्तेभ्यश्चेटो वा दीर्घो भवति । वरिता । वरीता । प्रावरिता । प्रावरीता । ॠकारान्तेभ्यः । तरिता । तरीता । आस्तरिता । आस्तरीता । वृत इति किम् । करिष्यति । हरिष्यति । अलिटीत्येव । ववरिथ । तेरिथ ॥

## न लिङि ॥ ३९ ॥

वृत उत्तरस्य इटो लिङि दीर्घो न भवति । विवरिषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । विस्तरिषीष्ट ॥

## सिचि च परस्मैपदेषु ॥ ४० ॥

परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घो न भवति । प्राव-

रिष्टाम् । प्रावारिषुः । अतारिष्टाम् । आस्तारिष्टाम् । आस्तारिषुः * परस्मैपदेष्विति किम् । प्रावरिष्ट । प्रावरीष्ट ॥

## इट् सनि वा ॥ ४१ ॥

वृतः सनो वा इडागमो भवति । वुवूर्षति । विवरिषते । विवरीषते । प्राबुवूर्षति । प्राविवरिषति । प्राविवरीषति । ऋकारान्तेभ्यः । तितीर्षति । तितरिषति। तितरीषति। आतिस्तीर्षति । आतिस्तरिषति। आतिस्तरीषति । सनि ग्रहगुहोश्चेति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते । इटश्च वृतो वेति पक्षे दीर्घः । चिकीर्षति जिहीर्षति इत्यत्रो-पदेशाधिकाराल्लाक्षणिकत्वाच्च इडागमो न भवति ॥

## लिङ्सिचोरात्मनेपदेषु ॥ ४२ ॥

वृतो लिङि सिचि च आत्मनेपदे परे वा इडागमो भवति । वृषीष्ट । वरिषीष्ट । प्रावृषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । आस्तीर्षीष्ट । सिचि खल्वपि । अवृत । अवरिष्ट । अवरीष्ट । प्रावृत । प्रावरिष्ट । प्रावरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट । आत्मनेपदेष्विति किम् । प्रावारिष्टाम् । प्रावारिषुः । लिङः प्रत्युदाहरणं न दर्शितमसंभवादिटो ऽवलादित्वादिति ॥

## ऋतश्च संयोगादेः ॥ ४३ ॥

ऋदन्ताद्धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति । ध्वृषीष्ट । ध्वरिषीष्ट । स्मृषीष्ट । स्मरिषीष्ट । अध्वृषाताम् । अध्वरिषाताम् । अस्मृषाताम् । अस्मरिषाताम् । ऋत इति किम् । च्योषीष्ट । प्लोषीष्ट । अच्योष्ट । अप्लोष्ट । संयोगादेरिति किम् । कृषीष्ट । हृषीष्ट । अकृत । अहृत । आत्मनेपदेष्वित्येव । अध्वार्षीत् । अस्मार्षीत् । संस्कृषीष्ट समस्कृतेत्यत्रोपदेशाधिकारादभक्तत्वाच्च सुट इडागमो न भवति ॥

* व्यथारिष्टाम् । व्यथारिषुरित्यधिकं पुस्तकान्तरे ।

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥

स्वरति सूति सूयति धूञ् इत्येतेभ्य ऊदिद्भ्यश्चोत्तरस्य वलादेरार्द्धधातुकस्य वा इडागमो भवति। स्वर्त्ता। स्वरिता। सूति। प्रसोता। प्रसविता। सूयति। सोता। सविता। धूञ्। धोता। धविता। ऊदिद्भ्यः खल्वपि। गाहू। विगाढा। विगाहिता। गुपू। गोप्ता। गोपिता। वेति वर्त्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम्। सूतिसूयत्योर्विकरणनिर्द्देशः षू प्रेरण इत्यस्य निवृत्त्यर्थः। धूञिति सानुबन्धकस्य निर्द्देशो धू विधूनन इत्यस्य निवृत्त्यर्थः। सविता धवितेत्येव नित्यमेतयोर्भवति। स्वरतेरेतस्माद्विकल्पादृद्धनोः स्य इत्येतद्भवति विप्रतिषेधेन। स्वरिष्यति। क्तिति तु प्रत्यये श्र्युकः क्तितीति नित्यः प्रतिषेधो भवति पूर्व्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा॥

## रधादिभ्यश्च ॥ ४५ ॥

रध हिंसासंसिद्ध्योरित्येवमादिभ्यो ऽष्टाभ्य उत्तरस्य वलादेरार्द्धधातुकस्य वा इडागमो भवति। रधिता। रद्धा। नंष्टा। नशिता। त्रप्ता। तर्प्ता। तर्पिता। द्रप्ता। दर्प्ता। दर्पिता। द्रोग्धा। द्रोढा। द्रोहिता। मोग्धा। मोढा। मोहिता। स्नोढा। स्नेहिता। स्नोग्धा। स्नोधा। स्नेढा। स्नेहिता। क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति। अपरे पुनराहुः। पूर्व्वविधेरिड्निषेधविधानसामर्थ्याद्बलीयस्त्वं प्रतिषेधनियमस्येति नित्यमिटा भवितव्यम्। ररन्धिव, ररन्धिमेति भवति॥

## निरः कुषः ॥ ४६ ॥

निर् इत्येवंपूर्वात् कुष उत्तरस्य वलादेरार्द्धधातुकस्य वा इडागमो भवति। निष्कोष्टा। निष्कोषिता। निष्कोष्टुम्। निष्कोषितुम्। निष्कोष्टव्यम्। निष्कोषितव्यम्। निर इति किम्। कोषिता। कोषितुम्। कोषितव्यम्। निस इति वक्तव्ये निर इति निर्द्देशेन रेफान्तमुपस-

र्गान्तरमस्तीति ज्ञाप्यते । तस्य हि निलयनमित्युपसर्गस्यायताविति लत्वं भवति । निसो हि रुत्वस्यासिद्धत्वाल्लत्वं न स्यात् ॥

इणिनष्ठायाम् ॥ ४७ ॥

निरः कुषो निष्ठायामिडागमो भवति । निष्कुषितवान् । निष्कुषितः । इड्ग्रहणं नित्यार्थं,मारम्भो हि यस्य विभाषा इत्यस्य बाधको ऽन्यथा हि विकल्पार्थं एव स्याद् अत्रैव नित्यमिडागम उत्तरत्र विकल्प एवेति ॥

तीषसहलुभरुषरिषः ॥ ४८ ॥

तकारादावार्द्धधातुके इषु सह लुभ रुष रिष् इत्येतेभ्यो वा इडागमो भवति । इषु । एष्टा । एषिता ॥ इषु इच्छायामित्यस्यायं विकल्प इष्यते ॥ यस्तु इष गताविति दैवादिकस्तस्य प्रेषिता प्रेषितुं प्रेषितव्यमिति नित्यं भवति । योपि इष आभीक्ष्ण्यइति क्र्यादौ पठ्यते तस्याप्येवमेव । तदर्थमेव तीषसहेति सूत्रे के चिदुदितमिषं पठन्ति । सह । सोढा । सहिता । लुभ । लोभिता । लोब्धा । रुष । रोष्टा । रोषिता । रिष् । रेष्टा । रेषिता । तीति किम् । एषिष्यति ॥

सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥

इवन्तानाम् धातूनाम् ऋधु भ्रस्ज दम्भु श्रि स्वृ यू ऊर्णु भर ज्ञपि सन् इत्येतेषां च सनि वा इडागमो भवति । इवन्तानाम् । दिदेविषति । दुद्यूषति । सिसेविषति । सुस्यूषति । ऋधु । अर्दिधिषति । ईर्त्सति । भ्रस्ज । बिभ्रज्जिषति । बिभ्रक्षति । बिभर्ज्जिषति । बिभर्क्षति । दम्भु । दिदम्भिषति । धिप्सति । धीप्सति । श्रि । उच्छिश्रयिषति । उच्छिश्रीषति । स्वृ । सिस्वरिषति । सुस्वूर्षति । यु । यियविषति । युयूषति । ऊर्णु । प्रोर्णुनविषति । प्रोर्णुनुविषति । प्रोर्णुनूषति । भर इति भृञित्येतस्य भौवादिकस्य ग्रहणं शपा निर्द्देशात् । बिभरिषति । बुभूर्षति । ज्ञपि । जिज्ञपयिषति । ज्ञीप्सति । सन् । सिसनिषति । सिषासति । के चिदत्र भरज्ञपिसनितनिपतिदरिद्राणामिति पठन्ति । तितनिषति । तितंसति ।

तितासति । पिपतिषति । पित्सति । दिदरिद्रिषति । दिदरिद्रासति । सनीति किम् । देविता । भ्रष्टा ॥

## क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥

क्लिशः क्त्वानिष्ठयोर्वा इडागमो भवति । क्लिष्ट्वा । क्लिशित्वा । क्लिष्टः । क्लिष्टवान् । क्लिशितः । क्लिशितवान् । क्लिशू विबाधन इत्यस्य क्त्वायां विकल्पः सिद्ध एव निष्ठायां तु यस्य विभाषेति प्रतिषेधः प्राप्नोति । क्लिश उपताप इत्येतस्य तु क्त्वायां निष्ठायां च नित्यमिडागमः प्राप्नोति तदर्थं क्त्वाग्रहणं क्रियते ॥

## पूङश्च ॥ ५१ ॥

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति । पूत्वा । पवित्वा । सोमोऽतिपूतः । सोमोऽतिपवितः । पूतवान् । पवितवान् । श्र्युकः क्तिीति प्रतिषेधे प्राप्ते विकल्पो विधीयते ॥

## वसतिक्षुधोरिट् ॥ ५२ ॥

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् । वसतीति विकरणो निर्देशार्थ एव । वस्तेस्तूदात्तत्वादेव भवितव्यमिटा । पुनरिड्ग्रहणं नित्यार्थम् ॥

## अञ्चेः पूजायाम् ॥ ५३ ॥

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः । उदितो वेति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायां यस्य विभाषेति प्रतिषेधः प्राप्तस्तदर्थमिदं प्रारब्धम् । पूजायामिति किम् । उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥

## लुभो विमोहने ॥ ५४ ॥

लुभो विमोहनेऽर्थे वर्त्तमानात् क्त्वानिष्ठयोरिडागमो भवति । लुभित्वा । लोभित्वा । विलुभिताः केशाः । विलुभितः सीमन्तः । विलुभितानि पदानि । विमोहनमाकुलीकरणं तत्र क्त्वायां तीषसहलुभेति विकल्पो

निष्ठायां यस्य विभाषेति प्रतिषेधः प्राप्तः । विमोहनइति किम् । लुब्धो वृषलः । शीतेन पीडित इत्यर्थः । लुब्ध्वा । लुभित्वा । लोभित्वा । गार्ध्ये यथाप्राप्तमेव भवति ॥

## जॄव्रश्च्योः क्त्वि ॥ ५५ ॥

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यये इडागमो भवति । जरित्वा । जरीत्वा । व्रश्चित्वा । जॄ इत्येतस्य श्र्युकः कितीति प्रतिषेधः प्राप्तो व्रश्चेरूदित्त्वाद्विकल्पः । क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम् ॥

## उदितो वा ॥ ५६ ॥

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति । शमु । शमित्वा । शान्त्वा । तमु । तान्त्वा । तमित्वा । दमु । दान्त्वा । दमित्वा ॥

## से ऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५७ ॥

सकारादावसिच्यार्द्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति । कृत् । कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्त्तिष्यति । अकर्त्तिष्यत् । चिकर्त्तिषति । चृत । चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्त्तिष्यति । अचर्त्तिष्यत् । चिचर्त्तिषति । छृद । छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्द्दिष्यति । अच्छर्द्दिष्यत् । चिच्छर्द्दिषति । तृद । तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्द्दिष्यति । अतर्द्दिष्यत् । तितर्द्दिषति । नृत् । नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्त्तिष्यति । अनर्त्तिष्यत् । निनर्त्तिषति । सइति किम् । कर्त्तिता । असिचीति किम् । अकर्त्तीत् ॥

## गमेरिट् परस्मैपदेषु ॥ ५८ ॥

गमेर्द्धातोः सकारादेरार्द्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति । गमेरिति किम् । चेष्यति । इड्ग्रहणं नित्यार्थम् । परस्मैपदेष्विति किम् । संगंसीष्ट । संगसीष्ट । संगंस्यते । संजिगंसते । संजिगंसिष्यते । अधिजिगांसते । अधिजिगांसिष्यते ।

गमेरिडादेशस्याज्झनगमां सनीति दीर्घत्वम् । सइत्येव । गन्तास्मि । गन्तास्वः । गन्तास्मः ॥ आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते ॥ अन्यत्र सर्वत्रैवेष्यते । क्रत्यपि भवति, परस्मैपदलुकि च । संजिगमिषिता । अधिजिगमिषिता व्याकरणस्य । जिगमिषत्वमिति । पदशेषकारस्य * पुनरिदं दर्शनं गम्युपलक्षणार्थं परस्मैपदग्रहणम् । परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात्सकारादेरार्द्धधातुकस्येड्भवति । तन्मतेन संजिगंसिता अधिजिगंसिता व्याकरणस्य इत्येव भवितव्यम् ॥

## न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥

वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वृत् । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । वृधु । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । शृधु । शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्दू । स्यन्त्सति । अस्यन्त्स्यत् । सिस्यन्त्स्यति । चतुर्भ्य इति न वक्तव्यम् । वृद्ग्रहणं हि तत्र कृतादिपरिसमाप्त्यर्थं क्रियते कृपू सामर्थ्ये वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते न किंचिदनिष्टं प्राप्नोति, तत्क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेनेति । चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः संनिधापितो भवति । परस्मैपदेष्वित्येव । वर्त्तिषीष्ट । वर्त्तिष्यते । अवर्त्तिष्यत् । विवर्त्तिषते । अथात्रात्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते । अन्यत्र सर्वत्र प्रतिषेधः । क्रत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति । विवृत्सिता । विवृत्सत्वमिति † ॥

## तासि च क्लृपः ॥ ६० ॥

क्लृप उत्तरस्य तासेः सकारादेश्चार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति । कल्प्ता । श्वः कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । परस्मैपदेष्वित्येव । कल्पितासे । कल्पिषीष्ट । कल्पिष्यते । अकल्पिष्यत ।

---

* पदशेषो ग्रन्थविशेष इति पदमञ्जरी ।

† विवृत्सितुम् । विवृत्सितव्यमित्यधिकं पुस्तकान्तरे ।

चिक्लृप्सिषते । क्लृपेरथात्मनेपदेन समानपदस्थस्य इडागम इष्यते । अन्यत्र प्रतिषेधः । क्लृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति । चिक्लृप्सिता । चिक्लृप्सत्वमिति ॥

## अचस्तास्वत्थल्यनिटो नित्यम् ॥ ६१ ॥

तासौ ये नित्यानिटो धातवो ऽजन्तास्तेभ्यस्तासाविव थलीडागमो न भवति । याता । ययाथ । चेता । चिचेथ । नेता । निनेथ । होता । जुहोथ । अच इति किम् । भेत्ता । बिभेदिथ । तास्वदिति किम् । लूत्वा । लुलविथ । थलीति किम् । याता । ययिव । ययिम । अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थम् । नित्यग्रहणं किम् । विधोता । विधविता । विदुधविथ । तासि विभाषितेटस्थलि नित्यमिडागमो भवति । तास्वदिति वतिनिर्द्देशः किमर्थः । तासौ सतस्थलि प्रतिषेधार्थः । यो हि तासावसन्नसत्वाच्च नित्यानिट् तस्य थलि प्रतिषेधो न भवति । जघसिथ । उवयिथ । उत्तरसूत्रेपि तास्वदिति वर्त्तते अदादेशो हि घसिर्वेञादेशश्च वयिस्तासौ नास्ति ॥

## उपदेशेत्वतः ॥ ६२ ॥

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविव थलीडागमो न भवति । पक्ता । पपक्थ । यष्टा । इयष्ठ । शक्ता । शशक्थ । उपदेशइति किम् । कर्ष्टा । चकर्षिथ । अत्वत इति किम् । भेत्ता । बिभेदिथ । तपरकरणं किम् । राद्धा । रराधिथ । तास्वदित्येव । जिघृक्षति । जग्रहिथ । नित्यमनिट इत्येव । अङ्क्ता । अञ्जिता । आनञ्जिथ ॥

## ऋतो भारद्वाजस्य ॥ ६३ ॥

ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति । स्मर्त्ता । सस्मर्थ । ध्वर्त्ता । दध्वर्थ * । सिद्धे सत्यारम्भो नियमार्थः । ऋत एव भारद्वाजस्य नान्येषां धातूनाम् । ययिथ । वयिथ । पेचिथ । शेकिथ । तदयमर्थात्पूर्वयोर्योगयोर्विकल्पः । तपरकरणमॄकारान्तस्य निवृत्त्यर्थम् । तथा हि सति विध्यर्थमेतस्स्यात् ॥

* कर्ता चकर्थेति पुस्तकान्तरे ऽधिकम् ।

### बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ६४ ॥

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये। निगमो वेदः। बभूथ। त्वं हि होता प्रथमो बभूथ। बभूविथेति भाषायाम्। आततन्थ। येनान्तरिक्षमुर्वाततन्थ। आतेनिथेति भाषायाम्। जगृभ्म। जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। जगृहिमेति भाषायाम्। ववर्थ। ववर्थ त्वं हि ज्योतिषा। ववरिथेति भाषायाम्। क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनं निगमएव न भाषायामिति ॥

### विभाषा सृजिदृशोः ॥ ६५ ॥

सृजि दृशि इत्येतयोस्थलि विभाषा इडागमो न भवति। सस्रष्ठ। ससर्जिथ। दद्रष्ठ। ददर्शिथ ॥

### इडत्त्यर्त्तिव्ययतीनाम् ॥ ६६ ॥

अत्ति अर्त्ति व्ययति इत्येतेषां थलीडागमो भवति। आदिथ। आरिथ। संविव्ययिथ। व्येञो न व्यो लिटीत्यात्वप्रतिषेधः। अत्तिव्ययत्योर्न्तो भारद्वाजस्येति नियमाद्विकल्पः। अर्त्तेरपि नित्यः प्रतिषेधः। अत्रेड्ग्रहणं विस्पष्टार्थम्। विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकं, प्रतिषेधविधाने चार्त्तिग्रहणमिति नित्योयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम् ॥

### वस्वेकाजाद्घसाम् ॥ ६७ ॥

कृतद्विर्वचनानामेकाचां धातूनाम् आकारान्तानां घसेश्च वसाविडागमो भवति। आदिवान्। आशिवान्। पेचिवान्। शेकिवान्। धात्वभ्यासयोरेकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति। आत्। ययिवान्। तस्थिवान्। घस्। जक्षिवान्। सिद्धे सत्यारम्भो नियमार्थः। एकाजाद्घसामेव वसाविडागमो भवति नान्येषाम्। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात्प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते। आद्ग्रहणमनेकाजर्थं द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यं, दरिद्रा-

तेस्तु क्रास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यम् । दरिद्रांचकार । अथाप्याम्न क्रियते तथापि च दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति । ददरिद्वानिति भवितव्यम् । घसेरपि यदि ग्रहणमिह न क्रियते तदा द्विर्वचनात् परत्वाद् घसिभसोर्हलि चेति उपधालोपे कृते द्विर्वचनमेव न स्यादनच्कत्वाद्, इह तु घसिग्रहणाद् उपधालोपमपि परत्वादिडागमो बाधते । तत्र कृते गमहनजनखनघसामित्युपधालोपः । स च द्विर्वचनेचीति द्विर्वचने कर्त्तव्ये स्थानिवद्भवति, तेन जक्षिवानिति सिध्यति ॥

## विभाषा गमहनविदविशाम् ॥ ६८ ॥

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति । गम । जग्मिवान् । जगन्वान् । मो नो धातोरिति नकारः । हन । जघ्निवान् । जघन्वान् । विद । विविदिवान् । विविद्वान् । विश । विविशिवान् । विविश्वान् । विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम् । ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति ॥ दृशेश्चेति वक्तव्यम् ॥ * ॥ ददृशिवान् । ददृश्वान् ॥

## सनिंससनिवांसम् ॥ ६९ ॥

सनोतेः सनतेर्वा धातोः सनिंससनिवांसमिति निपात्यते * । अग्निज्ज्वाग्ने सनिंससनिवांसम् । इडागम एत्वाभ्यासलोपाभावश्च निपात्यते । सनिङ्पूर्वादन्यत्र सेनिवांसमित्येव भवति । छन्दसीदं निपातनं विज्ञायते † । भाषायां सेनिवांसमिति भवति ॥

## ऋद्धनोः स्ये ॥ ७० ॥

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति । करिष्यति ।

* सनिंपूर्वस्य सनोतेः सनतेर्वा सनिंससनिवांसमिति निपात्यते इत्येकस्मिन्पुस्तके पाठः ।

† इयं चानुपूर्वी छन्दस्येव नियतेति छन्दस्येव निपातनं विज्ञायते इति पा० २ ।

हनिष्यति । हरिष्यति । स्वरतेर्वैट्त्वादृद्धनोः स्यद्त्येतद्भवति विप्रतिषेधेन । स्वरिष्यति । तपरकरणं विस्पष्टार्थम् ॥

अञ्जेः सिचि ॥ ७१ ॥

अञ्जेः सिचि इडागमो भवति । आञ्जीत् । आञ्जिष्टाम् । आञ्जिषुः । सिचीति किम् । अङ्क्ता । अञ्जिता । ऊदित्वाद् विभाषा भवति ॥

स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥

स्तु सु धूञ् इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति । अस्तावीत् । असावीत् । अधावीत् । परस्मैपदेष्विति किम् । अस्तोष्ट । असोष्ट । अधोष्ट । अधविष्ट ॥

यमरमनमातां सक्च ॥ ७३ ॥

यम रम नम इत्येतेषामङ्गानामाकारान्तानां च सगागमो भवति परस्मैपदे सिचि इडागमश्च । यम् । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । अनंसीत् । अनंसिष्टाम् । अनंसिषुः । आकारान्तानाम् । अयासीत् । अयासिष्टाम् । अयासिषुः । यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा नेटीति प्रतिषिध्यते । परस्मैपदेष्वित्येव । अयंस्त । अरंस्त । अनंस्त ॥

स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

स्मिङ् पूङ् ऋ अञ्जू अशू इत्येतेषां धातूनां सनीडागमो भवति । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । ङकारग्रहणं पूञो मा भूत् । पुपूषति इत्येव तस्य भवति । अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमोस्त्येव ॥

किरश्च पञ्चभ्यः ॥ ७५ ॥

किरादिभ्यः पञ्चभ्यः सनि इडागमो भवति । कॄ । चिकरिषति । गॄ । जिगरिषति । दृङ् । दिदरिषते । धृङ् । दिधरिषते । प्रच्छ । पिप्रच्छिषति । पञ्चभ्य इति किम् । सिसृक्षति । किरतिगिरत्योरिट् सनि वेति विकल्पः प्राप्तः वृतो वेति वास्येटो दीर्घत्वं नेच्छन्ति ॥

## रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद् । रोदिति । स्वप् । स्वपिति । श्वस् । श्वसिति । अन् । प्राणिति । जक्ष् । जक्षिति । पञ्चभ्य इत्येव । जागर्त्ति । सार्वधातुकइति किम् । स्वप्ता । वलादेरित्येव । रुदन्ति ॥

## ईशः से ॥ ७७ ॥

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । ईशिष्व ॥

## ईडजनोर्ध्वे च ॥ ७८ ॥

ईड जन इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य से इत्येतस्य च सार्वधातुकस्य इडागमो भवति । ईडिध्वे । ईडिध्वम् । ईडिषे । ईडिष्व । जनिध्वे । जनिध्वम् । जनिषे । जनिष्व । जनी प्रादुर्भावइत्यस्य छान्दसत्वात् श्यनो लुक् उपधालोपाभावश्च ॥ जन जननइत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते ॥ तस्य कर्मव्यतिहारे व्यतिजज्ञिषे । व्यतिजज्ञिष्व । व्यतिजज्ञिध्वे व्यतिजज्ञिध्वम्, इति च भवति ॥ ध्वशब्दे ईशेरपि इडागम इष्यते ॥ ईशिध्वमिति, तदर्थं के चिदीडिजनोः सध्वे चेति सूत्रं पठन्ति । तत्र सकारादेः सेशब्दस्य सूत्रएवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते । ईडिशिजनां सेध्वयोरित्येकमेव सूत्रं न पठितं, विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति । ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा । लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा ॥

## लिङः सलोपो ऽनन्त्यस्य ॥ ७९ ॥

* सार्वधातुकइति वर्तते । सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति । कः पुनरनन्त्यो लिङः सकारः । यो यासुट्सुट्सीयुटाम् । कुर्यात् । कुर्याताम् । कुर्युः । कुर्वीत । कुर्वीयाताम् । कुर्वीरन् ।

* सार्वधातुकइति वर्ततइत्येकस्मिन्पुस्तके नास्ति ।

अनन्त्यस्येति किम् । कुर्युः । कुर्याः । सार्वधातुकइत्येव । क्रियास्ताम् । क्रियासुः । कृषीष्ट । कृषीयास्ताम् । कृषीरन् ॥

अतो येयः ॥ ८० ॥

अकारान्तादङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति । पचेत् । पचेताम् । पचेयुरित्यत्रोस्यपदान्तादिति पररूपं बाधितम् । अत इति किम् । चिनुयात् । सुनुयात् । तपरकरणं किम् । यायात् । सार्वधातुकइत्येव । चिकीर्ष्यात् । ननु चातो लोपेनात्र भवितव्यम् । पचेदित्यत्रापि हि तर्हि अतो दीर्घो यञीति दीर्घत्वेन भवितव्यम् । तदनेनावश्यं विध्यन्तरं बाधितव्यम् । स यथैव दीर्घस्य बाधक एवमतो लोपस्यापि बाधकः स्यात् । स्यादेतदेवं यदि दीर्घः सार्वधातुके विधीयते । अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यान्न पुनरतो लोपस्य । येय इत्यविभक्तिको निर्द्देशः, य इति वा षष्ठीनिर्द्देशे यलोपस्यासिद्धत्वमनाश्रित्याद्गुणः कृतः सौत्रत्वान्निर्द्देशस्येति । के चिद् अत्रातो यासिय इति सूत्रं पठन्ति । तेषां सकारान्तः स्थानी षष्ठीसमासश्च ॥

आतो ङितः ॥ ८१ ॥

आकारस्य ङिदवयवस्य आकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति । पचेते । पचेथे । पचेताम् । पचेथाम् । यजेते । यजेथे । यजेथाम् । सार्वधातुकमपिदित्यत्र न ङितीव ङिद्वदित्येवमङ्गीक्रियते ऽपितु ङित इव ङिद्वदिति पूर्वसूत्रएव उच्चुकुटिषतीतिप्रसिद्धये तथाङ्गीकरणम् । यदि गाङ्कुटादिसूत्रे ङिद्भवतीत्येवमङ्गीक्रियते तदा अनुदात्तङितआत्मनेपदमिति आत्मनेपदं प्राप्नोतीति। आत इति किम् । पचन्ति । यजन्ति । पचन्ते । यजन्ते । ङित इति किम् । पचावहै । पचामहै । अत इत्येव । चिन्वाते । सुन्वाते। तपरकरणं किम् । मिमाते । मिमाथे ॥

### आने मुक् ॥ ८२ ॥

आने परतोऽङ्गस्यातो मुगागमो भवति । पचमानो, यजमानः । अकारमात्रभक्तोयं मुक् अदुपदेशग्रहणेन गृह्यतइति अदुपदेशादिति लसार्वधातुकानुदात्तत्वं भवति । यद्येवमातो ङित इत्ययमपि विधिः प्राप्नोति, तपरनिर्द्देशाच्च भविष्यति । मुकि सत्यध्यर्द्धमात्रो भवति । लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति । नैष दोषः । उपदेशग्रहणं तत्र क्रियते । तेन उपदेशादूर्द्ध्वं सत्यपि कालभेदे भवितव्यम् । तथा च पचावः पचाम इत्यत्रापि भवति ॥

### ईदासः ॥ ८३ ॥

आसउत्तरस्यानस्य ईकारादेशो भवति । आसीनो यजते । अत्र पञ्चम्या परस्य षष्ठी कल्प्यते ॥

### अष्टन आ विभक्तौ ॥ ८४ ॥

अष्टनो विभक्तौ परत आकारादेशो भवति । अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । विभक्ताविति किम् । अष्टत्वम् । अष्टता । आ इति व्यक्तिनिर्द्देशोयमाकृतिनिर्देशे तु नकारस्थाने ऽनुनासिकाकारः स्यात् । विकल्पेनायमाकारो भवत्येतज्ज्ञापितमष्टनो दीर्घादिति दीर्घग्रहणा,दष्टाभ्य औशिति च कृतात्वस्य निर्द्देशात्तेनाष्टभिरष्टभ्य इत्यपि भवति । तदन्तविधिश्चात्रेष्यते । प्रिया अष्टौ येषां ते प्रियाष्टानः । प्रियाष्टौ ॥

### रायो हलि ॥ ८५ ॥

रै इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति । राभ्याम् । राभिः । हलीति किम् । रायौ । रायः । विभक्ताविति किम् । रैत्वम् । रैता । मृजेर्वृद्धिरित्यतः प्राग्विभक्त्यधिकारः ॥

### युष्मदस्मदोरनादेशे ॥ ८६ ॥

युष्मदस्मदित्येतयोरनादेशे विभक्तौ परत आकारादेशो भवति । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु । अनादेशइति किम् ।

युष्मत् । अस्मत् । हलीत्यधिकाराद्यच्च न स्यात् । उत्तरच त्वनादेशग्रहणेन प्रयोजनं योचीति तदिहैव क्रियते ॥

## द्वितीयायां च ॥ ८७ ॥

द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् । आदेशार्थं वचनम् ॥

## प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति । युवाम् । आवाम् । प्रथमाया इति किम् । युवयोः । आवयोः । द्विवचनइति किम् । त्वं,महं, यूयं, वयम् । भाषायामिति किम् । युवं वस्त्राणि पीवसा वसाथे ॥

## योचि ॥ ८९ ॥

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः । अचीति किम् । युवाभ्याम् । आवाभ्याम् । युष्मदस्मदोरनादेशइत्यच्च यदि हलीत्यनुवर्त्तते शक्यमकर्त्तुमचीत्येतत् तत्क्रियते विस्पष्टार्थम् । अनादेशइत्येव । त्वद्गच्छति । मद्गच्छति ॥

## शेषे लोपः ॥ ९० ॥

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति । कश्च शेषः, यत्राकारो यकारश्च न विहितः ।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र तेषु * लोपो विधीयते ॥

त्वम् । अहम् । यूयम् । वयम् । तुभ्यम् । मह्यम् । युष्मभ्यम् । अस्मभ्यम् । त्वत् । मत् । युष्मत् । अस्मत् । तव । मम । युष्माकम् । अस्माकम् । शेषग्रहणं विस्पष्टार्थम् । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवति, त्वं ब्राह्मणी । अहं ब्राह्मणी । संनिपातलक्षणो विधिरनिमित्तं

* शेषे इति बहुषु पुस्तकेषु पाठः ।

तद्विघातस्य । अलिङ्गे वा युष्मदस्मदी इति । केचित्तु शेषे लोपं टिलोपमिच्छन्ति । कथं वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते । तेन मपर्यन्ताद् योऽन्यः स शेष इति । तत्रायं लोप इति टिलोपो भवति ॥

॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ पञ्चदशस्तबकावशेषः ॥



प्रविश्य च निराविलविलस्वर्गमिव तं वतंसरूपमखिलभुवनानां परिसरसरदनुपमयवसमानयवसमाननीयशाद्वलं विमलसरसीसरसीकृतपर्याप्तपर्याप्तविविधाभोगभोगसामग्रीसहितगोगोपगोपनभाजनभाजनकमलोक्य सर्वे एव विसिष्मियिरे सिष्मियिरे च ॥ ११० ॥

तं प्रसिद्धं, सुतलादिकं, विलस्वर्गमिव, परिसरे पर्यन्तभुवि सरद्भिर्मिलद्भिर्यवसमानैर्यवतुल्यैर्यवसैस्तृणैर्हेतुभिर्माननीयः शाद्वलः शादहरितप्रदेशो यत्र तम्, अपर्याप्ता च· आप्तः प्राप्तो विविधो रूपरसादिमय आभोगः परिपूर्णता यया सा च या भोगसामग्री तया सहितानां गवां गोपानां च गोपनभाजनं च रक्षणसमर्थं च तं भा कान्तिस्तज्जनकं चेति तम् । विसिष्मियिरे विस्मयं प्राप्ताः, सिष्मियिरे· ईषज्जहसुश्च ॥ ११० ॥

ततश्च ।

गावः स्वच्छन्दमूषुः परिसरिणि बहिर्मण्डले शाद्वलाढ्ये
गोपालास्तत्पुरस्तात् सहधरणिसुरास्तत्पुरस्तात् पुरन्ध्यः ।
तत्रैव क्वापि राधाप्रभृतिकुलवधूमण्डली क्वापि कन्याः
पार्श्वद्वन्द्वे सखायो वटुरपि पितरावग्रतो लाङ्गली च ॥ १११ ॥

परिसरिणि प्रसरणशीले । लाङ्गली बलदेवः ॥ १११ ॥

एवं व्रजनगरीगरीयसा कौतुकेन केनचिदनातङ्कं तं कंचन निर्वृतिप्रदेशं प्रदेशं समासाद्य महाकल्पकल्पघनघटाघटावलिवलित-

निर्मुक्तासारसारपराभवभवदवसादं विजहति स्म सर्वे एव स्वेच्छा-समं समन्ततः स्थिता अपि गोवर्धनधरस्य रस्यतममात्मनयनाभि-मुखं मुखं मन्यन्ते स्म ॥ ११२ ॥

निर्वृतेरानन्दस्य प्रदायां प्रदाने· ईशं समर्थं, महाकल्पं महाप्रलयं कल्पयन्तीति तेषां घनानां मेघानां घटाभिः श्रेणीभिर्घटावलिवलित इव कलमश्रेणिसमुन्नलित इव निर्मुक्तो य आसारस्तस्मात् सारो बलवान् यः पराभवस्तस्माद्भवन् योऽवसादस्तम् ॥ ११२ ॥

अथ वेदविदामवनिनिर्जराणां निर्जराणां मङ्गलाशीराशी रामा-नुजं मानुजं लोकमासाद्य विहरन्तं हरन्तं च निखिलसुरासुराणाम-भिमानमानन्दयामास ॥ ११३ ॥

अवनिनिर्जराणां विप्राणां निर्जराणां तेजस्विनां मङ्गलाशिषां राशिः· रामानुजं कृष्णम्· आनन्दयामास । मानुजं मनुष्यसंबन्धिनम् ॥ ११३ ॥

तदनु च मातापितृपितृव्यैर्विस्मयस्मयजया जयाशंसया शं स यापितो घ्रातश्च शिरसि रक्षितो रोहिण्या वात्सल्यरसोत्क्षणेन निक्ष-णेन नितरामपि प्रथमजनिजनितबलेन बलेन चोपगूहितो हि तोषस-मुल्लासेन ॥ ११४ ॥

विस्मयस्मयजया विस्मयो लोकोत्तरक्रियादर्शनोत्थः स्मयो हर्षोत्थं मुखप्रफुल्लत्वं ताभ्यां जनितया जयाशंसया वत्स विजयी भव सर्वापद्भ्यो बन्धूंस्त्रायस्व· इत्यादिकया शं कल्याणं यापितः प्रापितः । वात्सल्यर-सस्य· उत्क्षणेन सेकेन, नितरां क्षण उत्सवो यस्मात् तेन ॥ ११४ ॥

मुल्लासेन स्मयमानस्मयमानमाननकमलमलसदरविकसन्नयनमी-षदुन्नमयन्तीभी रमयन्तीभी रतिकलाकलापमाभीरीभीरीयमाणप्रणया-मृतक्लिन्नाभी राधादिभिरभिनवानुरागपरभागसुकुमारिकाभिः कुमारि-काभिश्च नयनचकोरकोरकितचकितचपलप्रान्तलक्ष्मीभिरक्ष्मीलमालि-ङ्गितः ॥ ११५ ॥

आननकमलमीषदुन्नमयन्तीभी राधादिभिः कर्त्रीभिर्नयनचकोरस्य कोरकितश्च चकितश्च चपलश्च यः प्रान्तः· व्रीडाशङ्कौत्सुक्यसूचकस्तस्य लक्ष्मीभिः संपत्तिभिरक्मीलं निर्निमेषमेवालिङ्गितः। तत्प्रकारमाह, मुल्लासेन हर्षप्रकाशेन· आननकमलम्· ईषदुन्नमयन्तीभिः। कीदृशं, स्मयो वाम्यसूचको गर्वः· मानो दाक्षिण्यसूचक आदरस्ताभ्यां स्मयमानं प्रफुल्लम्। रतिकलानां कलापः संघो यत्र तद्यथा स्यात् तथा ॥ ११५ ॥

प्रमदभरनिःसहसहचरचयप्रणयनिरीक्षणक्षणानिर्वृतो वृतो बन्धुजनेन सकलेन स कलेन वचसा च सानन्दं नर्मपटुना वटुना वदनमुन्नीय निजगदे, जगदेकवल्लभ वयस्य यस्य ब्रह्मवर्चसममोघमोघवत्तरमनुभवन्तो भवन्तो मोदन्ते सोऽहं सोऽहं कथयामि ॥ ११६ ॥

स श्रीकृष्णः, कलेन मधुरेण ॥ ११६ ॥

किमयि मयि तस्मिन् सति सखे सखेदोऽसि गिरिवरधारणेन न कथमाज्ञापयसि पयसिजेक्षण क्षणमहं गिरिवरमेनं बिभर्मि भर्मिणा दण्डकाष्ठशिखरेण खरेण श्रमेण श्रान्तो भवान् क्षणं विश्राम्यतु ॥ ११७ ॥

आज्ञापयसीति, तादृशो ब्रह्मवर्चस्यप्यहं सख्येन गोपज्ञातेरपि तवाज्ञाकारीति किं तव भाग्यं वर्णनीयमिति भावः। भर्मिणा भर्म कनकं तद्वता ॥ ११७ ॥

तदुपाकर्ण्य निजगाद गोष्ठेश्वरी, अहो एभिरेव पुनरुद्धते रुद्धतैक्ष्ण्येन चेतसा मुहुरुद्धतीकृतोऽसि भो वत्स, वत्सरकृत्यं शतमखमखमखण्डितं खण्डितं यत् कृतवानसि, न सिध्यति हि धर्मो देवताहेलनम् ॥ ११८ ॥

एतैः कर्तृभिः· उद्धतीकृतोऽसि, रुद्धमावृतम्· अन्तः संवृतं तैक्ष्ण्यं तीक्ष्णत्वं नतु देवतासंमानमयमार्दवं यत्र तादृशेन चेतसा करणेन ॥ ११८ ॥

कथं नाम सुराणामसुराणामपि द्वेषो नरस्य रस्यतामेतु· उभयभयं यदि जातं तदा कथं वसतिररतिरस्या स्यादिति सवात्सल्यं

सरससुखाकरकरकमलपलाशेन श्रीकृष्णस्यानन्दघनमपघनमपरिश्रममतिश्रममतितया परामृशन्ती गिरिवरभरभुजं भुजं परिस्पृश्य पुनरूचे ॥ ११६ ॥

उभयभयं देवासुराभ्यां भयम् । सुखाकरेति "सुखप्रियादानुलोम्ये डाच्" अपघनमङ्गम् । अपरिश्रमं परिश्रमरहितमपि । अतिश्रममतितया· अतिश्रमयुक्तत्वभावनया । गिरिवरभरं भुङ्क्ते· अनुभवतीति तम् ॥ ११९ ॥

अहो कथमभिनवनवनीतशीतलतरोऽमलतरो भुजवलयोऽवलयोगेन महीधरभरं सहते ॥ १२० ॥

भुजवलयो बाहुमण्डलः । अबलयोगेन बलयोगाभावेन ॥ १२० ॥

हंहो धराधराधिनाथ नाथति जनोऽयं वरमेकं यदि सत्यमेव तत्र भवान् भवान् देवतात्मको वतात्मकोमलतालघुताभ्यां समुचितचित एव तदास्तु मास्तु मान्यतम मम तनयस्य मतनयस्य खेदः ॥ १२१ ॥

नाथति याचते । तदा· आत्मकोमलतालघुताभ्यां समुचितं यथा स्यात् तथा चित आच्छन्न एव भवान्· अस्तु । हे मान्यतम· अतिमाननीय मम तनयस्य खेदो मास्तु । मतः संमतो नयो नीतिर्यत्र तस्य, कोमलाङ्के धारकेऽस्मिंस्तव तथाभूतत्वमेव नीतिः संमतेत्यर्थः ॥ १२१ ॥

वटुरुवाच, मातर्मैवं वादीः, क्व नामास्य खेदः, अवधीयताम् ।

कल्पान्तप्रतिमं महाघनघटासंघट्टमुद्घाटयन्<br>
किंवा नोपचकार नः प्रकुपितो देवः स वज्रायुधः ।<br>
पश्याद्रीन्द्रविधारणेऽस्य यदिदं माधुर्यमुज्जृम्भते<br>
मातस्तत् कथमन्यथाक्षिपुटकैरस्माभिरापास्यत ॥ १२२ ॥

संघट्टः संमर्दः । अन्यथेति, यदि देवः प्रकुपितो नाभविष्यत् तदा कथमस्माभिः· अक्षिपुटकैरस्य माधुर्यम्· आपास्यत. नापास्यतैवेत्यर्थः, भूते क्रियातिपत्तौ लृङ् ॥ १२२ ॥

साह साहसिक माधुर्यं मा धुर्यं खल्विदमपितु खेदवैधुर्यं वै धुर्यंसलं गिरिवरवहनस्य ॥ १२३ ॥

माधुर्यं मा खल्विदं, यतो धुर्यं धुरि भवं "दिगादित्वाद्यत्," नहि भारान्माधुर्यमुद्भवतीत्यर्थः, । अपितु वै निश्चितं धुरि भारे· अंसलं बलवत् खेदवैधुर्यं खेदेन वैकल्यमेव, "बलवान् मांसलोंऽसल" इत्यमरः । गिरिवरवहनस्य कृष्णस्य ॥ १२३ ॥

पश्य पश्य ।

ललाटस्य प्रान्ते श्रमजलकणक्लिद्यमानालकालि-
मुखं शुष्यत्प्रायं सरसिजमिव म्लायमानं हिमान्या ।
भरेण द्रागद्रेर्वमदिव पुरः पाणिपादं सुरागं
कथं मातुः प्राणाः शिव शिव परं कष्टमेतत् सहन्ताम् ॥ १२४ ॥

हिमान्या हिमसंहत्या । सुरागमिति, अतिसौकुमार्याद् रागवमनस्य सार्वकालिकत्वेऽपि तदात्वाधिक्यं रागस्य सुशब्देन बोधितम् ॥ १२४ ॥

श्रीकृष्ण आह । मातः परं मातः परं कौतुकमस्ति, वृथा किमाशङ्क्यते मम खेदः, खेऽदः पश्य गिरिवरस्य स्वयमवस्थानं, निगदितमेव पुरा, वपुरात्मीयं मे निमित्तमात्रमेवात्र ॥ १२५ ॥

हे मातः· अतः परम्· इतोऽन्यत् परमुत्कृष्टं कौतुकं मास्ति नास्ति । खे शून्य एव· अदोऽवस्थानं निभालय ॥ १२५ ॥

साह । वत्स भवतु । तथापि ।

एतावन्तं कालमालम्ब्य बालो
मन्दस्पन्दं बाहुमुद्यम्य तिष्ठन् ।
अद्रेः सङ्गात् खेदवत्पाणिपद्मः
खिन्नो न स्याः कस्य हेतोर्न विद्मः ॥ १२६ ॥

खेदवत् खेदयुक्तं पाणिपद्मं यस्य सः, पाणिपद्मस्य खेदे प्रकटं दृश्यमानेऽपीत्यर्थः ॥ १२६ ॥

वचनमिदं पटुं मन्यते मन्यते यदि तव करसङ्गरसं गमयित्वा स्वयमेव खेऽन्नखेलन्निवायमवतिष्ठते ॥ १२७ ॥

गमयित्वा विरहय्य ॥ १२७ ॥

वटुराह । गोष्ठेश्वरि मन्त्रप्रभावतो विप्रभावतो विशिष्टशिष्टस्य मम ममतैकभाजनं वयस्यममुममुञ्चन्नपि गिरिवरोऽयं करकमले स्थितः सुनखे न खेदयते दयते हि सर्वात्मनाथं प्रति सर्व एव ॥ १२८ ॥

अमुञ्चन्निति, मत्संमाननसिद्ध्यर्थमेवेति भावः । सुनखे करकमले स्थितोऽप्यमुं न खेदयते, नखस्पर्शासहसौकुमार्यं स्वीयं प्रकटय्य स्थित इति भावः ॥ १२८ ॥

साह । धृष्ट किं प्रलपसि मम प्राणा दंदह्यन्ते नह्यन्ते न तावदाश्वासपाशेन कृतमिह हासपरिकल्पनयानया ॥ १२९ ॥

आश्वासपाशेन न नह्यन्ते न बध्यन्ते, किंतु दाहपीडया निःसर्तुमेवेच्छन्तीति भावः ॥ १२९ ॥

व्रजेश्वर आह । अयि कथमयमाक्रुश्यते व टुः प्रायशो यशोऽवतामीदृशि दुष्करे कर्मणि नर्मणि नयच्चैरुत्साहसाहसवर्धनं क्रियते तेन नासमयज्ञोऽयम्, अस्य वचसि च सिद्धानुरागोऽयं वत्सः ॥ १३० ॥

सिद्धानुराग इति, अन्यथा निरुत्साहत्वेऽस्य श्रमानुभवः स्यादिति भावः ॥ १३० ॥

इत्येवमवसरे परितः परितस्थुषां गिरिवरधरस्य रम्यमूर्तेर्माधुरीधुरीणतामवलोकयतां लोकयतां धियमतीत्य रतिमुद्वहतां हतांहसामन्योन्यरसालापः समजनिष्ट ॥ १३१ ॥

लोकयतां लोकव्यापारवर्तीं धियम्· अतीत्य· अतिक्रम्य, "यती प्रयत्ने" पचादिः ॥ १३१ ॥

तथाहि । अहो अहोभिरेतावद्भिरपीदं नानुभूतं भूतसभूतं लावण्यमस्य ॥ १३२ ॥

भुवः पृथिव्यास्तंसभूतम्· अलंकाररूपम् ॥ १३२ ॥

पश्य पश्य ।

उद्यत्पार्ष्णिपदाग्रचुम्बितमहीपृष्ठं क्वियत्कुञ्चित-
श्रीमज्जानुविभुग्नवङ्क्षणतटव्यालोलमालाञ्चलम् ।
हेलोद्धूनितवामबाहुमहसा व्यालव्यकक्षस्थलं
वामं पार्श्वममुष्य पश्य विवलीवल्लीकमृज्वायतम् ॥ १३३ ॥

विभुग्नात् किंचिद्वक्रीभूताद् वङ्क्षणस्य· ऊरुसंधेस्तटाद् व्यालोलं दक्षिणपार्श्वे प्रत्युच्चलं मालाञ्चलं यत्र तत् । विगता वलीरूपा वल्ली यत्र तत् ॥ १३३ ॥

किंच ।

लीलाभुग्नकफोणि कोमलकरप्रादेशपार्श्वोल्लस-
च्छ्रोणीसीम वलद्वलीकमनृजुव्यालम्बिमालाञ्चलम् ।
सम्यङ्न्यासविलासिना पदतलेनालम्बितक्ष्मातलं
पार्श्वं दक्षिणमस्य पश्य यदहो निर्व्याजमुद्भ्राजते ॥ १३४ ॥

कोमला च सा करस्य प्रादेशस्तर्ज्जन्यङ्गुष्ठविस्तारो यत्र सा च पार्श्वे· उल्लसन्ती च श्रोणीसीमा यत्र तत् । वलन्ती पुष्टीभवन्ती वली यत्र तत् ॥ १३४ ॥

किंच ।

स्वेदक्लिन्नकपोलमण्डललसत्कर्णावतंसीकृत-
श्यामाम्भोरुहकेशरा मदभरव्याघूर्णमानेक्षणा ।
अद्यान्यैव निरीक्ष्यते क्षितिधरोद्धारश्रमेऽपि श्रमा-
भावव्यञ्जकरञ्जकस्मितसुधा वक्त्रद्युतिर्द्योतते ॥ १३५ ॥

स्वेदक्लिन्नेति केशरविशेषणम् । अद्य वक्त्रद्युतिरन्यैव द्योतते ॥ १३५ ॥

अन्यतश्च, केचिदाहुरहो रहोऽन्तरमिदमतिमात्तिमर्दनमपि

सकलापदां पदाम्बुजयोः संचरणाभावेन मूकमिव कलहंसकयुगलं हंसकयुगलं यथा सरोजायजाग्रदपि निद्रितम् ॥ १३६ ॥

रहोऽन्तरमिदम्, एतदपि रहस्यमेकमित्यर्थः । किं तत्, पदाम्बुजयोः संचरणाभावेन कलहंसकयुगलं मधुरपादकटकद्वयं मूकमिव । दृष्टान्तोऽनुकम्पार्थं कः ॥ १३६ ॥

कादाचित्कचित्कमनीयविन्यासविशेषेण यथास्थितविन्यासविपर्यासपर्यासन्नस्पन्दे तस्मिन्नेव पदतामरसेऽमरसेवाभिनन्दिते कृतनादमाकस्मिकीं चलनशङ्कां समासादयति ॥ १३७ ॥

कादाचित्कः कदाचिद्भवश्चासौ चित् उपलब्धिस्तया कमनीयश्च यो विन्यासविशेषस्तेन यथास्थितविन्यासस्य विपर्यासे विपर्यये सति पर्यासन्नः स्पन्दः किंचिच्चलनं यत्र तथाभूते पदतामरसे कृतो न झणत्कारो येन तत् हंसकयुगलं चलनशङ्कां धारयति ॥ १३७ ॥

पुनरन्यतः केचिदूचुः । अहो पश्यत पश्यत ।

एकेन पाणिकमलेन विलासवंशीं
बिम्बाधरेऽनुगमयन् मृदु वादयंश्च ।
अद्रीन्द्रधारणविधौ विगतश्रमत्व-
मावेदयन् रसयति प्रियवर्गचेतः ॥

तस्मिन्नेव समये वटुराह, भोभो अतिसाहसमिदम् ।

मा वादय स्वमुरलीं निनदैरमुष्याः
शैलो यदि स्खलति वा द्रुत एव वा स्यात् ।
तर्हि त्वमद्य विधिना कतमेन बन्धून्
रक्षिष्यसि प्रियवयस्य न दृश्यते सः ॥

यदस्या निर्वंशिकाया वंशिकायास्तथैव प्रभावः प्रभावः, यत्

खलु निनदेन शैलमपि विद्रावयति, विद्रावयति स्रोतस्वतीस्रोतः, स्वतीवानर्थकारिणीयम् ॥ १३८ ॥

विद्रावयति विद्रुतं गलितं करोति, स्रोतस्वत्या नद्याः स्रोतो विद्रावयति द्रव एव द्रावो गलितत्वं विगतद्रावं, कठिनं करोतीत्यर्थः, अत एव सुष्ठु अतीवानर्थकारिणी ॥ १३८

सहचरा ऊचुः,

कुसुमासव गिरिरयं नो रचन् महासारो महासारोपद्रवतो द्रवतो निजवपुषः क्रिमाघातेन नाशयिष्यति, नैतत् ॥ १३९ ॥

महासारो महाधृतिः, महतामासाराणां धारापातानाम् उपद्रवतो नोऽस्मान् रचन् । द्रवतः द्रवीभावाद् हेतोः ॥ १३९ ॥

महासाराः खलु पृथुनानन्दथुना नन्दन्तोऽपि द्रुतं द्रुतं चात्मानं स्तम्भयन्ति भयं तिलमात्रमप्यत्र नास्ति श्रूयतां मुरलीनादो नादोधूयतां चित्तवृत्तिरिति ॥ १४० ॥

द्रुतं शीघ्रं, द्रुतं क्लिन्नं, न चित्तवृत्तिरादोधूयतां नातिचपलीक्रियताम् ॥ १४० ॥

परतश्चापरे निजगदुः ।

अहो मूढतामूढतादृशकोपस्य पश्यत शतमखस्य, अस्मिन्नपि सर्वसुहृदि हृदि वैरायते ॥ १४१ ॥

शतमखस्य मूढतां पश्यत, अस्मिन्नपि ऊढस्तादृशः कोपो येन तस्य ॥ १४१ ॥

अयं गोत्रोन्नेता भवति स हि गोत्रक्षयकरः
स गृह्णात्येवायं जगति शतकोटिं वितरति ।
स एकाशापालो दिशति सकलाशाफलमयं
कथं धत्तेऽलज्जो हरिरिति स नाम्नः प्रतिकृतिम् ॥ १४२ ॥

गोत्रः पर्वतो गोत्रं कुलं च । स इन्द्रः शतकोटिं वज्रं गृह्णात्येव, अयं तु शतानां कोटिं वितरति ददाति । एकाशापालः पूर्वदिक्पालः, सकलानामप्याशाफलम् अभीष्टं दिशति । स इन्द्रः । प्रतिकृतिं प्रतिच्छायाम् ॥ १४२ ॥

अन्यतश्चान्ये जगदुः, अहो किमेतत् ।

अमी प्रलयमारुताः प्रलयवारिदा अप्यमी
इदं प्रलयदुर्दिनं प्रलयवारिवारोऽप्ययम् ।
भ्रमः किमयमेव नः किमियमिन्द्रजालक्रिया
कुतोऽपि न पराभवः क्वचन कोऽपि कस्याप्यभूत् ॥ १४३ ॥

वारिवारो जलसमूहः ॥ ४३ ॥

अन्यतश्च ।

मधुरगोष्ठीनिष्ठ्यूतः कश्चन*वसुधानवसुधाप्रवाह इव परस्परपरमरमणीयसौहृदहृदयालुतया कोमलपरिमलपरिहासहासपेशलः समजनि समजनिकौतुकः कथारम्भः ॥ १४४ ॥

समा जनिरुत्पत्तिर्यस्य तथाभूतं कौतुकं यत्र सः, कथारम्भः कौतुकं च युगपदेवाभूदित्यर्थः ॥ १४४ ॥

तथाहि ।

गोवर्धनं सुमुखि यावदयं बिभर्ति
राधे न तावदिह लोलय लोचनान्तम् ।
मास्ताममुष्य पृथुवेपथुभङ्गभाजः
पाणिस्थलस्खलितशैलकृतो विपाकः ॥ १४५ ॥

लोचनान्तमपाङ्गं न लोलय न चपलीकुरु ॥ १४५ ॥

* नवसु नवसु इति समाकारताद्योतनाय कश्चनेत्येवं पदविभागाभावोऽवसेयः । पूर्वस्मिन् पण्डितपत्त्रे कैलाश इत्येवं तालव्यशकारो गतः स दन्त्योऽवसेयश्च ।

इति मधुमधुरध्वनिभृतनिभृतपरिहासपेशलया श्यामलया परिहसितासितापाङ्गी कृपाङ्गीकृतत्रपा तामाह ॥ १४६ ॥

कृपया अङ्गीकृता त्रपा यया सा, त्रपां प्रति कृपां कृत्वैव तां स्वीकृतवतीत्यर्थः, तेन तदानीं त्रपाया दौर्बल्याच्चापल्यमेव ध्वनितम् ॥ १४६ ॥

मा हरिणलोचने निजमदं मदन्तरे संचारय स्वयमुपदिश्यतामात्मा ॥ १४७ ॥

हरिणलोचने इति, तवैव लोचनचाञ्चल्यं स्पष्टीभवतीति भावः ॥ १४७ ॥

अन्याह । महासारोऽयं येन धराधराधीशोऽयं कन्दुकीकृतस्तस्य समुपचितवैदग्ध्यविपाकयापि कया पिधीयतां सारः ॥ १४८ ॥

महासारो महाधृतिमान् । सम्यगुपचितो विवृद्धो वैदग्ध्यस्य विपाकः परिपाको यस्यास्तादृश्यापि कया वा अस्य सारो धैर्यं पिधीयतां क्षीणीक्रियतां, लुप्यतामिति यावत् ॥ १४८ ॥

तामन्याह ।

सारोऽस्य शैलधरणेऽद्य निरीक्ष्यते यो
मन्ये तदेव गरिमाणममन्दमस्य ।
मुग्धे घनस्तनि तव स्तनकुम्भलक्ष्मी-
संदर्शनेऽपि यदि वीक्ष्यत ईदृगेव ॥ १४९ ॥

तामन्येति, हन्त हन्त सा त्वं सा त्वमेव भवसि मन्मुखेन स्वगुणं वाचयितुमेव त्वमेवमुपक्राम्यसीत्याह, सारोऽस्येति । तदैवास्य सारस्य गरिमाणम् अमन्दं मन्ये अहं, यदि तव स्तनकुम्भस्यापि लक्ष्म्याः शोभाया अपि संदर्शनेऽपि ईदृगेव सारो धैर्यं वीक्ष्यते, तेन कर्णकण्डूयनादिव्याजेन कञ्चुलिकान्तव्यक्तं स्तनप्रान्तमस्मै दर्शयित्वा संदेहोऽयं निरस्यतामिति नर्म द्योतितम् ॥ १४९ ॥

अपराह ।

पराहतपरिहासा हासावलोकलोकरमणीयं रमणीयन्त्रणाकारिना-
गरिमगरिमगम्भीरमालोकयत यतमाना मधुरिमाणमस्य ॥ १५० ॥

पराहतपरिहासाः परिहासं परित्यज्य यतमाना यत्नवत्यः सत्यो-ऽस्य मधुरिमाणम् आलोकयत । कीदृशं, रमणीनां यन्त्रणाकारिणो नागरिम्णो नागरत्वस्य गरिम्णा गौरवेण गम्भीरम् ॥ १५० ॥

वामेन पाणिकमलेन बिभर्ति शैलं
वंशीं परेण मृदु वादयते सलीलम् ।
आलोकते * व्रजजनं नयनाञ्चलेन
शृण्वन् सुहृज्जनगिरं च शिरो धुनीते ॥

अथ राधिकामन्यतमाह ।

माहमन्यथा निगदामि पश्य पश्य ॥ १५१ ॥

शिरो धुनीत इत्यनुमोदनार्थम् ॥ १५१ ॥

इह सकलजनावलोकलीला-
क्रमघटिते भवदाननावलोके ।
द्रुतमुदितममी वपुर्विकारं
गिरिधरणोत्थितमेव तर्कयन्ति ॥ १५२ ॥

सकलजनकर्मको योऽवलोकस्तल्लीलाक्रमेण इव घटिते भवत्या आननावलोके सति अमी सकलजनाः ॥ १५२

अथ काचिदवादीदवादी ते व्याहारो हारो यथा कण्ठे कर्तुमर्हः ।
तथाहि ।

राधालोकनजातसंमदभरात् प्रस्वेदकम्पादिकं
श्रीगोवर्धनधारिणोऽस्य वपुषो दृष्ट्वा विकारोत्करम् ।

* प्रतिजनमिति पाठान्तरम् ।

श्रान्तोऽयं गिरिधारणेऽभवदिति स्नेहादमी गोदुहः
पर्यन्ताश्रयिणो गृहीतलगुडास्तं धर्तुमारेभिरे ॥ १५३ ॥

अवादी निर्विवादः। पर्यन्ताश्रयिणः· उपान्तस्थायिनः सन्तः॥ ५३॥

इत्युक्ते सति मन्दाक्षमन्दाक्षमावृण्वत्या स्वमप्यतिमुग्ध्या विधुमुख्या विधुरितमनसस्ते गिरिधरणोद्यता नतेनैव तेनैव नयनाञ्चलेन यदि तथैव सकृद् ददृशिरे ॥ १५४ ॥

मन्दाक्षेण लज्जया मन्दाक्षं यथा स्यात् तथा· आवृण्वत्या विधुमुख्या राधया ते गिरिधरणोद्यता अतिमुग्ध्यास्तेनैव नयनाञ्चलेन नतेनैव लज्जया नम्रेणैव यदि सकृद् ददृशिरे दृष्टास्तदा ॥ १५४ ॥

तदा दरोदञ्चदञ्चलेन मुखमावृत्य निजसखीभिरप्यलक्षितं स्मितं चकार। इत्येवमवसरे वटुराह तान्।

मा भैष्ट भो व्रजभुवो लगुडैर्यतध्वं
कण्डूयने न वपुषो धरणीधरस्य।
शश्राम नामलबलः स बलानुजोऽयं
साराधिका न न रुचोऽपहतौ प्रगाते ॥ १५५ ॥

लगुडैर्धरणीधरस्य गोवर्धनस्य वपुषः कण्डूयने निमित्ते न यतध्वं, नहि युष्मल्लगुडबलैरस्य धारणं संभवति किंतु कण्डूयनमेवेत्युपहासः।

ननु तर्हि कस्तावदत्रोपायस्तत्राह, स प्रसिद्धो रामानुजोऽयं न शश्राम न श्रान्तोऽभूत्, यतोऽमलबलः, तत्र लिङ्गं सारेण बलेन· अधिका रुचयः कान्तयः· अपहतौ· अपघाते सति न न प्रगाते न न गच्छन्ति, अपितु गच्छन्त्येवेत्यर्थः, अस्य तु ताः कान्तयो वर्तन्त एवेति सर्वान् ज्ञापयितुमिष्टोऽर्थः, सा प्रसिद्धा राधिका· आननरुचा स्वमुखकान्त्या· उपहतौ कम्पादिभिरुपघाते निमित्ते प्रगाते प्रयातीत्ययमर्थस्तु कृष्णम्॥१५५॥

तदा तदाकर्ण्य गम्भीरस्मयमानः स्मयमानः कुवलयवलयसुकुमारः कुमारः श्रीव्रजपुरपुरंदरस्य दरस्यन्दमानमानसरसमाननचन्द्र-

मधुरिमाभिषिक्तदशनोस्रसहस्रसहकारचारुणारुणाधरपरिस्पन्देन मन्देन मधुरेण व्याजहार हारहासविकसद्वक्त्रास्तमेव वटुम् ॥ १५६ ॥

गम्भीरस्य स्मयस्य विस्मयस्य मान आश्रयः, "मानश्चित्तोन्नतौ ग्रह" इति विश्वः,दर ईषत् स्यन्दमानः क्षरन् बहिर्निःसरन् मानसरसो यत्र तद्यथा स्यात् तथा व्याजहार । अरुणाधरस्य परिस्पन्देन संचलनेन । कथंभूतेन, आननचन्द्रस्य मधुरिम्णा· अभिषिक्तानां दशनानाम्· उस्रसहस्रस्य किरणसहस्रस्य सहकारेण मेलनेन चारुणा मनोहरेण । हारेण हासेन च हारवद्धासेन वा विकसत् प्रकाशमानं वक्त्रं यस्य सः । अनेन किंचिल्लज्जानम्रत्वं च ध्वनितम् ॥ १५६ ॥

वटो स्वभावो हि भावो हिततरोऽयममीषां मयि किमुपहस्यते सा राधिकापि कापि मम मूर्तिस्तथात्वेनामीभिर्न ज्ञायते मयि निरन्तरायनिरन्तरायमानबालभावेन तेनेदमतिशोभनमेव बहुलमतः परं कौतुकं किमिति ॥ १५७ ॥

साराधिकापि· अतिबलिष्ठापि काप्यनिर्वचनीया मम मूर्तिः शरीरमिति सर्वान् ज्ञापयितुमिष्टोऽर्थः, सा प्रसिद्धा राधिका काप्यनिर्वाच्या मम मूर्तिरपि परमप्रेयसीत्वान्मच्छरीराभिन्नाशीत्यपरोऽर्थस्तु वटुं राधिकावर्गं च । निरन्तरायो निर्विघ्नश्चासौ निरन्तरमविरतमेव· अयमानः प्रसरंश्च यो बालभावो वात्सल्यं तेन ॥ १५७ ॥

अतः परं तानेवाह, भो भो मदेकवत्सलाः· अलमलम्बो * लम्बोदरजनकजन्मान्यानां सामान्यानां साधारण्येन, तदुपरमत परमतमात् परिश्रमात्· अयमहमश्रान्तमश्रान्त एव ॥ १५८ ॥

लम्बोदरजनको महेशस्तज्जन्मा अन्यानां वो युष्माकं सामान्यानामितरजनानां साधारण्येन साधर्म्येण· अलम् तत् तस्मात्, अयमहमित्यात्मानं तर्जन्या दर्शयति, अश्रान्तं निरन्तरमेव, अश्रान्तः श्रमरहितः ॥ १५८ ॥

* संधिः प्राग्वत् ।

अथ कुतोऽपि पुनः पुरत एव तनयवत्सला वत्सलालसा यथा माता माता सा व्रजेश्वरी निजगाद ॥ १५८ ॥

माता गौः, "माता गौर्यादिजननीगोब्राह्मण्यादियोषिती"ति मेदिनी ॥ १५९ ॥

वत्स· अभूत् कालो भूयान् निरशनतया खिद्यसे, तात कामं वपुः क्षामं जातं पतितमुदरं विश्लथश्चेलबन्धः, अपि स्वेच्छाचारी सविधसुलभे शाद्वले नात्ति शस्यं गवां स्तोमः पश्यन्ननशितवतः शुष्यदास्यं तवैतत् ॥ १६० ॥

अनशितवतः· अभुक्तवतस्तव· आस्यं मुखं शुष्यत् पश्यन् सन् गवां स्तोमोऽपि शस्यं नात्ति न खादति ॥ १६० ॥

तदिदमावेदयामि दयामिन्नमना मनागधुना मुञ्च वेणुविद्याविनोदं विनोदञ्चनेन पाणेर्मयैवापवर्ज्यमानमाननकमले कियदशान दशा ननु यदा यादृगुत्पद्यते तदुचितमाचारमाचारविदो वदन्ति॥१६१॥

दयामिन्नमनाः कृपाक्लिन्नचित्ता, पाणेर्विनोदञ्चनेन हस्तस्योद्गमनं विनैव· अशान भुङ्क्ष्व मयैवापवर्ज्यमानं दीयमानम्, दानपर्याये· "अपवर्जनमंहति"रित्यमरः ॥ १६१ ॥

तेन स्त्यानमस्त्यानमदुष्णाभावमपूपमपूपहति सरसरसं दधि दधिरस्मि ॥ १६२ ॥

स्त्यानं स्निग्धम्· अपूपमस्ति, "स्त्यानं स्निग्धे प्रतीघाते" इति विश्वः । आनमन्· ईषद् घटमान उष्णाभावो यत्र तत् । पूः पावित्र्यं न विद्यते तस्या उपहतिर्यत्र तत् । दधि कीदृशं, सरेण सरसं स्वादवत् । दधिरस्मि धारयन्त्यस्मि, "धाञ्कृसृजनिनमिभ्य" इति किः ॥ १६२ ॥

समुचितसौभ्रात्रो भ्रात्रोनमकुतूहलिना हलिना सह सहचरैश्च समं समञ्जसतया भोक्तुमर्हसि ॥ १६३ ॥

समुचितं सौभ्रात्रं यस्य सः, अत एव भ्रात्रा हलिना सहेति तत्प्रवर्तनार्थमनुरोधो दर्शितः ॥ १६३ ॥

वटुराह, वयस्य समुचितमेवाह माता मा तावदन्यथा कर्त्तव्यमिदं मयापि बुभुक्षयाक्षयापरितोषिणा भूयते ॥ १६४ ॥

अक्षयोऽपरितोषो यस्य तेन ॥ १६४ ॥

स रसवानाह, नाहमम्ब मुहूर्तमपि गतं मन्ये तमन्ये तर्कयन्ति कथं बहुकालं का लङ्घयितुं युज्यते गीर्गुरूणां कियतायता क्षणेन क्षणेन तत् करणीयम् ॥ १६५ ॥

रसवानिति, तत्खेदोपशान्त्यर्थं स्वसारस्य व्यञ्जना । का गीर्लङ्घयितुं युज्यत इति, भ्रान्त्युक्त्या बुभुक्षा तु न मे संभवतीत्यर्थः । तस्मात् कियता क्षणेनायता गच्छता सता । तद् भोजनम् ॥ १६५ ॥

इति स्थिते शतमन्युरथ मन्युरथमिवारूढोऽपि लोकरावणैरावणैधमानगतिजवः पविपविचकरो घनाघनानुपर्युपर्युपोढगाढरागतयागतया किमियतायतायतेन कालेन तच्च वृत्तमिति दिदृक्षया क्षयाय व्रजभुवां कृतारम्भोऽरम्भेणीव* कुपितः समेत्य समालोकयामास ॥ १६६ ॥

मन्युः कोप एव रथस्तम् आरूढस्तथापि लोकान् रावयति क्रन्दयतीति तादृशेन ऐरावणेन ऐरावतेन हेतुना एधमानो गतिवेगो यस्य सः, पविना वज्रेण पवित्रः सौम्यः करो यस्य सः, पवित्र इति हिंस्रत्वद्योतनाय विरुद्धलक्षणया, घनाघनान् वृष्टिशीलमेघान् उपर्युपरि उपोढा धृता या गाढरागता निविडप्रणयिता तया अगतया निश्चलया, मेघगणोपरि निबद्धनिश्चलप्रेमतयेत्यर्थः, "वर्षुकाब्दा घनाघना" इत्यमरः, "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिष्वि"त्यादिना द्वितीया, व्रजभुवां क्षयाय कृतारम्भः, इयता एतावता आयतेन दीर्घेण कालेन अयता

* परसवर्णः प्राग्वत् ।

गच्छता सता तत्र गोष्ठे किं वृत्तमिति दिदृक्षया समेत्य, अरं शीघ्रं, भोगीव सर्प इव ॥ १६६ ॥

भित्त्वा गाढपटीयसीं घनघटामूर्ध्वं गतैः सानुभि-
र्वर्षाभावसुखस्थितद्विजमृगव्रातस्य भूमीभृतः ।
तस्यामेखलमास्थितैर्जलधरैः कल्पान्तवान्ताम्बुभि-
र्धौतप्रान्तभुवो व्यधायि सुषमा मुक्तातपत्राकृतिः ॥ १६७

गाढा निबिडा च सा पटीयसी-अतिदक्षा चेतितां घनघटां भित्त्वा-ऊर्ध्वं गतैः सानुभिः- तस्य पर्वतस्य- आमेखलं मेखलामभिव्याप्य-आस्थितैः, तथा च हरिवंशे "स भृतः संगतो मेघैर्गिरिः सव्येन पाणिना । गृहभावं गतस्तत्र गृहाकारेण वर्चसा" ॥ इति, कल्पान्ते प्रलय इव वान्तानि-अम्बूनि यैस्तादृशैरपि तैर्धौता क्षालिता प्रान्तभूर्यस्य तस्य गोवर्धनस्य सुषमा- अतिशोभा- एव व्यधायि । मुक्तामयस्यातपत्रस्येवाकृतिर्यस्यां सा ॥ १६७ ॥

तथा निरीक्ष्यापीश्वरंमन्यो मन्योरन्तं जिगमिषुर्महाप्रलयदुर्दिनाकृतिकृतिनि जलमुचां कुले निर्घातध्वानमुचि नमुचिसूदनोऽनुतापरुषा परुषायितहृदयो दयोपरोधरहितोऽहितोद्यमाय पुनरपि समुत्तेजनां जनयामास, तदुपरोधात् पुनस्तेऽपि संभूय भूयसा सामर्थ्येन ववृषुः ॥ १६८ ॥

नमुचिसूदन इन्द्रः, अतितापेन या रुट् तया, दया गोषु- उपरोधो भगवति ताभ्यां रहितः, अहितमपकारस्तदुद्यमाय ॥ १६८ ॥

अथ पुरंदरदरतस्तदुपदिष्टा दिष्टान्तकारिणो महाप्रलयसमीरणा रणार्थमिव संनद्धा गिरिवरोद्धृतये कृताभियोगा भियो गाढतरां पदवीं विरचयन्ति स्म ॥ १६९ ॥

दिष्टान्तो नाशः, "दिष्टान्तः प्रलयोऽत्यय" इत्यमरः । गिरिव-

रोद्धृतये गोवर्धनमुच्चालयितुम् । भियो भगवत्क्रोपोत्थस्य स्वभयस्य गाढतरां पदवीम् ॥ १६९ ॥

तथा सति ।

बाह्ये कष्टातिवृष्टिः खरतरमरुतः संप्रपातः शिलानां
ज्योतिःपातोऽम्बुदानामपि यदजनयन् क्लेशमुर्वीधरस्य ।
लीलापीयूषवर्षैर्मुखकमलमधूद्गारिभिः श्वासवाते-
र्हासज्योत्स्नाप्रपातैस्तनुमणिकिरणैस्तं हरिः संजहार ॥ १७० ॥

तद्यथा, बाह्ये· अतिवृष्ट्याद्याः क्लेशमजनयन्नकुर्वन्, तथैव लीलापीयूषवर्षादिभिस्तैस्तैरेव यथाक्रमेव तत्तत्तुल्यं तं क्लेशं संजहार ॥ १७० ॥

किंच ।

बहिर्मेघा विद्युद्व्रततिततयः शक्रचापोऽतिवृष्टि-
र्मुकुन्दोऽन्तर्मेघः कुवलयदृशो निष्प्रकम्पाश्च शम्पाः ।
धनुश्चैन्द्रं बर्हाभरणमतुला कापि लावण्यवृष्टिः
स बाह्यान्तस्तुल्योऽधिकमिदमसौ कौस्तुभोऽन्तर्विवस्वान् ॥ १७१ ॥

अधिकमिदमिति, विवस्वतो बहिर्वर्तमानत्वेऽपिमेघान्तर उपलब्धेः ॥ १७१ ॥

अथ भूयोऽपि भूयोऽपिधीयमाननिजश्रमाशङ्कं मधुमधुरं धुरंधरो माधुर्यधुर्यसदसः सरसतरं तरङ्गितनयनाञ्चलो मुरलीकलं कलङ्करहितसितमयूखमुखो वादयामास ॥ १७२ ॥

भूयोऽपि पुनरपि, भूयो बहुतरं यथा स्यात् तथा· अपिधीयमाना· आव्रियमाणा निजश्रमाशङ्का येन तद्यथा स्यात् तथा, माधुर्यधुर्यसदसो माधुर्यधारिण्याः सभाया धुरंधरो मुख्यः ॥ १७२ ॥

तदाकर्ण्य केचिदाहुः ।

अहो पश्यत पश्यत ।

न्यञ्चद्दामभ्रवणकुवलयं तन्वतो वेणुनादं
लीलोदञ्चज्जयति गिरिभृतो दक्षिणं भ्रूलतायम् ।
मद्भङ्ग्यापि प्रभवति भगवान् किं पुनर्वामदोष्णा
धर्तुं क्षोणीधरमिति कथयत् तत्प्रकारं च बिभ्रत् ॥ १७३ ॥

केचित् पौराः । लीलया· उदञ्चत्·उद्गच्छत्· भ्रूलतायं कर्तृ· इति कथयत् सत्· जयति । किं तत् । मद्भङ्ग्यापि मम भ्रुवोर्भङ्ग्यापि क्षोणीधरं धर्तुं प्रभवति किं पुनर्दोष्णेति । भगवान् पराक्रमी कीर्तिमान् वा, "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्व"त्यमरः ॥ १७३ ॥

॥ शेषमग्रे ॥

---

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य ॥

### ॥ एकादशः परिच्छेदः ॥

१ ॥ ते ऽन्वेषणयोग्याः सन्ति ॥—नैसर्गिका गरीयांसश्च भाषादोषाः पूर्वस्मिन्परिच्छेदे विस्तरेण वर्णिताः । भाषायाः समाजस्य सहावस्थाननियामकत्वाद् ज्ञानपरिष्कारस्यैकस्मात्पुरुषात्पुरुषान्तरं प्रति कुलात्कुलान्तरं प्रति च प्रापकमार्गरूपतया च पूर्वोक्तदोषप्रतीकारोपायानां गाढतमो विचारो ऽवश्यं कर्तुं युज्यते ॥

२ ॥ न सन्ति सुलभाः ॥—आत्मानमुपहासास्पदमकृत्वा न कोपि सांसारिकसर्वभाषाणामेकस्या अपि स्वीयाया भाषाया वा परिष्कारं पूर्णं कर्तुं शक्नोतीति निरर्थकं विमर्शं न करोमि । तदर्थं च मनुष्यैरवश्यं सर्वदा शब्दानां प्रयोगो नियतैकविज्ञानतात्पर्येणैव करणीय इतीच्छा तु सर्वे मनुष्याः सममेव ज्ञानिनो भवेयुर्भाषेरंश्च सुव्यक्तानि सुज्ञातान्येव विज्ञानान्यधिकृत्य । इदं च सर्वेषु मनुष्येषु ज्ञानं तदभावं वा एकरूपमेव साधयितुं शक्नोमीति वृथागर्वरहितेन न केनापि पुंसा आशासितुं शक्य-

ते । किं च यो महार्हजिह्वया साधु ज्ञानमेव संपादनीयमिति मनुष्याणां भाषणेन स्वल्पमधिकं वा प्रमार्जनकेनैव भाव्यमिति वा चिन्तयति स संसारे न कथमपि प्रेक्षावान् अभिधीयेत ॥

३ ॥ परं त्वेवमपि शास्त्रमावश्यकम् ॥—परं त्वापणे क्रयविक्रयव्यवहारे च स्वस्वभाषणप्रकाराणामेव परिग्राह्यत्वे ऽपि प्राचीनानां ग्रामीणपुरुषाणां कथोपकथानामपरिहार्यत्वेपि च तर्कशीलानां शास्त्रिणां भूयसां विवादानां परिहारस्योपायानां प्रदर्शने प्रयतमानत्वेपि च, मन्ये ये तत्त्वान्वेषणाय प्रयतन्ते तैरवश्यं चिन्तनीयं यदनवधानेन प्रयोगे क्रियमाणे निसर्गतः संभाव्यानां गूढत्वसंदिग्धत्वानेकार्थत्वदोषाणां वैधुर्येणास्माभिरवश्यं शब्दाः प्रयोक्तव्या इति ॥

४ ॥ शब्दानामन्यथा प्रयोगो भ्रमाणां महाकारणम् ॥—यतो यः शब्दानां दुष्प्रयोगेण जगति प्रसृतान् भ्रमसंकरगूढत्वान्यथाग्रहान् साधु विचारयिष्यति, स लोकव्यवहृता भाषा मनुष्येषु ज्ञानपरिष्कारं जनयति, आहोस्विद् ज्ञानप्रतिबन्धं करोतीति संदेहस्योत्थितौ किमपि कारणं लप्स्यते । यदा लोका वस्तून्यधिकृत्य चिन्तयेयुः स्वविमर्शान् शब्देष्वेव योजयेयुर्विशेषतश्च यदा तैर्नीतिविषया विवक्ष्यन्ते तदा कति तथाविधाः सन्तीति, किं च यदि स्वप्रयुक्तपदबोध्यानां विज्ञानानामत्यन्तं विसंकुलत्वे ऽस्थिरत्वे च कदाचिच्च सर्वथा ऽभावे वा ध्वनिमात्रफलपर्यवसायिनि भाषणानि तर्काश्च भवेयुस्तर्हि को नाम विस्मयीत । एवंविधानां विमर्शानां तर्काणां च यथार्थज्ञानं व्यक्तनिर्णयं च विनैव केवलं गूढत्वं भ्रमश्च फले भवेतां तर्हि मन्ये न कोप्याश्चर्यमावहेत ॥

५ ॥ हठः ॥—मनुष्याः स्वगतभाषणे शब्ददुष्प्रयोगजन्यं काठिन्यमुपलभन्ते । परं तु परैः सह संभाषणे तर्कवादे चैतज्जन्या अव्यवस्था अत्यन्तं स्फुटाः सन्ति यतो भाषाया ज्ञानतर्कादीनां परस्परसंप्रदानसाधनीभूतप्रणालिकारूपतया वस्तुगतं ज्ञाननिर्झरमदूषयन्नपि शब्ददुष्प्रयोगकारी पुरुषो मनुष्याणां साधारणलौकिकव्यवहारबाधकज्ञानसाधकान्

बहुतरान् मार्गान् अवरुणद्धि । व्यक्तास्थिरार्थविधुरान् शब्दान् प्रयुञ्जन् स्वस्मिन्परस्मिंश्च भ्रमानेव केवलमुत्पादयति । यश्च बुद्धिपूर्वमेवं करोति स तत्त्वयथार्थज्ञानयोः शत्रुरेव मन्तव्यः । किं चैवमपि सर्वाणि शास्त्राणि गूढानेकार्थशब्दैर्निरर्थकसंदिग्धोक्तिभिश्चात्यन्तं पूरितानीति कृत्वा समनस्कं सूक्ष्मबुद्धिं चात्यल्पं नैव वा ऽधिकज्ञानिनं मताग्रहिणं वा कुर्वन्तीति न कमप्याश्चर्यं जनयेत् । तत्त्वपरिरक्षणेन तत्त्वाध्यापनेन चोपजीवतां पुरुषाणां बुद्धेर्धर्मत्वेन व्यवहारात् । वस्तुतो धर्मश्च प्रायः केवलं गूढानां भ्रामकाणां वा पदानां सदोषभ्रामकप्रयोगात्मा मनुष्यानधिकमज्ञानावृतान् भ्रमेणाग्रहिणश्च करोति ॥

६ ॥ निरर्थकजल्पनं च ॥ —यत्किंचिद्वादविशेषस्य ग्रन्थे निरीक्षिते सति गूढानामस्थिराणामनेकार्थानां च पदानां फलं मनुष्यस्य बोधमनवधार्यैवापरिष्कृत्यैव वा ऽर्थशून्यशब्दप्रलापः कोलाहलश्च न तु ततोन्यत्किमपीत्युपलप्स्यते । यद्बोधाय शब्दाः प्रयुज्यन्ते तद्विज्ञाने वक्तृश्रोत्रोरुभयोरनैकमत्ये तर्कः कथमपि वस्तुविषयो भवितुं नार्हति किं तु पदमात्रविषयक एव । येषां शब्दानामर्थो वक्तृश्रोतृभ्यामुभाभ्यां परस्परानुमत्या न व्यवस्थापित एवंविधाः शब्दाः प्रायशः प्रयुज्यन्ते ऽतस्तयोर्बुद्धिभ्यां परस्परसंमतोर्थो नावधार्यते ऽपि तु शब्दमात्रम् । तदा तत्पदबोध्यतया चिन्तितानां वस्तूनां सर्वथा भिन्नत्वात् ॥

७ ॥ पक्षिगृहगोधिके ऽत्रोदाहरणम् ॥—जतुका पक्षिर्भवतु मा वा, तन्न प्रकृते विवक्षितम् । सा च यद्रूपा वस्तुतो ऽस्ति ततोन्यवस्तुरूपा भवति न वा, अथ वा वस्तुतो ये गुणा जतुकायां वर्तन्ते तेभ्योन्येपि गुणास्तस्यां सन्ति न वेति संदेहस्य सर्वथा व्याहतत्वात् प्रकृतः प्रश्न एतावन्मात्र एवास्ति यद्, ययोः पदार्थयोस्ते द्वे नामनी कल्प्येते तयोरुभयोरन्यतरस्य वा ऽपूर्णविज्ञानवत्तां स्वीकुर्वाणयोर्मध्ये ऽयं प्रश्नः वक्ता श्रोता चोभौ यादृशशुद्धविज्ञानसमुदाये पक्षीतिपदं प्रयुञ्जाते, स सर्वोपि विज्ञानसमूहो जतुकायामुपलब्धुं शक्यते न वेति परीक्षया अपूर्णस्यापि तद्विज्ञानस्य पूर्णत्वसंपत्तये पक्षिणो जतुकाया वा नामाधिकृत्य वास्तविको

भवितुमर्हति । परं त्वयं प्रश्नो नैकतरपक्षस्य साधको बाधको वा ऽस्ति, किं तु वस्तुतत्त्वपरीक्षणाय केवलं जिज्ञासूनामेव । अथ वा ऽयं प्रश्नो विवदतोरेवास्तु ययोरेकतरो जतुका ऽस्ति पक्षिजातीयेति विदधाति परश्च नेति निषेधति । ततश्चायं प्रश्नः केवलमनयोरेकस्योभयोर्वा शब्दयोरर्थमधिकृत्यैव । एवं सति तत्पदद्वयबोध्यमिश्रविज्ञानद्वयमेकरूपमेवोभयोर्वादिनोर्न भवतीति हेतोरेक इमे द्वे नामनी सामानाधिकरण्येन विशेष्यविशेषणभावापन्ने भवितुमर्हत इति कथयति नेति च परः कथयति । यदि च तन्नामद्वयबोध्यार्थे एकमतौ भवेतां तर्हि तद्विषयकविवाद एव न संभवति, यतः, तथा सति यदि तौ विवदेतां तर्हि शीघ्रमेव स्फुटमुपलभेतां यत्पक्षीति साधारणतरनामबोध्यानि सर्वाणि शुद्धविज्ञानानि जतुकापदबोध्यमिश्रविज्ञानेषूपलभ्यन्ते न वेति । ततश्च जतुका ऽस्ति पक्षिजातीयेति संदेह एव नोदियात् । किं चात्रैतद्विचारणीयम्, अवधानपूर्वकं परीक्षणीयं च । जगति भूयिष्ठा विवादा न सन्ति केवलं वाचिकाः शब्दार्थविषयाश्चेति । अपि च यदि वादिप्रयुक्तपदानि लक्ष्यन्ते, यत्किंचिदर्थबोधनावसरे यथा तैरवश्यं भाव्यं तथैव तत्तत्पदबोध्यशुद्धविज्ञानानां नियतः समुदायस्तत्तदर्थतया व्यवस्थाप्येत तर्हि ते विवादा न स्वयमेव विरताः शीघ्रमेव नष्टा भवेयुः । कोऽस्ति विवादाभ्यासः कथं च ते स्वस्य परेषां वा हिताय साधु प्रवृत्ताः, ये सर्वदा केवलं विवदन्त एव ये वा केवलं वादेषु जल्पकथायां च स्वजीवनानि यापयन्ति । यदा सर्वैः क्रियमाणं गूढार्थकानेकार्थकपदप्रयोगं सर्वथा ऽकुर्वाणं कमपि वादिनं द्रक्ष्यामि तदा प्रमातत्त्वशान्तिकृते एवायं युध्यति न पुनः निरर्थकयशःसंपत्तये महत्त्वाकाङ्क्षया पक्षपातेन वा युध्यतीति तं कथयिष्यामि ॥

८ ॥ केन चित्परिमाणेन पूर्वोक्तभाषादोषाणां तत्समुद्भूतकाठिन्यस्य च परिहाराय वक्ष्यमाणनियमास्तावदुपयोक्ष्यन्ते यावत्कोऽपि बुद्धिमत्तरो ऽधिकनैपुण्येनैनं विषयमधिकविचारार्हं निश्चित्य लोकान् प्रति स्वविमर्शानुसारिचिन्तनाय न विवशीकुर्यात् ॥

॥ तत्र प्रथम उपायो विज्ञानं विना पदस्याप्रयोगः ॥—यदर्थं पदं प्रयुज्यते तद्विज्ञानविधुराणां अर्थशून्यपदानां प्रयोगस्याकरणाय पुरुषेण सावधानेन भवितव्यम्। यो नैसर्गिकबुद्धिः समवेदना विद्दूभूभागस्योजन इत्यादीनि पदानि परैः सह संभाषणेषु कथं पुनः पुनः प्रयुज्यन्ते तत्तत्पदप्रयोक्तारश्च यद्बोधाय प्रयुञ्जते तद्विज्ञानानि स्वात्मसु नावधारयन्ति किं तु तथाविधेष्ववसरविशेषेषु हेतूपन्यासस्य स्थाने प्रायशः क्रियमाणं शब्दमात्रोदीरणमेवेति स्मरिष्यति स सर्वोप्यिमं नियमं सर्वथा ऽनावश्यकं न प्रत्येष्यति। एवंविधानां शब्दानामुचिततराः केप्यर्था नैव सन्ति, येषु ते प्रयोक्तुं शक्येरन्। परं तु कस्यापि पदस्य केनापि विज्ञानेन सह नैसर्गिकसंबन्धाभावादिमे ऽन्ये च शब्दाः कण्ठतो ऽभ्यसनीया उद्घोषणीयाश्च तैर्यैस्तत्पदप्रतिपाद्यानि विज्ञानानि स्वात्मसु नावधारितानि। यदि मनुष्याः केवलं स्वगतमपि सुबोधं भाषितुमिच्छेयुस्तर्हि तएनं नियममावश्यकं वक्तुमर्हन्ति ॥

९ ॥ द्वितीयतः, भाववाचकेषु पदबोध्यानि विज्ञानानि व्यक्ततया ऽवधारणीयानि ॥—द्वितीयतो, मनुष्यो यत्किंचिद्विज्ञानतात्पर्येण पदानि प्रयुङ्क्ते इत्येतावन्मात्रेण नार्थसिद्धिः। पदबोध्यतया वक्तृतात्पर्यगोचराणां विज्ञानानां शुद्धत्वे ऽमिश्रितत्वे वा ऽवश्यं तैः सुज्ञेयैर्व्यक्तैश्च भवितव्यम्। मिश्रितत्वे तु नियतैर्भाव्यम्। एतदुक्तं भवति। आत्मनि व्यवस्थापितानां शुद्धविज्ञानानां यथार्थः समुदायः तेन पदेन तथा संबद्धो ऽपेक्षितो येन तत्पदं तस्यैव नियतस्य शुद्धविज्ञानसमुदायस्य लिङ्गं स्यान्नान्यस्य। अयं नियमो भाववाचकेषु नामस्वत्यन्तमावश्यको विशेषतश्च नीतिशब्देषु यत्र येभ्यः प्रतिमानरूपेभ्यस्तेषां विज्ञानानि संगृह्यन्ते तथाविधस्य नियतनैसर्गिकविषयस्याभावात् तद्वाच्यानि विज्ञानानि सर्वथा विसंकुलानि भवितुमर्हन्ति। न्याय इति शब्दः सर्वैरेव मनुष्यैरुदीर्यते ऽथापि प्रायो ऽनियतार्थक एवा ऽविस्पष्टार्थको वा भवति। यावद् मनुष्यः स्वात्मनि तन्मिश्रविज्ञानघटकावयवानां यथार्थं ज्ञानं न संपादयति तावत् सर्वदा एवमेव भविष्यति। किं च यदि तन्मिश्रविज्ञानमवयवशो विभज्येत

तर्हि ततोपि विभागः कर्तुं युज्येत यावत्तद्घटकानि शुद्धविज्ञानानि ज्ञायेरन् । अपि च यावदेतन्न क्रियते तावदस्य पदस्य दुष्प्रयोगमेव कुर्यात् । तथा हि न्यायो वा भवत्वन्यद्वा । एवमपि यत्र यत्रायं शब्द उपलभ्येत तत्र सर्वत्र सर्वदा ऽवयवशो विभागाय मनुष्येण प्रयतितव्यमिति न ममाशयो ऽपि तु तस्य पदस्यार्थस्तथा साधु परीक्षणीयस्तद्वाच्यमिश्रविज्ञानावयवाः स्वात्मनि तथा निर्धारणीया येन स यदैव इच्छेत्तदा परीक्षितुं विज्ञानं नियमयितुं च शक्नुयादित्येतत्करणमन्तत आवश्यकमेव । विध्यनुसारेण परेषां स्वस्य वा हितस्यानुष्ठानमित्येवं यो न्यायपदबोध्यं विज्ञानं रचयति स यदि न्यायपदार्थघटको विधिः को ऽस्तीति सुव्यक्तं साधु न जानीयात्तर्हि तस्य न्यायविज्ञानं स्वयमेव विसंकुलमपूर्णं च भवेदिति सुस्पष्टमेव । मन्ये एतद्याथार्थ्यस्यातियत्नसाध्यतया बहवो मनुष्या मिश्रभावानां मिश्रविज्ञानस्य स्वात्मस्वेवं याथार्थ्येन नियमनादुपरमितव्यमिति चिन्तयिष्यन्ति । परं त्वेवमपि यावदेतन्न क्रियते तावच्चैतदाश्चर्यकरं यत्तेषां मनःसु भूयिष्ठं गूढत्वं वैसंकुल्यं च भवतः, परैः सह तेषां संभाषणे च महाननर्थकः प्रलापश्च संभवतीति त्ववश्यं वक्तव्यमेव ॥

१० ॥ किं च तानि द्रव्यानुरूपाणि विविक्तानि चावश्यं भवेयुः ॥—द्रव्यवाचकनामसु पदानामुचितप्रयोगाय विज्ञानानां नियतत्वमपेक्ष्य किं चिदधिकमपेक्ष्यते । एषु नामभिः सत्तया ऽपि पदार्थस्वरूपैर्भवितव्यम् । परं तु क्रमश एनं विषयं यथावसरं विस्तरेण वर्णयिष्यामि । शास्त्रीयतत्त्वजिज्ञासासु तत्त्वविषयकेषु वादेषु चेदं यथार्थग्रहणं सर्वथा ऽऽवश्यकमेव । यद्यपि च साधारणसंवादेषु लौकिकव्यवहारेष्वप्येतस्य प्रचारः साधु भविष्यति, तथापि, मन्ये, नैतदाशासनीयम् । लौकिकानां ज्ञानानि लौकिकसंवादानुसारीणि भवन्ति, किं च तयोरुभयोः कामं विसंकुलत्वे ऽपि आपणिकादिसमाजकार्याणि साधु निर्वाहयन्ति । वणिजः कामुकाः पाचकाः सीवकादयश्च, स्वस्वव्यावहारिककार्यनिर्वाहकान् शब्दान् जानन्ति । एवमेव च मन्ये, शास्त्रिणो वादिनो ऽपि यदि स्वस्य परेषां च सुव्यक्तबोधनं विवक्षेयुस्तर्हि ते ऽपि जानीयुरिति ॥

११ ॥ तृतीयत, औचित्यम् । [ शिष्टव्यवहारानुसरणम् ] ॥—तृतीयतः स्वप्रयुक्तपदबोध्यविज्ञानानि नियतान्येव मनुष्या अवधारयन्तीत्येतावन्मात्रेणापि न कार्यसिद्धिरपि तु लोकव्यवहारे यद्बोधाय तानि तानि पदानि प्रयुज्यन्ते तत्सजातीयानां तदभिन्नानां वा बोधायैव पदानां प्रयोगायापि मनुष्यैरवश्यं सावधानैर्भवितव्यम् । यतः शब्दानां विशेषतश्च पूर्वरचितभाषीयशब्दानामेकैकव्यक्तिमात्रज्ञेयत्वाभावादपि तु वणिग्व्यवहारलौकिकसंभाषणयोः साधारणपरिच्छेदकतया केनापि स्वेच्छया लोकव्यवहृतप्रतिमानस्य परिवर्तनं न कर्तुं युज्यते नापि तत्तत्पदसंबद्धानि विज्ञानानि परिवर्तयितुं शक्यन्ते । अथ वा अन्ततो यद्येवं करणस्यावश्यकता तदा ऽवश्यं तेन परान् प्रति तज्ज्ञापनीयम् । संभाषणे मनुष्यस्य तात्पर्याणि ज्ञेयानि भवितुमर्हन्ति ज्ञातानि वा सन्त्येव । इदं च मनुष्यतात्पर्यावधारणं यत्र मनुष्यैर्लोकव्यवहारानुसरणं न क्रियते तत्र ऋते पुनः पुनर्विवरणाद्, जिज्ञासाभ्यः, क्लेशकराक्षेपादीनां करणाच्च न कथमपि भवितुमर्हति । भाषायां औचित्यं च महता सौकर्येण परान् प्रति वक्तृतात्पर्यग्रहोपधायकं साधनमत एव च तत्रास्माकमवधानमभ्यासश्चापेक्ष्येते विशेषतश्च नीतिशास्त्रधर्मशास्त्रघटकेषु शब्देषु । शब्दानां यथोचितप्रयोग उचितार्थश्च तेभ्यो ऽभ्यसनीयौ येषां लेखेषु भाषणेषु च सुस्पष्टतमविज्ञातृत्वं प्रतीयते ये च तेषु विज्ञानेषु स्वीयान् शब्दान् योग्यतया ऽन्यूनानतिप्रसक्तरूपेण च प्रयुञ्जते । अस्य भाषाया औचित्यानुसारेण पदानां प्रयोगस्य सर्वदा ऽर्थबोधकत्वरूपफलोपधायकत्वाभावे ऽपि प्रायशः स्वीयेषु संभाषणेषु यथोचितपदप्रयोगं कुर्वन्नेवंकरणचतुरस्य मनुष्यस्य तदज्ञानदोषात् परिरक्षितो भवति ॥

१२ ॥ चतुर्थतः तेषामर्थस्य ज्ञापनम् ॥—चतुर्थतो यतो लोकव्यवहारो नैवं साक्षात्कमप्यर्थं पदैः सह योजयति येन मनुष्याः कस्मिन्नर्थे याथार्थ्येन पदानि प्रयोक्तव्यानीति सर्वदा निश्चिनुयुः । किं च यतो मनुष्याः स्वज्ञानपरिष्काराय प्रायिकलोकव्यवहृतविज्ञानेभ्यो भिन्नान्येवाकलयन्ति । तदर्थं चाप्रामाण्यदोषशङ्कया विरलमेव परिगृहीतान् नवीनान्

शब्दान् रचयन्ति, नवीनार्थतात्पर्येण प्राचीनमेव वा पदं प्रयुञ्जते । अतः पूर्वोक्तनियमेषु परीक्षितेषु सत्सु पदानामर्थस्य ज्ञापनाय पदस्यार्थं निश्चेतुं कुत्र चिदिदमस्त्यावश्यकं यत्र लोकव्यवहारे ऽपि नियतो ऽर्थो न भवति यथा भूयःस्वत्यन्तमिश्रविज्ञाननामसु यत्र वा पदस्यैव विवादकारणतया विवादस्य मुख्ये विषये संदेहो भ्रमो वा भवति ॥

१३ ॥ अर्थज्ञापनं च त्रिधा ॥—पदप्रतिपाद्यविज्ञानानां नानाजातीयकत्वेनावसरविशेषे पदाभिधेयविज्ञानानां ज्ञापनप्रकारोऽपि भिद्यते । यतो यद्यपि पदानामुचितार्थस्य ज्ञापनाय लक्षणकरणमिति युक्तः पन्थास्तथापि लक्षणनिर्वाच्ययथार्थार्थकानामपि पदानां सत्त्वात्कानि चित्पदानि नैव लक्षितानि भविष्यन्ति । किं चैभ्यो द्विविधेभ्यो ऽपि पदेभ्यो भिन्नप्रकाराण्यपि शुद्धविज्ञानानां भावानां द्रव्याणां च नामानि कुत्र चिदुपलप्स्यन्ते ॥

१४ ॥ (१) शुद्धविज्ञानेषु पर्यायशब्दैः प्रदर्शनेन वा ॥—प्रथमतः शुद्धविज्ञाननाम्नः प्रयोगं यदा मनुष्यस्तेषां विज्ञानानामबोध्यतां पश्यंस्तेषु संदेहस्य शङ्कया वा करोति तदा भाषाफलनियमानुरोधेन विवशो भूत्वा स्वतात्पर्यप्रकाशनाय स्वोच्चरितपदबोध्यविज्ञानज्ञापनाय च प्रवर्तते । उक्तदिशा लक्षणकरणेनेदं संपादयितुं शक्यते, ऽतश्च यदा पर्यायशब्दैनैतत्कर्तुं न शक्यते तदा एषामेक एव प्रकारो ऽवशिष्यते । तत्र प्रथमं, यस्मिंस्तच्छुद्धविज्ञानमुपलभ्यते तद्द्रव्यस्य नाम तन्नाम्नो ऽर्थं प्रत्याययिष्यति तान् प्रति ये तद्द्रव्यं तत्पदाभियत्वेन जानन्ति । इत्थं च कं चिन्नागरिकं प्रति 'फ्युइल्मार्ट' इतिपदाभिधेयवर्णविशेषज्ञापनाय वर्षाकाले पतिष्णूनां शुष्कपत्राणां वर्णो इत्येतावत्कथनमेवालं भविष्यति । द्वितीयतः कस्यापि शुद्धविज्ञानार्थस्य ज्ञापनस्य नियतः प्रकारस्तद्विज्ञानोपस्थापकतद्विषयप्रदर्शनेन तत्पदप्रतिपाद्यविज्ञानस्य वस्तुतः श्रोत्रात्मनि प्रत्यायनमेव ॥

॥ शेषो ऽग्रे भविता ॥

## अथ संस्कृतसमाजाभिधसभावृत्तान्तवर्णनम् ।

अथ ज्येष्ठकृष्णप्रतिपदि संस्कृतसमाजनाम्न्यां सभायां वृत्तायाः कथाया वर्णनम् । तत्र प्रथमं गङ्गाधरशास्त्री वैज्ञानिकमतमित्थमुपन्यस्यति स्म । विज्ञानमेवैकं तत्त्वमिति वैज्ञानिकास्तदित्थम् । रज्जुसर्पमरुमरीचिका, गंधर्वनगर, स्वाप्निकगजारोहणादिज्ञानानि ऋते विषयेभ्यो ज्ञानबहिर्भूतेभ्यो यथा स्वरसमनुभवमधिरोहन्ति, तथैतानि घटपटादिविषयकज्ञानानि स्वात्मकं तंतं विषयमवगाहमानानि न बाह्यविषयसत्वोपष्टम्भलब्धजीवनानि यश्चासौ घटज्ञानात् पटज्ञानं विभिन्नमिति विषयवैचित्र्यपक्षपातो ज्ञानानां सोपि स्वात्मकविषयवैचित्र्यनिबन्धेन ज्ञात एवेति नातिरिक्तबाह्यविषयसत्तां प्रमापयति न कां चन वैचित्रीमकल्पयतो भवतोपि बाह्यविषयवैचित्र्यमात्रदेव ज्ञानवैचित्र्यनिर्वाहः । ज्ञानवैचित्र्येण विषयवैचित्र्य विषयवैचित्र्येण वैचित्र्यं ज्ञानस्येति स्पष्टमितरेतराश्रयात् ॥ तस्माच्च बाह्यविषयाभ्युपगमो ज्ञानवैचित्र्यं निर्वहति । किंतु ज्ञानस्यैवायमतिशयो यत् ज्ञानं स्वात्मनैव ज्ञानान्तरेभ्यः स्वात्मानं विमोचयत् विषयविषयिभावावगाहि वर्तत इति । अन्वयाहि चैष पक्षः प्राच्यैः ॥ सहोपलम्भनियमादभेदो नीलतद्धियोरिति । नहि नीलस्य प्रत्ययमन्तरेण आत्मानं प्रत्ययो वा नीलमन्तरेणात्मानं प्रतिलभत इति हि तदर्थः ॥ यश्च आशामोदकानि नापनयन्ति क्षुधं वैज्ञानिकीं परं तु आपणवीथिकास्थान्येवेत्यधिक्षेपः सोप्यसावधस्ताद्धृताञ्जलिरिति सुखितमास्महे इति शम् ॥ ततो राममिश्रशास्त्री ।

तदेतत्तार्किकेभ्यो न रोचते ॥ योयं मरुमरीचिकादिदृष्टान्तावष्टम्भवशादेष्टव्यो बाह्यविषयोपप्लवः सोयं मरुमरीचिकाप्रत्ययानामभ्रान्तत्वे सति स्याद् प्रमात्मकज्ञानस्यैव साधनबाधनक्षमतायाः सर्वतैर्थिकसिद्धान्तसिद्धत्वात् । नच बाह्यविषयानसहिष्णुनापि भवता मरुमरीचिकादिप्रत्ययप्रामाण्यमभ्युपेयं तथा सति ज्ञानानां भ्रमप्रमादिव्यवहारनिबन्धनसकम्पनिष्कम्पप्रवृत्त्युपधायकत्वानुपपत्तेः । तस्मान्मरुमरीचिकादि-

दृष्टान्तप्रतीतीनां भ्रमात्मकतया न बाह्यविषयमोषोपष्टम्भभावोऽपि यच्च न कांचन ज्ञानवैचित्रीमप्रकल्प्य बाह्यविषयचित्र्यमात्रेण ज्ञानवैचित्र्यनिर्वाहः । ज्ञानवैचित्र्येण विषयवैचित्र्यं विषयवैचित्र्येण च ज्ञानस्येति स्पष्टमितरेतराश्रयादित्युक्तं तदपि विषयानवधाननिबन्धनम् । ज्ञानं हि द्व्यात्मकतया त्मानं लभते विषयात्मना तद्विषयविषयात्मना चेति सर्वानुभवसिद्धम् । तथा च विचित्रभावेनावस्थितविषयविषयकत्वेन ज्ञानवैचित्र्यं विषयवैचित्र्यं तु स्वत एव विषयवैचित्र्यं किंज्ञाप्यमिति जिज्ञासायां तु ज्ञानान्तरज्ञाप्यमेवेत्युत्तरं न तावता भवदुक्तान्योन्याश्रयावकाशः यतो ज्ञानं विषयं परिछिन्दत् आत्मानमश्नुते विषयस्तु न तथेति सिद्धान्तात् ॥ यच्च सहोपलम्भनियमादित्युक्तं तदसाधकं विपक्षबाधकतर्कशून्यत्वात् । विभिन्नत्वेनाभिमतयोरपि घटपटयोर्घटपटाविति समूहालम्बने सहोपलम्भात् किंच यदि स्युरबाह्या विषयास्तदा गृहे विनिर्णीतघटः पुमान् गेहे घटाभावकालेऽपि घटमासादयेत् नासादयेच्च समुत्पन्नविपरीतधीर्घटवत्यपि घटम् ॥ किंच तत्स्यादालयविज्ञानं यन्नीलादिकमुल्लिखेत् । तत्स्यात्प्रवृत्तिविज्ञानं यद्वेदहमास्पदम्, इति भवन्मतेऽपि प्रवृत्तिविज्ञानालयविज्ञानयोर्नीलाद्युल्लेखित्वानुल्लेखित्वाभ्यामेव विशेषो ग्रहीतव्यः इति स्वानुभवमतिरोधाय परिच्छिनत्तु भवानेव विषयविशेषमपरिच्छिद्य ज्ञानं न स्वात्मानं लभतइति किंच अनवधृताज्ञानसंशयविपर्यासस्य ते कथं कथायां प्रवेशः परकीयास्ते त्वया दुरवधारणाः परपुंवृत्तिस्वरूपत्वात् तेषां परबुद्धेश्चासाक्षात्कारात् इति ॥

ततो गङ्गाधरशास्त्री । अत्रायं वैज्ञानिकानामाक्षेपनिक्षेपः ॥ न तावन्मरुमरीचिकादिदृष्टान्तानां भ्रमत्वात्साधनाक्षमत्वं सुवचम् ॥ तेषां भ्रमत्वस्यैवासिद्धेः ॥ तथा हि ॥ बाह्यविषयसिद्धेरुत्तरमेव हि जलाद्यभाववति जलादिप्रकारताकतया तेषां भ्रमत्वं वाच्यं नान्यथा ॥ विज्ञानस्यैवैकस्यास्मन्मतेऽङ्गीकारेण सर्वत्रैव घटादिविरहस्य सत्तया सर्वेषामेव ज्ञानानां भ्रमत्वप्रसक्तेर्भवन्मतसिद्धभ्रमलक्षणस्य तैरनङ्गीकारात् ॥ प्रत्युत भ्रमात्मकज्ञानमेव तैर्नाङ्गीक्रियते भ्रमत्वप्रमात्वविभागस्यैव शशविषाणायमानत्वात् ॥

न चैवं सति सकम्पनिष्कम्पप्रवृत्त्याद्युपपत्तिर्न स्यादिति शङ्कनीयम् ॥ भवन्मतेपि वस्तुतो भ्रान्तस्य तत्र भ्रान्तिमननुव्यवस्यतस्तत्र निष्कम्पप्रवृत्तेरानुभाविकतया वस्तुतो भ्रमे प्रवृत्तिजनकत्वाभावस्यैवमेव वस्तुतः प्रमायाम्प्रवृत्तिजनकत्वस्य चासिद्धेः ॥ अपि तु तत्र भ्रान्ततामप्रमातृताञ्च गृह्णत एव पुरुषस्य तादृशप्रवृत्त्यादिदर्शनेन भ्रान्तिज्ञानत्वतदभावयोरेव निरुक्तप्रवृत्त्यादिजनकतायाः सर्वमते सिद्धतयाऽस्मन्मतेऽपि विज्ञाने भ्रमत्वाख्यवैलक्षण्यग्रहे प्रवृत्त्यभावस्य तदभावे च प्रवृत्तेरुपपत्तेः ॥ तादृशवैलक्षण्यग्रहश्च भवन्मतेऽपि तद्वति तत्प्रकारकत्वग्रहप्रयोजकीभूतया प्रत्यक्षादिसामग्र्या प्रयोज्य इति मन्मतेऽपि तुल्यमेव ॥ अपि च विज्ञानवैचित्र्यस्य विषयवैचित्र्यनिबन्धनत्ववादे विषयवैचित्र्यस्य ज्ञानवैचित्र्यनिबन्धनत्वस्यैव वाच्यतयाऽन्योन्याश्रयः ॥ यत्तु ज्ञानं द्व्यात्मकतयाऽऽत्मानं लभते विषयात्मना तद्विषयविषय्यात्मना चेति विषयवैचित्र्यनिबन्धनमेव ज्ञानवैचित्र्यं विषयवैचित्र्यं तु स्वतः सिद्धमेव ज्ञानान्तरज्ञाप्यवैचित्र्यवदिति चाभिदधुस्तद्वैज्ञानिकवादस्य विज्ञानातिरिक्तवस्त्वभाववादरूपतया विज्ञाने द्व्यात्मकत्वस्यैवासिद्धेः पराहतम् ॥ विषयवैचित्र्यस्य स्वतः सिद्धत्वं त्वाशामात्रमेव ॥ एवं सति तार्किकमते पञ्चमपदार्थस्य विशेषस्यासिद्धेः ॥ घटपटयोर्भेदोपपादनाय तदारम्भकभेदोपपादनक्रमेण तदन्त्यारम्भकभेदोपपादनाय हि विशेषा आश्रीयन्ते । तद्विषयस्य स्वतःसिद्धवैचित्र्याङ्गीकारेऽन्ते खण्डाविवाहन्यायायितमेव ॥ ज्ञानान्तरज्ञाप्यत्वं तु पुनस्तज्ज्ञानवैचित्र्यसापेक्षमेवेति पूर्वप्रदर्शितन्यायेनैव ज्ञानएव स्वतस्सिद्धं वैचित्र्यं किमिति नाश्रयेः ॥ आवश्यकमेव प्रत्युत तवैव विषयवैचित्र्याप्रयोज्यमेव ज्ञाने स्वतःसिद्धं वैचित्र्यं स्वप्नभ्रममदादिज्ञानवैचित्र्योपपादनस्यावश्यकत्वात् ॥ यदपि सहोपलम्भनियमादभेदो नीलतद्धियोरित्यस्य निराकरणं विपक्षबाधकतर्कशून्यत्वात्समूहालम्बनज्ञाने घटपटयोः सहोपलम्भेऽपि भेदस्य सर्वैरङ्गीकारेण व्यभिचाराच्चेत्यूचुस्तन्नियमपदाननुसन्धानमूलकमिति विशदमेव ॥ अवयव्युपलम्भस्य मतान्तरे तार्किकमते च धान्यराश्युपलम्भस्यावयवधान्योपलम्भव्याप्योपलब्धिरूपतया तदभेदस्य स्वीकारेणान्वयव्याप्तेर्घटघटाभावादीनां

सहोपलम्भाभावेनाभेदाभावस्य स्वीकारेण व्यतिरेकव्याप्तेश्च सुलभतया तेन भेदस्यैव साधनं स्यादिति सम्भावनाया अपि दूरोत्सारितत्वात् ॥ घटपटयोः क्व चिदेकोपलब्धिविषयत्वेऽपि स्वविषयकत्वव्यापकविषयकत्वस्य घटादावभावेन घटाभेदापादनस्य पटेऽशक्यत्वाच्च । नियमपदेन व्याप्तेरेवाभिधानात् । अत एव ज्ञानत्वावच्छेदेन स्वविषयकत्वविवक्षणे कस्यापि तथाविधव्यापकविषयताया अभावेन स्वाभिमतासिद्धेर्यत्किञ्चिज्ज्ञाने स्वविषयतायाः स्वीकारे प्रागुक्तसमूहालम्बनात्मकज्ञानविषयताया घटादौ सत्त्वादभेदापत्तिरिति न ॥ स्वविषयकत्वव्यापकविषयताकत्वसम्बन्धेन स्ववैशिष्ट्यस्यैव स्वाभेदनियामकत्वाभ्युपगमात् ॥ न च ययोरुत्पन्नविनष्टघटयोरङ्कुरयोर्वा सहैव ज्ञानमजनि तयोरैक्यापत्तिरिति वाच्यम् ॥ तादृशयोरप्रसिद्धेरैक्येऽपि दोषाभावाच्च ॥ अङ्कुरान्तरग्रहप्रतिबन्धकसामग्रीसत्त्वे तत्स्थले जिघृक्षिताङ्कुरग्राहकसामग्रीसमनैयत्येन तस्या अङ्कुरान्तरग्राहकत्वसत्तया समूहालम्बननैयत्यविघटकत्वेन भेदस्य सुवचत्वाच्च ॥ एवं बाह्यविषयानभ्युपगमवादे गेहे विनिर्णीतघटः पुमान्घटाभावकालेऽपि घटमासादयेन्नासादयेच्च घटसत्तादशायामपि घटाभावं निश्चिन्वन्नस्तमिति दूषणमपि न ॥ त्वन्मतेऽपि घटं निश्चिन्वतो गेहे घटेन्द्रियसंयोगसमनन्तरमेव तदुपलब्धिरिष्टा विशेषणतया भुवि घटाभावग्रहतश्च तदभावानुव्यवसायः न तु केवलं वस्तुतो घटसत्तायास्तदभावसत्तायाश्च तत्तद्ग्रहप्रयोजकत्वम् ॥ तथैव मन्मते घटात्मकविज्ञानवतोऽपि गृहघटात्मकविज्ञानेन्द्रियात्मकविज्ञानयोस्सम्बन्धस्यैव तत्प्राप्तिप्रयोजकताया अभ्युपगमेन तत्र वैचित्र्येणैव घटात्मकविज्ञानानुदयात्तदिन्द्रियस्यासम्बन्धेन तत्प्राप्तेरनापत्तेः ॥ अयमेव किल विज्ञानवादिनां त्वन्मताद्विशेषः ॥ यद्भवान् प्रत्यक्षादिगोचरवस्तुजातस्य वास्तविकीं सत्तामभ्युपैति ॥ स च त्वन्मते रज्जुसत्तादशायां सर्पस्येव सर्वस्याप्यवास्तविकीं विज्ञानस्यैवानादिव्यवहारगोचरीभूतानेकतत्तद्धर्मरूपेण वास्तविकीं सत्ताम् ॥ नैतावता क्वचिदपि व्यवहारेऽतिप्रसङ्गोऽप्रसङ्गो वा ॥ एवमेव किल वेदान्तिनोऽप्यपर्यनुयोज्या भवन्ति ॥ अत एव तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदिति नीलाद्युल्लेखित्वस्य

मया स्वीकारेऽपि न विज्ञानातिरिक्तवस्तुसत्ताभ्युपगता भवति पारमार्थिकव्यावहारिकत्वाभ्यां विविक्तविषयत्वात् ॥ एवञ्चानवधृताज्ञानविपर्ययस्य ते कण्डूयायां प्रवेशः परबुद्धेरप्रत्यक्षत्वादितिप्रभृति सर्वमेव विचार्यमाणे स्वतो विशीर्यते व्यवहारदशायां व्याप्त्यादिग्रहस्य साध्यादिनिश्चयस्य प्रत्यक्षशाब्दादेश्च तत्रैव तादृशसामग्रीबलान्ममापि तादृशसामग्र्यात्मकविज्ञानबलादेवोपपत्तेस्त्वदपेक्षया व्यवहारे विसंवादाभावादिति कृतम्बहुनेति ॥

ततो राममिश्रशास्त्री किंच बाह्यविषयसत्तामनभ्युपेत्य लज्जात्मकस्वीयज्ञानेन स्वीयज्ञानात्मकस्वीयज्ञानात्मकज्ञानेनोपशमननिर्वाहेपि प्रकुपितत्रिदोषस्य विमूर्छितपुंसः संजीविनी पुनरकिंचित्करी स्यात् अचेतयमानस्य तस्य स्वीयज्ञानात्मकसंजीवन्या विरहसत्वात् स्थिराया बाह्यभूतसंजीवन्याश्चानभ्युपगमात् ॥ न च स्वीयज्ञानविरहेपि जीवतो ज्ञानात्मकप्रदानावच्छिन्नज्ञानात्मकसंजीवन्या उपकारकत्वमिति साम्प्रतम् ॥ अन्यदीयज्ञानात्मकस्य वस्तुनोन्यदीयोपकारकारित्वे चैत्रीयज्ञानात्मकाशनेन मैत्रस्य पज्ञातिरिति साधुरिति समर्थितः कार्यकारणभावः ॥ किंच ज्ञानाभावकालेपि अनुव्यवस्येत् न व्यवस्येच्च ज्ञानोत्तरमपि अनुव्यवसायात्मकज्ञानस्य स्वविषयीभूतव्यवसायसत्तानैरपेक्ष्यात् यदि च ज्ञानात्मकज्ञानज्ञानात्मकात्मनोर्ज्ञानात्मकः संनिकर्षोनुव्यवसायमसंनिकर्षश्च तदभावमिति सूक्ष्ममप्यालोकयसे अङ्ग तर्हि विषयसत्वोदासीनयोर्निरुक्तात्मनोः संनिकर्षतदभावयोरनुव्यवसायतदभावनियामकयोः कोयं विषयसत्तया सहानुगमननियमः कदाचिदनुव्यवसायतदभावौ तावदतिपतेतां विषयसत्तामिति किं न स्यात् किं च सहोपलम्भनियमेन सिषाधयिषितोयमभेदः पारमार्थिक उतापारमार्थिकः पारमार्थिकत्वे नास्मत्क्षतिः पारमार्थिकत्वं हि ते स्वीयज्ञानानतिरिक्तात्मकत्वं तच्च ममापि त्वदीयज्ञानेभीष्टम् । स्वस्मिन्स्वतादात्म्यात् वस्तुसतोस्मदभिप्रेतस्य भेदस्य च त्वदीयज्ञानानतिरिक्तात्मना अभेदशतकेनाप्यपलपितुमशक्यत्वात् अन्यथा चैत्रीयज्ञानात्मकेन भेदेन अभेदसिद्धिप्रतिरोधं त्वमपि कस्मान्नाभ्युपगच्छेः । न द्वितीयः, अभेदस्य अपारमार्थिकत्वं हि ज्ञाना-

तिरिक्तात्मकत्वम् तच्चास्माकम् इष्टं न तव इति फलितं नः प्रयासकुसुमेन, किं चानुमितेः प्राक् साध्यप्रमिथ्यात्वाद्याधुनिकवैदान्तिकमतप्रतर्दकदूषणानि चोपयुक्तानि सिद्धिरपि न सुकरेत्यादिदूषणशतकं प्रमाणशास्त्रकुशलैः स्वयमूह्यन्तएवेति कृतं वाचां विस्तरैरिति शम् ॥

अथ भाद्रपदकृष्णप्रतिपदि नियतसमये श्रीयुतबाबूप्रमदादासमित्रमहाशयमन्दिरे संस्कृतसमाजनाम्नी सभोपातिष्ठत तत्रभवतामध्यक्षवराणां कतिपयसभासदां च कार्यवशात्तत्रानुपस्थानादतीतसभावृत्तान्तालेखनाच्च समुपस्थिताः सभ्याः सभाकृत्यमारब्धुं किं चिद्दनिच्छव इव प्रत्यैयन्त। परं तु वन्ध्यं दिनं मा भूदिति धिया सभाप्रोत्साहकेन प्रेरितः केशवशास्त्री पूर्वसभाप्रक्रान्तेऽवाध्यक्षवरैः सम्यक् प्रतिपादितेऽपि वेदान्तविषये पुनः सन्दिहान इवेदमाह। तद्यथा। यद्यपि स्वाप्निकविषयाणां जागर्तौ जागराविषयाणां च स्वप्ने तयोः पुनः सुषुप्तौ तस्याश्च स्वप्नजागरणये र्बाधितत्वाद्बाधितस्य च मिथ्यात्वाद्विषयमात्रस्य मिथ्यात्वेन ज्ञानभेदकाभावाज्ज्ञानघनैकब्रह्मण एवावशेषादद्वैतं सिध्यति तथापि ब्रह्मप्रतिबिम्बभूतानां जीवानां स्वगतभूतपूर्वसुखदुःखादिभोक्तृत्वभ्रमस्मरणाद्ब्रह्मणश्च तदभावाद्बिम्बप्रतिबिम्बभावाच्च तयोर्वैधर्म्येण द्वैतमापद्यते ॥

ततो ढुण्ढिराजशास्त्री, व्यावहारिकसत्तादशायां युगपत्सुखदुःखादिभोगवैचित्र्यं तदुपभोक्त्रानन्त्यसद्भावमन्तरा न घटतइत्यनन्तास्सुखदुःखादिभोक्तारः कल्प्यन्ते। ते च जीवापरपर्याया ब्रह्मप्रतिबिम्बान्येव। पारमार्थिकसत्तादशायां तु तदुपभोग्यानां सुखदुःखादीनां मिथ्यात्वाद्भोगासिद्धौ चिदेकमयानां जीवानां ब्रह्मसारूप्यान्निराबाधमेवाद्वैतमित्यवोचत्।

ततः केशवशास्त्री—पारमार्थिकसत्तादशायां विषयाणामिव तदुपभोगस्य तदुपलब्धेर्वाऽलीकत्वेऽपि कथं नाम जीवा भूतपूर्वमात्मभ्रममनुस्मरन्तो ब्रह्मणो न विभिद्येरन्नित्यभ्यधात्।

ततः सभाप्रोत्साहकः—नूनं घटपटादिविषयाणां परमार्थेऽलीकत्वेऽपि न तदनुभवस्मृतेरलीकत्वं शक्यते वक्तुम्। नहि कश्चित्स्वप्नादावनु-

भूतानां विषयाणां जागरे मिथ्यात्वेऽपि तदनुभवस्मृतिमपलपति । तथा-प्यात्ममोहस्पृष्टानां जीवानां भ्रमकल्पनाशून्येन ब्रह्मणा सहाभेदो दुरुपपाद इव प्रतीयते । तत्रेदमुच्यते । न तावज्जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावो मुखादर्शमुखादिलौकिकपदार्थसदृशो येन तयोर्भेद आपद्येत किं तु भास्वराणां सूर्यादीनां जलादावुपसंक्रान्तानां किरणानां च बिम्बप्रतिबिम्बभावेन सदृश एव विवक्ष्यते । यथा जलादिगतं सूर्यप्रतिबिम्बं साक्षात्सूर्यनिर्गतकिरणपुञ्जात्मकमेवेति न ततो विभिद्यते तथा विभोः परमात्मनोऽन्तःकरणावस्थिता जीवाभिधा अंशास्ततोऽभिन्ना एव परं त्वेवं परमात्मनोऽभिन्ना अपि जीवा उपाधिसंबन्धात् ततो भिद्यन्ते । अत एव तेषां सुखदुःखादिसंबन्धः । यथा सूर्याभिन्ना अपि किरणास्ततो निर्गच्छन्तो जलमुपसंक्रम्य सूर्याद्भिद्यमानाः सन्तो जलकम्पादिमन्तः सौरदाहकशक्तिशून्याश्च भवन्ति । तथा च द्वैतापत्तिरित्युच्यते चेद्व्यावहारिकदशायामिष्टैव सेत्यवादीत् ।

ततः शिवकुमारमिश्रः—नहि जीवात्मनि युगपदेव परमात्मभेदोऽभेदश्च संभवतः । विरुद्धधर्मयोरसामानाधिकरण्यनियमात् तथा चात्माभिन्न एव जीव उपाधिवशाद्भिन्नइव भासतइति वक्तव्यम् न तु कथमपि ततो भिद्यत इति । यथा सूर्यात्मापि सूर्यकरस्ततो भिन्न इव भासते न तु वस्तुतस्तथाभूतो भवति, किरणपुञ्जात्मकत्वाद्धि सूर्यस्येत्याह ।

ततः सभाप्रोत्साहकः—सूर्यस्य किरणपुञ्जात्मकत्वं तु न तावत्परीक्षया सिध्यति । तस्य तथात्वे हि किरणधाराप्रवाहानुवृत्तौ सततं प्रवर्तमानायामनन्तानन्तकालादूर्ध्वं किरणानां निःशेषतायां सूर्यस्यैव विलयापत्तेः ।

ततः केशवशास्त्री—किमिति धूमस्येव किरणानां निस्सरणानुवृत्तिरनुमन्यते । ते च दीपशिखाकिरणा इव सदा प्रसृता एवावतिष्ठन्ते । तेषां क्रमिकोदयादिकं तु तद्व्यवधायकमिहिकाद्यपगमादिक्रमाश्रितं बोध्यं तथा च सूर्यस्य किरणपुञ्जात्मकत्वेपि न क्षतिरित्याद्यब्रवीत् ।

अत्रान्तरे सन्ध्यावन्दनसमयमुपस्थितं दृष्ट्वा प्रक्रान्तं विषयं सभान्तरे विचारयिष्यन्तस्सर्वे सभ्याः सभां व्यसृजन् ॥

अथ कार्तिककृष्णप्रतिपदि नियतसमये सभाप्रोत्साहकानां श्रीयुतबाबूप्रमदादासमित्रमहाशयानामालये संस्कृतसमाजनाम्नी सभोपातिष्ठत । तत्रभवन्तावुभावपि सभाध्यक्षौ कतिपये सभासदश्च कार्यान्तरवशान्नैनामपि सभामसभाजयन् । अवशिष्टानां च सभ्यानां कतिपयेष्वागतेष्वपरेष्वागमिष्यत्स्वेव सत्सु नियतसभाकृत्यारम्भात् प्राक् सभाप्रोत्साहको महाशय ईश्वरसर्वज्ञतास्वीकारे समाविष्टानां निखिलदोषाभासानां निरासायाध्यक्षवरैः पूर्वतरसभायां सम्यक् प्रतिपादितेनानिर्वचनीयत्ववादेनेषदतुष्ट इवेदमाह । तद्यथा । परमेश्वरस्य सर्वज्ञतया नित्यज्ञानवत्तयैव च सकलाभीष्टसिद्धावत्रा ऽनिर्वचनीयत्वसमाश्रयणमनावश्यकमिव प्रतीयते । यतो हि नित्यज्ञानवानीश्वर इति निश्चिन्वानस्य पुंसः स्वकार्यसिसाधयिषया कथं प्रवृत्तिरित्याद्याक्षेपा ईश्वरस्य सर्वज्ञतया तादृशप्रवृत्तेरपि तज्ज्ञानगोचरत्वेना ऽवश्यंभावान्निरालम्बा एव । अन्यथेश्वरसर्वज्ञताया एव हानिप्रसङ्गात् । नन्वेवं तर्हि किं नित्यज्ञानवानीश्वर इति निश्चिन्वन् पुमाननिच्छन्नपि बलादीश्वरज्ञानगोचरत्वमात्रेणैव व्यापारविशेषान् कार्यत इति चेत् प्रवृत्तिकारणीभूतेच्छादीनामपि भगवज्ज्ञानविषयत्वेनावश्यंभावादनिच्छापूर्वकप्रवृत्तिकल्पने मानाभावात् यत्र च ज्योतिष्टोमादीन् विदधतोऽपि पुरुषस्येष्टसिद्धिर्न दृश्यते यत्र वा तानविदधतोऽपि पुरुषान्तरस्य सा दृश्यते तत्र भगवज्ज्ञाने इष्टसिद्ध्यननुगतस्यैव पुरुषविशेषकर्तृकज्योतिष्टोमादेरज्योतिष्टोमपूर्वकपुरुषान्तरेष्टसिद्धेर्वा कल्पने न कोऽपि दोषावकाश इति विनैवानिर्वचनीयत्ववादाश्रयणं सर्वं सूपपन्नमिति ।

केशवशास्त्री—भगवज्ज्ञानगोचरत्वागोचरत्वाभ्यामेव सकलप्रवृत्तिनिवृत्त्युपपत्तौ सर्वेषां वेदोक्तविधीनां वैयर्थ्यं प्रसज्येत । न तावत्सिद्धस्यैवार्थस्य प्रवर्तने वेदः प्रवर्तते । तस्यापूर्वविधायकत्वस्यैव सर्वसम्मतत्वात् । किं चास्मिन् पक्षे सकलजनोद्देशेनेष्टसिद्ध्युपायोपदेष्टृत्वं चास्य न संभवति । यत्कर्तृकाग्निष्टोमादेरीश्वरज्ञातत्वं तदुपदिदिक्षयैव तस्य प्रवृत्तत्वात् । तस्य जनान्तरोपदेशकत्वे फलाभावात् । एवं च वेदोक्तविधीनां सार्थकत्वं सार्वज्ञ्यं चेश्वरस्योपगच्छतामस्माकमनिर्वचनीयतावाद एव शरण्योऽस्तीत्यवोचत् ।

प्रमदादासमित्रमहाशयः—किं भो वेदस्यैवाभावे कथं नाम जनाः स्वाभीष्टार्थसिद्ध्युपायान् जानीयुः कथं च तेषु तेषु कर्मसु तेषां प्रवृत्तिः स्यात् इति जनैरश्रुतपूर्वाणामीश्वरज्ञातानां च विधीनां प्रदर्शकस्य वेदस्य न कथमपि वैयर्थ्यमुद्भावयितुं शक्यते। यच्चोच्यते सकलजनोद्देशेनेष्टसिद्ध्युपायोपदेष्टृत्वमस्य न संभवतीति तदप्ययुक्तम् । न खलु सकलसस्यादिक्षेत्राद्यार्द्रीकरणाय प्रवृत्ता वृष्टिः फलाभावात्समुद्रे न पततीति शक्यते कल्पयितुम् । तथा च सकलजनोपकाराय निष्पक्षपातं प्रवृत्तो भगवद्वाक्यकल्पो वेद ईश्वरसंमतत्वात्सकलमानवव्यक्तीरविशेषेणैवोद्दिश्य प्रवर्तते तदुक्तविध्यनुष्ठानादिकं तु स्वस्वादृष्टानुसारतः कतिपयएव जना अनुतिष्ठन्तीति युष्माकमपि स्वीकार्यमेवेत्याह ।

अत्रान्तरे सर्वान् प्रतीक्षितान्सभ्यानुपस्थितान् दृष्ट्वा श्रीयुतपण्डितवामनाचार्यं च तद्दिनसभाध्यक्षत्वेन वृत्वा तदनुमत्योपसंपादकः केशवशास्त्री पूर्वसभावृत्तान्तं यथावदवाचयत्। तदनु पूर्वसभोपक्रान्तां द्वैतापत्तिमेवाधिकृत्य तन्निराचिकीर्षया विचारः प्रावर्तत ।

तत्र सभाप्रोत्साहको महाशयः—आत्माभिन्नोपि उपाधिसंबन्धवशाद्भिन्नो भवति । उपाध्यपगमे चोदकापगमे प्रतिबिम्बस्येव किंचिज्ज्ञत्वादिजीवरूपेण जीवस्याप्यपगमात्केवलस्य परमात्मन एवावशेषादद्वैतमेवेत्यवादीत् ।

केशवशास्त्री— उपाध्यपगम एव चेदैकात्म्यं सिद्ध्यति तर्ह्यात्मबोधेन किं क्रियताम् । तादृशबोधोत्तरमप्युपाधीनां विद्यमानतयाऽद्वैतासिद्ध्या सकलानर्थस्य तादवस्थ्यात् । तथा च ज्ञान्यज्ञानिनोरविशेषप्रसङ्गः ।

सभाप्रोत्साहकमहाशयः— ज्ञानप्राप्त्युत्तरं च जीवः स्वप्नजागरणसुषुप्तिगोचराणां विषयाणां बाधितत्वेन मिथ्यात्वं विभावयन्स्वबिम्बभूतस्य परमात्मन एव च केवलं सत्यत्वमनुसंदधदिष्टप्राप्त्या चाहूष्यन्ननिष्टसिद्ध्या चाविषीदन् परमात्मपरायणः सर्वदुःखातिगो भवति । अज्ञानी तु सर्वं विषयजातं सत्यं मन्यमानोऽनुवेलमनर्थपरम्परामनुभवतीति प्रसिद्ध एव ज्ञान्यज्ञानिनोर्विशेष इति ॥

गङ्गाधरशास्त्री—न केवलं ज्ञानप्राप्त्युत्तरं विषयमिथ्यात्वमेवानुभूयते जीवेन किंतु स्वात्मनः परमात्मतादात्म्यमपि। तदेव च तत्त्वमस्यादिवाक्यैर्जहदजहल्लक्षणावृत्त्या प्रतिपाद्यते। अत एव जीवन्मुक्तानां ब्रह्मैवाहं न संसारीत्याद्युक्तिरपि संगच्छते ॥

गहनोयं विषयो नाध्यक्षवरैर्विना पारं गमिष्यतीत्यद्यात्रैव विरम्यतामिति सभाप्रोत्साहकमहाशयेनाभिहितं सर्वेऽन्वमोदन्त ततश्चोत्तरसभायां केशवशास्त्री प्रारब्धवादमधिकृत्य किंचिद्विलिख्य पठिष्यति। प्रोत्साहकमहाशयश्च प्रथमवादं करिष्यतीति निश्चित्य सभां व्यसृजन् ॥

अथ मार्गशीर्षशुक्लप्रतिपदि संस्कृतसमाजनाम्नी सभा यथा पूर्वमास्तीर्णा। तस्यां केशवशास्त्री प्रथमं पूर्वसभावृत्तान्तं संवाच्य प्रारब्धवादमाक्षिप्य लीलावाद एव युक्तः प्रतिभातीत्युपापादयत्। यथा सर्वो हि जन्तुस्तत्तत्सुखमभीप्सन्साधुष्वसाधुषु वा कर्मसु प्रवर्त्तते। एको हि यमनियमस्वाध्यायादिकायक्लेशैः स्वसुखं साधयितुं यतते। अपरश्च रुचिरान्नपानादिग्राम्यविषयोपभोगैरेव। तावेतौ समं वेदवेदाङ्गपारगावपि स्वस्वसुखसाधनत्वेन भिन्नभिन्नकारणसामग्रीमाश्रयन्तौ तत्तत्कर्मसमुत्थमपूर्वमिह परत्र वोपभुञ्जाते इत्यनुभूयते श्रूयते च। तत्रानयोर्विजातीयसुखविशेषाभीप्सापूर्वकसामग्रीविशेषादरः किं पूर्वजन्मकर्मनियत आहोस्विदीश्वरेच्छानियतः। तत्र के चन पूर्वजन्मकर्मनियत एव स इति वदन्ति ॥

यतो हि समानादेव गुरोः शिक्षमाणानां सममभ्यासशालिनां च पुरुषाणामेक उत्तमोऽपरो मध्यमो निकृष्टो वा संपद्यते। कस्मादिदं कारणसाम्येपि फलवैचित्र्यं संभवतीत्यऽस्ति कोप्यदृष्टकारणविशेष इत्यनुमीयते। तादृशादृष्टकारणेष्वपि वैचित्र्यापादकं किमिति पृष्टे ततोपि पूर्वपूर्वजन्मकर्मेत्यनवस्थां स्वीकुर्वन्ति। प्रामाणिकानवस्थाया अदूषितत्वात्। परे त्वीदृशानवस्थास्वीकारापेक्षया स ऐक्षतेत्यादिवचनादवश्यंस्वीकार्येश्वरेच्छावैचित्र्यमेवाभ्यर्हितं मत्वा तेनैव सकलसांसारिककार्यवैचित्र्यमुपपादयन्ति लोकवल्लीलाकैवल्यमित्यादिश्रवणाल्लीलाप्रवृत्तस्येश्वरस्य सृष्टिवैचित्र्यं न तावद्वैषम्यनैर्घृण्यानुमापकं भविष्यति विचित्रसृष्टिभावे

लीलाया एवासिद्धेः। नहि लोके लीलापटुस्सूत्रधारःस्वपात्राणां कानिचिच्चौरयन् कानिचिद्वदान्ययच्चपराणि च भिन्नार्थीकुर्वन् वचनीयो भवति। तथा स्वलीलासंपिपादयिषुरीश्वरो लोकदृष्ट्या कांश्चन दुर्मतीनपरांश्च सुमतीन् कुर्वन्न कथमपि वाच्यः स्यात्। एतेन स्वयमेव मनुष्यैस्तानि तान्युचितानि वानुचितानि कर्माणि कारयित्वा तेषां श्रेयोदण्डादिविधानमीश्वरस्यायुक्तमिति वदन्तः प्रत्युक्ताः, एवं चेश्वरेच्छाघटितया दृश्यकारणसामग्र्यैव सकलकार्योपपत्तावदृष्टकारणानुसन्धानक्लेशो व्यर्थः। एकादृष्टकारणेनानिर्वाहेऽदृष्टान्तरस्य तेनाप्यनिर्वाहे तदितरस्य कल्पने महद्गौरवमनवस्थादोषश्च॥

ननु दृश्यकारणसाम्येऽपि फलवैषम्यमुपलभ्यते लोके तत्कथमदृष्टकारणान्तरकल्पनां विनोपपादयितुं शक्येत। केन दृष्टकारणेन सममभ्यासशालिनोः सतीर्थ्ययोरेकतरस्य विद्वत्त्वमपरस्य च जडत्वमुपपाद्येयाताम् इति चेश्वरेच्छानियततत्तज्जनकगुणदोषकृतबुद्धिवैजात्येनैवेति गृहाण। वैषम्यनैर्घृण्यादिदोषस्तु नास्त्येवास्माकमित्यवोचाम। प्रत्युत स दोषः प्रारब्धवादएवापद्यते तत्र हि वर्तमानकुकर्मादीनां पूर्वकर्मनियतत्वेनावश्यंभावात्तदर्थं जनानां दण्डदानस्यानौचित्यात् यदि च साध्वसाधुप्रवृत्त्यनुकूलेच्छातिरिक्तानामेव जीवावस्थानां प्रारब्धनियतत्वं तादृशेच्छायास्तु स्वात्मायत्तत्वमेव। तथा च कुकर्मप्रवृत्तिनिवृत्त्योर्जीवाधीनत्वेऽपि ततोऽनिवर्तमानस्य जीवस्य दण्डविधानं न्याय्यमेवेति भण्यते चेदर्धजरतीयं जीवेच्छावैचित्र्यं पुनर्दुरुपपादमेव। एवं स्थितेऽनवस्थादिविविधदोषदूषितं प्रारब्धवादमपेक्ष्य दोषलेशशून्य ईश्वरेच्छावाद एवोपपन्नतरः प्रतीयते। उक्तानवस्थाया अस्वीकारे सांख्याचार्यादीनां संमतिश्चास्ति। तथाच द्वाविंशत्यधिकशततमसांख्यसूत्रे भाष्यकारः। "आदिसर्गे हि वृक्षं विनैव बीजमुत्पद्यते हिरण्यगर्भसंकल्पेन तच्छरीरादिभ्य इति श्रुतिस्मृत्योः प्रसिद्धम्"। तत्रैव धृतं विष्णुपुराणवचनं च "यथा हि पादपो मूलस्कन्धशाखादिसंयुतः। आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः" इति॥ ततः प्रमदादासमित्रमहाशयो न लीलावादो युक्तो लोके लीलाका-

रिणामचेतनकाष्ठादिनिर्मितक्रीडनकोपादानस्यैव दर्शनात् चेतनान्युपादाय तेषु सुखदुःखाद्युत्पादने दोषस्य दुरुद्धरत्वात्। नहि लोकेऽपि प्रभुरपि पृथ्वीपतिर्लीलावशपिशाचिकावेशदूषितो नदोषु निजाश्रितेषु कांश्च न घातयन्परांश्च समेधयन् युक्तकारीति व्यपदिश्येत। प्रारब्धवादे तु युक्तकारिणः सुखयन्नयुक्तकारिणश्च पीडयन् विविच्य निग्रहानुग्रहौ विदधानो नृपइव मुच्यते वचनीयतायाः। तानि च कर्माणि पूर्वपूर्वजनुरर्जितकर्मनियतान्यपि क्षपयितुं शक्यन्ते संप्राप्तनरतनुना शृण्वता श्रुतिस्मृत्युदितानुपदेशानिति तदनुश्रुतमविदधाना विदधानाश्च कोपप्रसादयोः पात्रीक्रियन्तइति लोकदृष्टान्तेन सर्वांशे सादृश्यमश्नुतेऽयं वाद इति। ततो विश्वनाथशास्त्री। न तावदस्त्ययं नियमो लोके ऽचेतनान्येव लीलायै गृह्यन्तइति नाट्ये चेतनानामपि ग्रहणदर्शनात्। तेष्वप्येकस्य रामभावेनापरस्य रावणतया च तात्कालिकसुखदुःखातिशयोत्पादनाच्चेति। ततो महाशयः। भो नास्ति तेषां मध्ये कस्यापि दुःखलेशोऽपि कथमन्यथा ते प्रवर्तेरन्। सुखदुःखादि तु केवलमभिनयन्तीति। ततो ढुण्ढिराजशास्त्री। ब्रह्मातिरिक्तवस्तुमात्रस्य सिद्धान्ते ऽनङ्गीकाराच्च कस्मिंश्चित्सुखं दुःखं वोत्पादितमीश्वरेणेति कोऽयं दोष इति। ततो महाशयः। भोः कस्यां दशायामिदमुच्यते पारमार्थिक्यां व्यावहारिक्यां वा पूर्वस्यां लीलावादः प्रारब्धवादः सुखं दुःखमिति सर्वमेवालीकमद्वैतसिद्धान्तादिति वादमात्रस्य व्यावहारिकदशायामेवात्रसर इति पर्यालोच्यतां सा दुर्निवारेश्वरवैषम्यनैर्घृण्या लीलावादे न वेतीति। ततो राममिश्रशास्त्री। नास्तीश्वरे वैषम्यं नैर्घृण्यं वा कर्मप्रयोज्यत्वाच्छुभाशुभफलानामत एवोक्तं वैषम्यनैर्घृण्ये कर्मसापेक्षत्वादिति कर्मणां तु जडत्वादीश्वरः सिद्धः परमार्थतश्च भेद एव वास्तवो नाभेदो भेदपक्षएव शास्त्रयोनित्वादित्यारभ्यानावृत्तिः शब्दादनावृत्तिः शब्दादित्यन्तः शास्त्रसंदर्भः सुयोजोऽभेदपक्षे च क्लिष्टयोजनो न वा योजयितुं शक्यतइति। ततो महाशयः समानकर्मणामपि फलभेददर्शनात्प्रारब्धमङ्गीक्रियतइति। ततः केशवशास्त्री। ईश्वरस्य निर्गुणत्वस्वीकाराच्च वैषम्यनैर्घृण्ये लीलावादे ऽपीति। ततो महाशयः। भो इदं परमार्थिकं न व्यावहारिकमिति। ततः केशवशा-

स्वी। नैर्घृण्यस्य घृणाभावरूपतया सुखदुःखाद्यभाववदेव सोऽपि चेत्स्वीक्रियेत कः स्याद्दोष इति। ततो महाशयः। भो घृणाभाव एव दोषः परदुःखप्रहाणेच्छा हि सा सा चेदीश्वरे नाभ्युपगम्येत राक्षसेभ्योऽप्यधिकं क्रौर्यमीश्वरेऽभिहितं स्यादिति। ततो बालशास्त्रिणः। भोश्चित्रीयते मे मानसमद्यतनेन वादेन यदुभाभ्यामपि वादिप्रतिवादिभ्यामीश्वरे नैर्घृण्यवैषम्ये नेष्येते तर्हि किमिति ते उद्भावनीये समाधेये च तदुद्भावनस्य प्रकृतकथानङ्गत्वादेकतरस्यैव दोषत्वे तदुद्भावनस्य युक्तत्वात्। एवमीश्वरेच्छायाः कारणताकल्पनरूपो लीलावादः स्वस्वकृतकर्मणां फलप्रयोजकत्वरूपः प्रारब्धवादश्चेति पृथक् पृथक् स्वीकृत्य विवादोऽपि मह्यं न रोचते समाहृत्यैवोभयं समाधानस्य सुश्लिष्टत्वात्। नहि लीलावादेऽपि लौकिकीव लीला संभवेत आप्तकामे भगवति शक्याऽभिधातुं तस्यास्तात्कालिकसुखैकप्रयोजनकत्वात्। एवं प्रारब्धवादेऽपि सुकृतदुष्कृतकर्ममात्रोत्पाद्यत्वं सुखदुःखयोरशक्याभिधानमेव प्रतिबन्धकाभावादेरपि कारणताया आवश्यकत्वात्। तत्राद्यपक्षेऽप्येकेन सुकृतमपरेण दुष्कृतं च कारयित्वा सुखे दुःखे च तान् पातयन् भगवानवचनीयः स्यात्। एवमन्त्यपक्षेऽपि कर्ममात्रस्य कारणता दुर्वचेति स्पष्टमेव। भेदवादे चेदं दुष्परिहरमेव केवलेच्छायाः कारणत्ववादे। बुद्धिगताः सुखदुःखादयो नात्मन इति तु न शक्यं वक्तुं लोकेऽप्येवं कंचन ताडयतस्त्वद्बुद्धावेव दुःखं न तवेत्यभिदधतोऽप्यवैषम्यापातात्। एवमभेदवादेऽपि स्वाभिन्नेनेश्वरेणाभिन्ने नरान्तरे दुःखं सुखं चोत्पादयन् तदात्मन्येवोदपादयदिति साधीयसी वादसरणिः। दृश्यते च कर्मणां नानाजन्मसंचितपापनाशकता यमनियमादीनां वैदिकी नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलमिति तस्य बलं च प्रारब्धसंचितोभयविधदुरितनिवारकत्वमिति स्पष्टमेव। तस्मादल्पेनापि नियमेन बहुतरपापनाशे भगवदिच्छायाः कर्मणश्च कारणताऽभ्युपगमे न कोऽपि दोषावकाश इति।

एतच्च सर्वेष्वनुमोदयत्स्वेव पुनरिदमवोचत्।

यदियं सभा साधीयोमहोत्साहयुवपण्डितसभाजितेत्यनया तादृशं फलमुत्पादनीयं यच्चिरं सहृदयानामास्वादनीयतां व्रजेत्। यद्यपी-

दृशो ऽपि विचारः प्रचुरजनोपकारदक्षो ऽथाऽपि न तादृशो यथा कश्चन धर्मशास्त्रनिबन्धः सुतरामुपकारको भवेत्। वीक्ष्यन्तां च माधवाचार्यादीनां महात्मनां परिश्रमा यैः सकलार्यावर्तवसुमती निःशङ्कमनुतिष्ठति धर्ममनुगृहीता। तेषां च तावन्तो निबन्धा ये पूर्णायुषापि पुरुषेण न लेखितुमपि शक्यन्ते। अतस्तादृशो निबन्धो निर्मीयेत यत्र साकल्येन मतविवेकपूर्वकं कृत्वो धर्मविषयः शीलविनयार्जवादिसामान्यधर्मप्रशंसनप्रपञ्चनपुरःसर उपनिबध्येत। सर्वे च यूयं सभ्या युवानो महोत्साहा धीमन्तश्चेति मन्ये युष्माभिः सहान्यथा त्वेकेनेदृशपरिश्रमो दुष्कर एव। श्रूयते च माधवाचार्योऽपि वीरबुक्कभूपतेः प्रधानसचिवो धनेन विनयेन प्रणयेन च संकलय्य नानादेशवासिनः पण्डितान्निबन्धान्निरमापयदिति। एवं यूयमप्येकचित्ताश्चेन्निबन्धमीदृशं निबध्नीयुः स्याज्जनानां महानुपकारो भवतां च कीर्तिराकल्पस्थायिनी मयाप्यत्र यथाशक्ति प्रयत्येतेति। ततो राममिश्रशास्त्री व्यवहारकाण्डसंग्रथनं रामकृष्णशास्त्री च कालविवेकनिबन्धनं ढुण्ढिराजशास्त्री च श्राद्धनिर्णयनिर्माणं प्रत्यशृण्वन् ततः संध्यासमये जाते सर्व सभात उदतिष्ठन्निति शम्॥

अथ त्रयस्त्रिंशदधिकैकोनविंशतिशततमवैक्रमाब्दीयमाघकृष्णद्वितीयायां श्रीयुतप्रमदादासमित्रमहाशयानामुद्याने संस्कृतसमाजनाम्नो सभा प्रतिपत्तं प्रतिपद्दि भवन्त्यपि श्रीमत्याः सकलवसुमतीतलवास्तव्यमनुजजनस्तव्यशासनाया विजयिनीदेव्या भारतवर्षराजराजेश्वरीपदस्वीकरणाकर्णनसमुन्मीलदतुलप्रमोदसंततिं संभूयानुभवितुं किल समास्तीर्णा। तां च समलमकुर्वत प्रतिसभमनायान्तो ऽपि कतिपये श्रीमद्वाफसाहिबप्रभृतयो महाशयाः। अध्यासीनेषु च सर्वसभ्येषु यथोचितान्यासनानि तादात्विकस्वस्वतात्विकप्रमोदप्रकाशनमेव प्रधानं तद्भिन्नकार्यमालोचयता साम्प्रतं प्रस्तुतमुपक्रम्यतामिति सप्रश्रयं निवेद्यमानाः प्रमदादासमित्रमहाशयेन श्रीबालशास्त्रिणो हर्षप्रकर्षगद्गदाक्षरमिदमुपाददते स्म वचनम्। यथैव पूर्णचैतन्यः परमेश्वरो निखिलेषु चतुर्मुखप्रभृतिषु कीटपर्यन्तेषु जीवतत्त्वेषु तत्तददृष्टविशेषपर्यालोचनपुरःसरं स्वचैतन्यभागं तत्तदुचितं समर्पयन्

ब्रह्मण्याहितेन चैतन्येन सृष्टिसंपादनं विष्णावाहितेन च तेन परिपालनं रुद्रसमर्पितेन च तेन संहरणं किं बहुना लोकेपि परस्परमुपकारानपकारांश्च किंचिज्ज्ञतां बहुज्ञतां च विरचयन् परमार्थतस्तत्तद्व्यक्त्याविष्टचैतन्यप्रतिफलितसुखदुःखादिसंवेदनात्मकं फलं स्वयमेवोपभुनक्ति स्वचैतन्येनेव चैतन्यवत्तामभिमन्यमानानुचितकारिणोऽनुचितकारिणश्च योग्यराजादिद्वारेण साधुफलमसाधुफलं च प्रापयति तथानन्तशक्तेर्यस्यैव शक्तिलेशैस्तत्तत्कार्यशक्तानीव पृथिव्यादितत्त्वानि धारणाप्यायनप्रकाशनादीनि विचित्राणि कार्याण्यारभन्ते यदीयशक्तिमन्तरा न तृणमपि परस्पन्दितुं प्रभवति यच्चैतन्यसंबन्धमन्तरा च कोपि किमपि न ज्ञातुमलं तथा साम्प्रतमसावपि निरवधिकैश्वर्यप्रभुशक्तिमन्त्रशक्तीनामेकमायतनं विजयिनी देवी तत्तत्पुरुषानुगतविवेकविनयविद्यादिभिरुदयमासादयन्त्या स्वेच्छयैव केषु चिद्द्वीपाधिपत्यं केषु चिद्देशाधिपतितां केषु चिज्जनपदस्वामितां केषु चिन्नगराधिकारं ग्रामपरिवृढतां च स्वशक्तेरेव गुरुलघुखण्डसमर्पणपुरःसरं समर्पयन्ती सकलां मेदिनीं परिपाल्य स्वयमाप्तसमस्तकामापि प्रजासंबन्धिसुखसंतत्या स्वयं सुखिनी तदीयदुःखैश्च दुर्मनायमाना विविधविद्याशिल्पादिकौशलशालिनो योग्यताविशेषविवेचनपुरःसरं ग्रामाधिपतिदेशपरिवृढादिद्वारा परितोषयन्ती विरूपमाचरतश्च दण्डयन्ती परमार्थतः स्वयैव शक्त्या सर्वं नियमयति निजेनैवैश्वर्येण सर्वाः प्रजाः सुखभागिनीः करोतीति कः संशयीत किमधिकेन तादृशतादृशाश्रुतदृष्टचरकारणसामग्रीसमवधानद्वारा पृथिव्यादीन्यपि तत्त्वानि नियमयन्ती प्रत्यक्षेश्वरतामपि विपश्चिन्मानसेषु संभावयति सा नानाविधद्वीपमण्डलान्यात्मसात्कृतवत्यपि भारतवर्षप्रजासु निरतिशयं स्नेहं प्रकाशयन्त्यद्य स्वीकरोति भारतवर्षराजराजेश्वरीति पदमिति कः स्यादस्माकमितोऽपि विशिष्टो महोत्सवाश्रयो वासरः सदृशो वा। तदद्यास्माभिरपरं किं विधेयमृते श्रीविश्वेश्वरं मुहुः प्रणम्य विजयिनीदेव्याश्चिरं साम्राज्यसंपत्समुल्लासस्थैर्यहेतोर्यथोत्साहं विचित्रैः श्लोकैरुपश्लोकनादिति तदेव सम्राट्साधुवादसंवलितं प्रस्तूयतामिति। ततस्ताराचरणतर्करत्नमहाशयाः। अहो कथमियमद्य वसु-

धाऽसाधारणगुणगणविराजमानाधिपतिसंप्राप्तिप्रमदमेदुरजननिचिता विराजते। यादृशी च साम्प्रतमस्याः सम्राट् क्व तादृशी पुरा। केन प्राक्तनेन महीभुजा परमुपकारकाणि पुस्तकानि प्राकाश्यन्त। यानि चिरकालातिक्रमवशान्नामशेषाणि कानि चिन्नाम्नाप्यश्रुतानि यथा साम्प्रतिकसम्राजा मुद्रणोपायसुलभानि विरचितानि स्वल्पव्ययेनापि समासादयितुमधुना शक्यन्ते। केन वा स्वस्वजातिवर्णदेशाद्यभिमानमुत्सार्य क्वत्स्नेव प्रजा सुतनिर्विशेषमपाल्यत न येन बलीयसा ऽऽक्रम्यमाणा दुर्बला न दुःखं नाप्नुवते स्म। केनान्येन पथिकजनानामनायासेन स्वल्पव्ययेन लघुना कालेनाभीप्सितदेशप्राप्तिहेतुभूतं बाष्पवेगवशवेगवत्तममनायासिततुरगादिवाहनं यानं निरमीयत। केन वा पुरा योगबलेनापि केनचिदेव शक्यसाधनं दूरतरदेशस्थवार्तोपलम्भवार्ताप्रापणादिकौशलं सर्वजनसुलभं समपाद्यत। कियतीं वा वाचं चिरं प्रपञ्चयामहे नानाविधौषधालयविद्यालयादिनिर्माणैरतीवोपक्वता सकला प्रजा विस्मरत्येव पूर्वमहीपतीन्। तदधुना सर्वात्मना भगवन्तमम्बिकापतिमाराधयद्भिरस्माभिरिदमेव पुनः पुनराशंसनीयं यत्प्रतिपलोपचीयमानवैभवानुभावा भुवं भूषयेद्यशोवितानैर्देवी विजयिनी ससुतेति। तदनु प्रमदादासमित्रमहाशयः श्रीविश्वनाथप्रणतिसम्राट्प्रशंसाबोधकपद्यवाचनपूर्वकमिदमाह निःसंशयं चिरादभिलषितो मनोरथ आर्यावर्तवास्तव्यानां भागधेयोदयैरस्माकमद्य साधु फलितः। येन श्रीमती विजयिनीदेवी प्रजान्तरेभ्यो विशेषप्रियतां भारतजनेषु दर्शयन्ती सर्वपीहत्या देशाधिपप्रभृतिसाधारणजनपर्यन्तं जना मत्संबन्धिनइति बोधयन्ती नानाविधान्तरोपपालिन्यपि भारतराजराजेश्वरीत्यसाधारणं निजं पदमनुमन्यते स्म। तदीदृशेवसरे यदि वयं तदीयधन्यवादपुरःसरं परस्परं चिरात्प्रचलितामीर्ष्यां परोत्कर्षासहिष्णुतां च तुन्दपरिमृजतां च विसृज्य परस्परसाहायकप्रवणमानसा मानसाधनतया विविधा विद्या मतिवैशद्यसंपादकानि च विचित्राणि शिल्पानि शुभोदर्कांश्चोद्यमान् सम्यगुपाददीम कोऽस्मादपि परो लाभ इति विचिन्त्यताम्। यथाद्य यावदिहत्यानां वैमत्यमत्यन्तं दुरन्तमभूद्येन विजातीया इति गौडा माहाराष्ट्रान् ते च गौडानिमे च वङ्गदेशनिवासिनोसूयन्तो द्वेषमेव स्वीकृत्य-

साधनमिति भ्राम्यन्त ईदृशीं परायत्ततामश्नुवते स्म येन द्वीपान्तरीयैः सुतरां संरुद्धव्यापाराः पारावारपतिता इव सांयात्रिका न कथमपि स्वोदयं संभावयन्त्यपि। विचारचतुरचेतसां पुनरिदं न रोचते यदेकमपि द्वीपमधिवसतां भाषाभेदमात्रकेण कुतो विभिन्ना इति व्यपदेशः। यथा किल द्वीपान्तरनिकेतना अपीमे समागत्य जनमिहत्यमपि स्वजनमिवायत्यां भूरिफलेषु कर्मसूत्साहजननपुरःसरं धनमपि निजं वितीर्य प्रेरयन्ति तथा वयमपि चेदधुनाऽपि वैमत्यत्यागं पुरस्कृत्य प्रवर्तेमहि महितेषु हितेषु कार्येषु प्राप्नुयाम ल्यीयसैव कालेन परमामुन्नतिमिति दृढं निश्चिनोमि। अपि चायं न केवलं नयो धर्मोऽप्यस्माकं शीलं सत्यं परोत्कर्षसंतोषिता शमो विनय आर्जवमिन्द्रियनिग्रहश्चेत्यादिरसाधारणः साधारणः सर्वेषाम्। पश्यत भारतादीन् महत इतिहासान् यत्र शीलस्य कियन्माहात्म्यमुद्धुष्यते मुहुः

जिता सभा वस्त्रवता मिष्टाशा गोमता जिता।
अध्वा जितो यानवता सर्वं शीलवता जितम्॥
शीलं प्रधानं पुरुषे तद् यस्येह विनश्यति।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः॥

इत्यादि। एवं सत्यस्यापि॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥

इत्यादिना। अनृतस्य च नानृतात्पातकं परमित्यादिनाऽतीव हेयता प्रदृश्यते। तद्यदि कश्चिदीदृशं प्रबन्धं विरचयेद्यत्र दशकं धर्मलक्षणमिति प्रारभ्य सर्वेषां परोचनं प्रमाणोपन्यासपुरःसरं भवेद्येन सर्वेषामुपकारः स्यात्तस्मै चेदृशमहोत्सवे पारितोषिकं विसृज्य श्रीमत्सभाध्यक्षाधिकारे मया स्थापितमर्प्येतेति। ततो बालशास्त्रिणः। न केवलमेतेन महदौदार्यं महाशयानामवगच्छामोऽपि तु विचार्यकारितामशेषजनोपकृतिदक्षतां च दृढमनुमिमीम इति।

ततो रामकृष्णशास्त्रिप्रभृतिभिर्विश्वनाथस्तुतिसम्राट्कीर्तिप्रतापादिप्रकाशकेषु पद्येषु वाच्यमानेषु ढुण्ढिराजशास्त्री वाचयति स्वैकमत्यवा-

दम्। तदनु श्रीविश्वेश्वरसपर्यार्थमद्य कोऽपि गच्छतु समभ्यर्थयतां च भगवतो भारतेश्वरीभावुकाभिवृद्धिमिति बालशास्त्रिभिरादिष्टे केशवशास्त्री निजगमनोत्साहमदर्शयत् । ततः प्रमदादासमित्रमहाशयोऽपि मदीयमपि पूजासंभारं प्रापयतु भवानिति । तदनु सायंसमयेऽपि प्रत्यासन्ने गुणिजनसमागमैकतानोऽभिनस्सर्वे ऽपि सभ्याः संभूय युगपदेव प्रश्रयं पुरस्कृत्य श्रीगाफसाहिबमहाशयान् श्रीथिबोसाहिबांश्चानुमन्येतां युवां सभाप्रोत्साहकतामिति विज्ञापयन्तस्तत्क्षणएव भृशं प्रसीदता गाफसाहिबमहाशयेन नितरामहमनुगृहीतोऽस्मि समागमादीदृश्याः सभाया इति परितोषिताः सभां व्यसृजन्निति । शम् ॥

शीतांशुशोभिशिरसं गिरिराजकन्या-
नेत्राम्बुजद्वयविकाससहस्रभानुम् ।
श्रीविश्वनाथमधुना मधुनाशनेड्यं
भक्त्या नताः स्म जनतास्मरणैकभूमिम् ॥ १ ॥
प्राप्तोदया किल दया हृदयान्तराला-
त्तस्यैव सा विजयिनी जयिनी रिपूणाम् ।
कल्याणकारकनया तनयाविशेषं
पुष्णात्यशेषजनतां विनतां नितान्तम् ॥ २ ॥
नानान्तरीपनृपमौलिमणिप्रभाभि-
राभासिताङ्घ्रियुगला ऽपि निजप्रतापैः ।
सा भारती भुवमभावयदिद्धभाग्या-
मार्यैश्वरीति पदमात्मनि मानयन्ती ॥ ३ ॥
आशागजश्रुतिपथातिथिभिः शतघ्नी-
घोषैर्द्युलङ्घनधियेव चलद्भिरुच्चैः ।
सम्राट्सभावसुमतीं समया स्तवैश्च
साम्राज्यघोषमयतां व्रजति स्म सर्वम् ॥ ४ ॥
राज्ञ्याः पदं सककुदं सकलेश्वरेभ्यो
भूपा न केवलममन्वत साधुवादैः ।

आशान्तरालविततप्रतिनादद्दम्भा-
द्दिक्पालकैरपि सुरैरयमन्वमोदि ॥ ५ ॥

पुष्पाञ्जलीन् विसृजतां करकुड्मलेभ्यः
कूलङ्कषप्रमदमेदुरमानसानाम् ।
साहायकं विदधिरे सकलप्रजानां
पुष्पोपमा वियति काल्पनिकाः प्रदीपाः ॥ ६ ॥

चित्राम्बुधौ न निरमज्जयदाशु केषां
चेतो ऽद्भुता वियति दीपततिर्भ्रमन्ती ।
दासीभवत्सकलदिग्वनिताकराग्र-
नीराजनाभ्रममहो हृदये दिशन्ती ॥ ७ ॥

ये सौख्यशायनिकतामगमन्नुडूनां
नामाक्षरत्वमभजन्त च ये प्रदीपाः ।
ते तत्प्रतापमवनौ गगने च सन्तं
कस्यान्तरन्तरितबाधमबोधयन्न ॥ ८ ॥

अद्यानुरागतरुरार्यजनस्य मन्ये
जातः फलेग्रहिरवाप्य दयाम्बु तस्याः ।
आस्वाद्य यत्फलमतुल्यरसं चिराय
पीयूषमीषदपि नेष्यति लोक एषः ॥ ९ ॥

तस्मादपारकरुणाभरितान्तरङ्गं
सम्प्रार्थयाम गिरिशं नमितोत्तमाङ्गाः ।
जीव्यात् प्रतिक्षणविवृद्धयशःप्रतापा
पारे शतं विजयिनी शरदस्सपुत्त्रा ॥ १० ॥

विश्वेशविश्वजयिनीयशसां प्रसार-
मासेदिवांसि सुखिसभ्यसुधीवचांसि ।
संश्रुत्य संस्कृतसमाजसभासहायो
गङ्गाधरो ऽलिखदुदन्तममुं यथावत् ॥ ११ ॥ गङ्गाधरशास्त्री

## ॥ काशिकायाः ॥

॥ सप्तमाध्यायस्य द्वितीयः पादः ॥

### मपर्यन्तस्य ॥ ९१ ॥

मपर्यन्तस्येत्ययमधिकारो, यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्येत्येवं तद्वेदितव्यम् । वक्ष्यति । युवावौ द्विवचने । युवाम् । आवाम् । मपर्यन्तस्येति किम् । युवकामावकामिति साकच्कस्य मा भूत् । त्वमावेकवचने । त्वया । मया । मपर्यन्तस्येति किम् । सर्वस्य मा भूत् । तथा च सति त्वमयोरकारस्य योऽचीति यकारे कृते ऽनिष्टं रूपं स्यात् । मान्तस्येत्येव सिद्धे ऽस्मिन् यत्परिग्रहणं कृतमवधिद्योतनार्थं तन्मान्ते मा भूत्, कदा, यदा * ण्यन्तयोः क्विपि मान्तत्वं विद्यते, युष्मदस्मदोः स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वाच्च विद्यते ॥

### युवावौ द्विवचने ॥ ९२ ॥

द्विवचनइत्यर्थग्रहणम् । द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः । यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति, तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि त्वाहौ सौ इत्येवमादिना आदेशान्तरेण न बाध्येते । अतिक्रान्तं युवा,मतियुवाम् । अत्यावाम् । अतिक्रान्तान् युवा,मतियुवान् । अत्यावान् । अतिक्रान्तेन युवा,-मतियुवया । अत्यावया । अतिक्रान्तैर्युवा,मतियुवाभिरत्यावाभिः । अतिक्रान्तेभ्यो युवा,मतियुवभ्यमत्यावभ्यम् । अतिक्रान्ताद् युवा,मतियुवत् । अत्यावत् । अतिक्रान्तेभ्यो युवामागतः, अतियुवत् । अत्यावत् । अतिक्रान्तानां युवा,मतियुवाकम् । अत्यावाकम् । अतिक्रान्ते युवा,मतियुवयि ।

* मा भूद्यदा तदेति पदमञ्जरीधृतः पाठः ।

अत्यावयि । अतिक्रान्तेषु युवा,मतियुवासु । अत्यावासु । त्वाहादीनां तु विषये परत्वात्तएव भवन्ति । अतिक्रान्तो युवा,मतित्वम् । अत्यहम् । अतिक्रान्ता युवाम्, अतियूयम् । अतिवयम् । अतिक्रान्ताय युवाम्, अतितुभ्यम् । अतिमह्यम् । अतिक्रान्तस्य युवा,मतितव । अतिमम । यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्त्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः । अतिक्रान्तौ त्वाम्, अतित्वाम् । अतिमाम् । अतिक्रान्तौ युष्मान्, अतियुष्मानत्यस्मान् । एवं सर्वत्र ज्ञेयम् ॥

यूयवयौ जसि ॥ ९३ ॥

युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । तदन्तविधिरत्र भवति । अङ्गाधिकारे तस्य च ग्रहणं भवति तदुत्तरपदस्य चेति * ॥

त्वाहौ सौ ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व अह इत्येतावादेशौ भवतः । त्वम् । अहम् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ॥

तुभ्यमह्यौ ङयि ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशौ भवतो ङयि परतः । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् ॥

तवममौ ङसि ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः । तव । मम । परमतव । परममम । अतितव । अतिमम ॥

त्वमावेकवचने ॥ ९७ ॥

एकवचनइत्यर्थनिर्द्देशः । एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः । त्वाम् ।

* अङ्गाधिकारे तस्य तदुत्तरपदस्य चेत्यादि बहुषु पुस्तकेषु नास्ति । तदेव तु युक्तम् । पदमञ्जर्यां दर्शनात् ।

माम् । त्वया । मया । त्वत् । मत् । त्वयि । मयि । यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः । आदेशान्तराणां तु विषये त्वाहौ साविस्त्येवमादीनां पूर्वविप्रतिषेधेन तएवेष्यन्ते । अतिक्रान्तस्त्वामतित्वम् । अत्यहम् । अतिक्रान्तौ त्वामतित्वाम् । अतिमाम् । अतिक्रान्तान् त्वामतित्वान् । अतिमान् । अतिक्रान्ताभ्यां त्वा,मतित्वाभ्याम् । अतिमाभ्याम् । अतिक्रान्तैस्त्वामतित्वाभिः । अतिमाभिः । इत्येवमाद्युदाहार्यम् ॥

## प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

एकवचनइत्यनुवर्त्तते । प्रत्यये उत्तरपदे च परत एकत्वे वर्त्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः । तवायं, त्वदीयः । मदीयः । अतिशयेन त्वं, त्वत्तरः । मत्तरः । त्वामिच्छति, त्वद्यति । मद्यति । त्वमिवाचरति, त्वद्यते । मद्यते । उत्तरपदे । तव पुत्र,स्त्वत्पुत्रः । मत्पुत्रः । त्वं नाथोस्य, त्वन्नाथो, मन्नाथः । एकवचनइत्येव । युष्माकमिदं युष्मदीयम् । अस्मदीयम् । युष्माकं पुत्रो ऽस्माकं पुत्रो युष्मत्पुत्रो ऽस्मत्पुत्रः । विभक्तावित्यधिकारात् पूर्वयोगो विभक्ताविव । ततोन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः । ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति तस्यामेवादेशौ भविष्यतः । नैवं शक्यं, लुका तस्या भवितव्यम् । बहिरङ्गो लुक् अन्तरङ्गावादेशौ प्रथमं तौ भविष्यतः । एतदेव तर्ह्यादेशवचनं ज्ञापकमन्तरङ्गानपि विधीन्बहिरङ्गोपि लुक् बाधते इति । तेन गोमान्प्रियोस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते । एवं च सति त्वाहौ सावित्येवमादयोपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति । त्वं प्रधानमेषां त्वत्प्रधानः । मत्प्रधानः । यूयं पुत्रा अस्य युष्मत्पुत्रो ऽस्मत्पुत्रः । तुभ्यं हितं त्वद्धितं मद्धितम् । तव पुत्रस्त्वत्पुत्रो मत्पुत्रः । अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते । लत्यस्यित्यपेक्षया । ज्ञापकार्थं ह्येतस्मिन्बहुतरमिष्टं संगृह्यते ॥

## त्रिचतुरोस्त्रियां तिसृचतसृ ॥ ९९ ॥

त्रि चतुर् इत्येतयोः स्त्रियां वर्त्तमानयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः। तिस्रः। चतस्रः। तिसृभिः। चतसृभिः। स्त्रियामिति किम्। त्रयः। चत्वारः। त्रीणि। चत्वारि। स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणं नाङ्गस्य। तेन यदा त्रिचतुःशब्दौ स्त्रियामङ्गं तु लिङ्गान्तरे तथाप्यादेशौ भवत एव। प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मण इति। प्रियतिसौ। प्रियतिसः। प्रियतिसृ ब्राह्मणकुलम्। प्रियतिसृणी। प्रियतिसृणि। प्रियचतसा। प्रियचतसौ। प्रियचतसः। प्रियचतसृ। प्रियचतसृणी। प्रियचतसृणि। नद्यृतश्चेति समासान्तो न भवति। विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात् *। यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे स्त्रियामङ्गं तदा आदेशौ न भवतः। प्रियास्त्रयोऽस्याः प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः सा प्रियत्रिः। प्रियत्री। प्रियत्रयः। प्रियचत्वाः। प्रियचत्वारौ। प्रियचत्वारः॥ तिसृभावे संज्ञायां कन्युपसंख्यानं कर्त्तव्यम्॥ *॥ तिसृका नाम ग्रामः॥ चतसर्याद्युदात्तनिपातनं कर्त्तव्यम्॥ *॥ चतस्रः पश्येत्यत्र चतुरः शसीत्येव स्वरो मा भूत्। चतसृणामित्यत्र तु षट्त्रिचतुर्भ्यो हलादिरित्येव स्वरो भवति। हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते॥

अचि र ऋतः॥ १००॥

तिसृ चतसृ इत्येतयोर्ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः। तिस्रस्तिष्ठन्ति। तिस्रः पश्य। चतस्रस्तिष्ठन्ति। चतस्रः पश्य। प्रियतिस्र आनय। प्रियचतस्र आनय। प्रियतिस्रः स्वम्। प्रियचतस्रः स्वम्। प्रियतिस्रि निधेहि प्रियचतस्रि निधेहि। पूर्वसवर्णोत्वङिसर्वनामस्थानगुणानामपवादः। परमपि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते। अचीति किम्। तिसृभिः। चतसृभिः। ऋत इति तिसृचतस्रोः प्रतिपत्त्यर्थमन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत॥

जराया जरसन्यतरस्याम्॥ १०१॥

* बहिरङ्गलक्षणस्यासिद्धत्वादिति पुस्तकान्तरे पाठः।

जरा इत्येतस्य जरसित्ययमादेशो भवति अन्यतरस्यामजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते। जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः। जरायै त्वा परिदद्युः। अचीत्येव। जराभ्याम्। जराभिः। नुमो जरसादेशो विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि। इहातिजरसं ब्राह्मणकुलं पश्येति लुग्न भवति आनुपूर्व्या सिद्धत्वात्। अतिजर अमिति स्थिते लुगम्भावो जरस्भाव इति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति। तत्र लुक्तावदपवादत्वादम्भावेन बाध्यते। अम्भावोऽपि परत्वाज्जरसादेशेन, न च पुनर्लुक्शास्त्रं प्रवर्त्तते भ्रष्टावसरत्वाद् इत्येवमेव भवति अतिजरसं ब्राह्मणकुलं पश्येति, प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैरिति च भवितव्यमिति गोनर्दीयमतम्। किं कारणं, संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति। अन्ये त्वनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति अतिजरसैरित्येवं भवितव्यमिति मन्यन्ते॥

## त्यदादीनामः॥ १०२॥

त्यदित्येवमादीनामकारादेशो भवति विभक्तौ परतः। त्यद्। स्यः। त्यौ। त्ये। तद्। सः। तौ। ते। यद्। यः। यौ। ये। एतद्। एषः। एतौ। एते। इदम्। अयम्। इमौ। इमे। अदस्। असौ। अमू। अमी। द्वि। द्वौ। द्वाभ्याम्॥ द्विपर्यन्तानां त्यदादीनामत्वमिष्यते॥ इह न भवति। भवत्। भवान्। संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति। त्यद्। त्यदौ। त्यदः। अतित्यद्। अतित्यदौ। अतित्यदः। त्यदादिप्रधाने तु शब्दे भवत्येव। परमसः। परमतौ। परमते॥

## किमः कः॥ १०३॥

किम् इत्येतस्य क इत्ययमादेशो भवति विभक्तौ परतः। कः। कौ। के। साकच्कस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते किमोदिति॥

## कु तिहोः॥ १०४॥

तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य कु इत्ययमादेशो भवति । कुतः । कुत्र । कुह । तिहोरितीकार उच्चारणार्थः ॥

क्वाति ॥ १०५ ॥

अतीत्येतस्यां विभक्तौ परतः किमित्येतस्य क्व इत्ययमादेशो भवति । क्व गमिष्यसि । क्व भोक्ष्यते । आदेशान्तरवचनमोर्गुणनिवृत्त्यर्थम् । किमो डुदिति च प्रत्ययान्तरं न विधीयते साकच्कार्थम् ॥

तदोः सः सावनन्त्ययोः ॥ १०६ ॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः । त्यद् । स्यः । तद् । सः । एतद् । एषः । अदस् । असौ । अनन्त्ययोरिति किम् । हे स । सा ॥

अदस औ सुलोपश्च ॥ १०७ ॥

अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति । असौ ॥ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च ॥ * ॥ यदा चौत्वप्रतिषेधः तदा सकारादुत्तरस्य उत्वं भवति । असुकः । असकौ ॥ उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः ॥ * ॥ परमाहम् । परमायम् । परमानेन ।

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥
आप एत्वं भवेत्तस्मिंश्च झलीत्यनुवर्त्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥

इदमो मः ॥ १०८ ॥

इदमः सौ परतो मकारोन्तादेशो भवति । इयम् । अयम् । इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

दश्च ॥ १०९ ॥

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः । इमौ । इमे । इमम् । इमौ । इमान् * ॥

## यः सौ ॥ ११० ॥

इदमो मकारस्य यकारादेशो भवति सौ परतः । इयम् । उत्तरसूत्रे पुंसीति वचनात्स्त्रियामयं यकारः ॥

## इदो ऽय् पुंसि ॥ १११ ॥

इदम इद्रूपस्य पुंसि सौ परतो ऽय् इत्ययमादेशो भवति । अयं ब्राह्मणः । पुंसीति किम् । इयं ब्राह्मणी ॥

## अनाप्यकः ॥ ११२ ॥

इदमो ऽककारस्य इद्रूपस्य स्थाने अन इत्ययमादेशो भवति आपि विभक्तौ परतः । अनेन । अनयोः । अक इति किम् । इमकेन । इमकयोः । आपीति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण ॥

## हलि लोपः ॥ ११३ ॥

हलादौ विभक्तौ परत इदमो ऽककारस्य इद्रूस्य लोपो भवति । आभ्याम् । एभिः । एभ्यः । एषाम् । एषु । नानर्थके ऽलोन्त्यविधिरिति सर्वस्यायमिद्रूपस्य लोपः । अथ वा नायमिल्लोपः । अनाप्यक इति अन्यहणमनुवर्त्तते † ॥

## मृजेर्वृद्धिः ॥ ११४ ॥

विभक्ताविति निवृत्तम् । मृजेरङ्गस्य इको वृद्धिर्भवति । मार्ष्टा । मार्ष्टुम् । मार्ष्टव्यम् । मृजेरिति धातुग्रहणमिदं, धातोश्च कार्यमुच्यमानं धातुप्रत्ययएव वेदितव्यम् । कंसपरिमृड्भ्यां कंसपरिमृड्भिरित्यत्र न भवति ॥

## अचो ञ्णिति ॥ ११५ ॥

अजन्तस्याङ्गस्य ञिति णिति च वृद्धिर्भवति । ञिति । एकस्त-

---

* इह साविति न संबध्यते, उत्तरसूत्रे साविति वचनादित्यधिकमेकस्मिन्पुस्तके ।

† अथ वा ऽनोयमलोन्त्यलोप इति पा० २ पुस्तकान्तरे ।

तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ। कारः। हारः। णिति। गौः। गावौ। गावः। सखायौ। सखायः। जैत्रम्। यौत्रम्। च्यौत्नः। जयतेर्यौतेश्च उणादयो बहुलमिति ष्ट्रन् प्रत्ययः। च्यवतेरपि त्नण्॥

## अत उपधायाः॥ ११६॥

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति। पाक,स्त्यागो,यागः। पाचयति। पाचकः। पाठयति। पाठकः। अत इति किम्। भेदयति, भेदकः। उपधाया इति किम्। चकासयति तक्षकः॥

## तद्धितेष्वचामादेः॥ ११७॥

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति। गार्ग्यः। वात्स्यः। दाक्षिः। प्लाक्षिः। णिति। औपगवः। कापटवः। त्वाष्ट्रो जागत इत्यत्राचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते॥

## किति च॥ ११८॥

किति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति। नडादिभ्यः फक्। नाडायनः। चारायणः। प्राग्वहतेष्ठक्। आक्षिकः। शालाकिकः॥

इति काशिकायां वृत्तौ सप्तमाध्यायस्य द्वितीयः पादः॥

सप्तमाध्यायस्य तृतीयः पादः।

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्॥ १॥

देविका शिंशपा दित्यवाट् दीर्घसत्र श्रेयस् इत्येतेषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारो भवति ञिति णिति किति तद्धिते परतः। देविकायां भवमुदकं, दाविकमुदकम्। देविकाकूले भवाः शालयः, दाविकाकूलाः शालयः। पूर्वदेविका नाम प्राचां ग्रामः। तत्र भवः पूर्वदाविकः। प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः साप्याकार एव भवति। शिंशपा। शिंशपाया विकारश्चमसः, शांशपश्चमसः। पलाशादिरयं तेन

पत्ते अण् अनुदात्तादिलक्षणो वा अञ् । शिंशपास्थले भवाः, शांशपास्थलाः । पूर्वशिंशपा नाम प्राचां ग्रामः तत्र भवः पूर्वशांशपः । दित्यवाट् । दित्यौह इदं, दात्यौहम् । दीर्घसत्रे भवं, दार्घसत्रम् । श्रेयसि भवं, श्रायसम् ॥ वहीनरस्येद्वचनम् ॥ * ॥ वृद्धिविषये ऽचामादेरचः स्थाने वहीनरस्य इकारादेशो भवति । वहीनरस्यापत्यं, वैहीनरिः । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

## केकयमित्त्रयुप्रलयानां यादेरियः ॥ २ ॥

केकय मित्त्रयु प्रलय इत्येतेषां यकारादेरिय इत्ययमादेशो भवति तद्धिते ञिति णिति किति च परतः । केकयस्यापत्यं कैकेयः । जनपदशब्दात्क्षत्त्रियादञित्यञ्प्रत्ययः । मित्त्रयुभावेन श्लाघते, मैत्त्रेयिकया श्लाघते । गोत्रचरणाच्छ्लाघात्याकारतदवेतेष्विति वुञ् । लौकिकं हि तत्र गोत्रं गृह्यते । लोके ऋषिशब्दो गोत्रमित्यभिधीयते । प्रलय । प्रलयादागतं, प्रालेयमुदकम् ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥

यकारवकारभ्यामुत्तरस्य अचामादेरचः स्थाने वृद्धिर्न भवति ताभ्यां तु यकारवकाराभ्यां पूर्वमैचागमौ भवतो ञिति णिति किति च तद्धिते परतः । यकारादैकारः । वकारादौकारः । व्यसने भवं, वैयसनम् । व्याकरणमधीते, वैयाकरणः । स्वश्वस्यापत्यं, सौवश्वः । य्वाभ्यामिति किम् । अर्थस्यापत्यं आर्थिः । पदान्ताभ्यामिति किम् । यष्टिः प्रहरणमस्य याष्टीकः । यतेश्छात्रा याताः । प्रतिषेधवचनमैचो विषयप्रकृत्त्यर्थ,मिह मा भूद्वाध्यश्विः । मध्वश्विरिति । नह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति । वृद्धेरभावात्प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः ॥ उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते ॥ पूर्वत्र्यलिन्दे भवः, पूर्वत्रैयलिन्दः । यत्र तूत्तरपदसंबन्धी यण् न भवति तत्र नेष्यते प्रतिषेधः । द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः ॥

## द्वारादीनां च ॥ ४ ॥

द्वार इत्येवमादीनां य्वाभ्याम् उत्तरपदस्याचामादेरचः स्थाने वृद्धिर्न भवति पूर्वौ तु ताभ्यामैजागमौ भवतः । द्वारे नियुक्तः, दौवारिकः । द्वारपालस्येदं, दौवारपालम् । तदादिविधिश्चात्र भवति । स्वरमधिकृत्य कृतो ग्रन्थः, सौवरः । सौवरोऽध्यायः । सौवर्यः सप्तम्य इति । व्यल्कशे भवः, वैयल्कशः । स्वस्तीत्याह, सौवस्तिकः । स्वर्भवः, सौवः ॥ अव्ययानां भमात्रे टिलोपः ॥ * ॥ स्वर्गमनमाह, सौवर्गमिकः । स्वाध्यायन इति केचित्पठन्ति, तदनर्थकम् । शोभनो ऽध्याय, इत्येतस्यां व्युत्पत्तौ तु पूर्वेणैव सिद्धम् । अथाप्येवं व्युत्पत्तिः क्रियते । स्वोऽध्यायः स्वाध्याय इति । एवमप्यत्रैव स्वशब्दस्यैव पाठात्सिद्धम् । तदादावपि हि वृद्धिरियं भवत्येव । स्फ्यकृतस्यापत्यं, स्फैयकृतः । स्वादुमृदुन इदं, सौवादुमृदवम् । श्वन् । शुन इदं, शौवनम् । अन्वणि इति प्रकृतिभावः । शुनो विकारो मांसं, शौवम् । प्राणिरजतादिभ्योऽञित्यञ् । श्वादंष्ट्रायां भवः, शौवादंष्ट्रो मणिः । स्वस्येदं, सौवम् । स्वग्रामे भवः, सौवग्रामिकः । अध्यात्मादित्वाट्ठञ् । अपदान्तार्थोयमारम्भः । द्वार । स्वर । स्वाध्याय । व्यल्कश । स्वस्ति । स्वर । स्फ्यकृत । स्वादुमृदु । श्वन् । स्व ॥

## न्यग्रोधस्य च केवलस्य ॥ ५ ॥

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति तस्माच्च पूर्वमैकार आगमो भवति । न्यग्रोधस्य विकारः, नैयग्रोधश्चमसः । केवलस्येति किम् । न्यग्रधमूले भवाः शालयः, न्याग्रोधमूलाः शालयः । न्यग्रोहयतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थं,मव्युत्पत्तिपक्षे विध्यर्थम् ॥

## न कर्मव्यतिहारे ॥ ६ ॥

कर्मव्यतिहारे यदुक्तं तन्न भवति । प्रतिषेधागमयोरयं प्रतिषेधः । व्यावक्रोशी । व्यावलेखी व्यावचर्ती व्यावहासी वर्त्तते । कर्म्मव्यतिहारे णच् स्त्रियामिति णच् प्रत्ययस्तदन्तादणचः स्त्रियामञ् * ॥

* तदन्ताद् टिड्ढाणञिति ङीप् । इत्यधिकमेकस्मिन्पुस्तके ।

### स्वागतादीनां च ॥ ७ ॥

स्वागत इत्येवमादीनां यदुक्तं तन्न भवति । स्वागतमित्याह, स्वागतिकः । स्वध्वरेण चरति, स्वाध्वरिकः । स्वङ्गस्यापत्यं, स्वाङ्गिः । व्यङ्गस्यापत्यं, व्याङ्गिः । व्यडस्यापत्यं, व्याडिः । व्यवहारेण चरति, व्यावहारिकः । व्यवहारशब्दोयं लौकिके वृत्ते वर्त्तते न तु कर्म्मव्यतिहारे । स्वपतौ साधुः, स्वापतेयः । द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः । स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति ॥

### श्वादेरिञि ॥ ८ ॥

श्वादेरङ्गस्य इञि परतो यदुक्तं तन्न भवति । श्वभस्त्रस्यापत्यं, श्वाभस्त्रिः । श्वादंष्ट्रिः । स्वशब्दो द्वारादिषु पठ्यते, तत्र तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम् ॥ इकारादिग्रहणं कर्त्तव्यं श्वागणिकाद्यर्थम् ॥ * ॥ श्वगणेन चरति, श्वागणिकः । श्वायूथिकः ॥ तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते ॥ श्वाभस्त्रेरिदं, श्वाभस्त्रम् ॥

### पदान्तस्यान्यतरस्याम् ॥ ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्यां यदुक्तं तन्न भवति । श्वापदस्येदं, श्वापदम् । शौवापदम् ॥

### उत्तरपदस्य ॥ १० ॥

उत्तरपदस्येत्ययमधिकारः, हनस्तोचिण्णलोरिति प्रागेतस्मात् । यदित ऊर्द्ध्वमनुक्रमिष्याम उत्तरपदस्येत्येवं तद्वेदितव्यम् । वक्ष्यत्यवयवादृतोः । पूर्ववार्षिकम् । अपरवार्षिकम् । पूर्वहैमनम् । अपरहैमनम् । यत्र पञ्चमीनिर्द्देशो नास्ति जे प्रोष्टपदानामित्येवमादौ तदर्थमुत्तरपदाधिकारः । पञ्चमीनिर्द्देशेष्वपि विस्पष्टार्थं वृद्धेश्च व्यपदेशार्थम् । उत्तरपदवृद्धौ सर्वं चेत्युत्तरपदाधिकारे वै या वृद्धिरित्येवं विज्ञायते ॥

### अवयवादृतोः ॥ ११ ॥

अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । पूर्ववार्षिकम् । पूर्वहै-

मनम् । अपरवार्षिकम् । अपरहैमनम् । पूर्वं वर्षाणामपरं वर्षाणामित्येकदेशिसमासः । तत्र भव इत्येतस्मिन्नर्थे वर्षाभ्यष्ठक् हेमन्ताच्च सर्वत्राण् च तलोपश्च इत्यण् प्रत्ययः, तत्र ऋतोर्वृद्धिमद्विधाववयवादिति * तदन्तविधिः । अवयवादिति किम् । पूर्वासु वर्षासु भवं पौर्ववर्षिकम् । कालाट्ठञ् इति ठञ् । अवयवपूर्वस्यैव तदन्तविधिर्नान्यस्य ॥

## सुसर्वार्द्धाज्जनपदस्य ॥ १२ ॥

सु सर्व अर्द्ध इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्द्धपाञ्चालकः । जनपदतदवध्योश्च अवृद्धादपि बहुवचनविषयादिति वुञ् । सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः ॥

## दिशोऽमद्राणाम् ॥ १३ ॥

दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । पूर्वपाञ्चालकः । अपरपाञ्चालकः । दक्षिणपाञ्चालकः । पूर्ववत्तदन्तविधिः प्रत्ययश्च । दिश इति किम् । पूर्वः पञ्चालानां, पूर्वपञ्चालः । तत्र भवः, पौर्वपञ्चालकः । आपरपञ्चालकः । अमद्राणामिति किम् । पौर्वमद्रः । आपरमद्रः । मद्रेभ्योऽञित्यञ्प्रत्ययः ॥

## प्राचां ग्रामनगराणाम् ॥ १४ ॥

प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । ग्रामाणाम् । पूर्वेषु कामशम्यां भवः, पूर्वैषुकामशमः । अपरैषुकामशमः । पूर्वकार्ष्णमृत्तिकः । अपरकार्ष्णमृत्तिकः । नगराणाम् । पूर्वस्मिन्पाटलिपुत्त्रे भवः, पूर्वपाटलिपुत्त्रकः । अपरपाटलिपुत्त्रकः । पूर्वकान्यकुब्जः । अपरकान्यकुब्जः । ग्रामत्वादेव

* क्व चिदवयवानामिति षष्ठीबहुवचनान्तः पाठः । सोऽयुक्तः । अर्थासंगतेरिति पदमञ्जरी ।

नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत्संबन्धभेदप्रतिपत्त्यर्थं दिक्पूर्वपदो हि समुदायः पूर्वैषुकामशम्यादिः ग्रामनामधेयम् । पाटलिपुत्त्रादिः पुनरुत्तरपदमेव नगरमाह । तत्र ग्रामवाचिनमाङ्गानामवयवस्य दिक्शब्दादुत्तरस्य वृद्धिर्भवतीत्येवमभिसंबन्धः क्रियते । इतरत्र तु दिश उत्तरेषां नगराणामित्येव । पूर्वेषु कामशम इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितं नेन्द्रस्य परस्येति प्रतिषेधेन ॥

## संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥

संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः । संख्यायाः । द्वे षष्टी अधीष्टो भृतो भूतो भावी वा, द्विषाष्टिकः । द्विसाप्ततिकः । द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्त्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति । परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः त्रैसमिक इत्युत्तरपदवृद्धिर्न भवति । द्विवर्षा त्रिवर्षा माणविकेत्यपरिमाणबिस्ताचितेति पर्युदासो न भवति ॥

## वर्षस्याभविष्यति ॥ ॥ १६ ॥

संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः, स चेत्तद्धितो भविष्यत्यर्थे न भवति । द्विवर्षं अधीष्टो भृतो भूतो वा, द्विवार्षिकः । त्रिवार्षिकः । अभविष्यतीति किम् । यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये अधिकं वापि विद्येत स सोमं पातुमर्हति । त्रीणि वर्षाणि भावीति त्रैवर्षिकम् । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म्म करिष्यतीति, द्विवार्षिको मनुष्यः ॥

## परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥

परिमाणान्तस्याङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याचामादेरचो

वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः, संज्ञायां विषये शाणे चोत्तरपदे न भवति। द्वौ कुडवौ प्रयोजनमस्य, द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं, द्विसौवर्णिकम्। विभाषा कार्षापणसहस्राभ्यामित्यत्र सुवर्णशतमानयोरुपसंख्यानमिति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतं, द्वित्रिपूर्वान्निष्कात्, द्विनैष्किकम्। असंज्ञाशाणयोरिति किम्। पाञ्चलोहितिकम्। पाञ्चकपालिकम्। पञ्च लोहित्यः परिमाणमस्य पञ्च कपालानि परिमाणमस्येति विगृह्य तदस्य परिमाणमिति योगविभागात्प्रत्ययस्तद्धितान्तश्चायं समुदायः संज्ञा। द्वाभ्यां शाणाभ्यां क्रीतं, द्वैशाणम्। त्रैशाणम्। शाणाद्वा, द्वित्रिपूर्वादण्चेत्यण् प्रत्ययः। असंज्ञाशाणकुलिजानामिति केचित्पठन्ति। द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः॥

## जे प्रोष्ठपदानाम्॥ १८॥

जइति जातार्थो निर्द्दिश्यते। तत्र यस्तद्धितो विहितस्तस्मिन् ञिति णिति किति च परतः प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धिर्भवति। प्रोष्ठपदा नाम नक्षत्रं ताभिर्युक्तः काल इत्यण्। तस्य लुबविशेषइति लुप्। प्रोष्ठपदासु जातः। ऋतुनक्षत्रेभ्याणित्यण्। प्रोष्ठपदो माणवकः। जइति किम्। यदा प्रोष्ठपदो मेघो धरणीमभिवर्षति। प्रौष्ठपदासु भवः प्रौष्ठपदः। प्रोष्ठपदानामिति बहुवचननिर्द्देशात्पर्यायोपि गृह्यते भद्रपाद इति॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च॥ १९॥

हृद् भग सिन्धु इत्येवमन्तेङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। सुहृदयस्येदं, सौहार्द्दम्। सुहृदयस्य भावः, सौहार्द्दम्। सुभगस्य भावः, सौभाग्यम्। दौर्भाग्यम्। सुभगाया अपत्यं, सौभागिनेयः। दौर्भागिनेयः। कल्याण्यादिषु सुभगदुर्भगेति पठ्यते। सुभग मन्त्रे इत्युद्गात्रादिषु पठ्यते। तत्रोत्तरपदवृद्धिर्नेष्यते। महते सौभगाय। छन्दसि सर्वविधीनां विकल्पितत्वात्।

सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः, साक्तुसैन्धवः । पानसैन्धवः । सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरिष्यते इत्यणप्रत्ययः ॥

## अनुशतिकादीनां च ॥ २० ॥

अनुशतिक इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः । अनुशतिकस्येदम्, आनुशातिकम् । अनुहोडेन चरति, आनुहौडिकः । अनुसंवरणे दीयते, आनुसांवरणम् । अनुसंवत्सरेण दीयते, आनुसांवत्सरिकः । अङ्गारवेणुर्नाम कश्चित्तस्यापत्यम्, आङ्गारवैणवः । असिहत्य । तत्र भवं, आसिहात्यम् । अस्यहत्य इति केचित्पठन्ति ततोपि विमुक्तादित्वादण् । अस्यहत्यशब्दोस्मिन्नध्यायेस्ति, आस्यहात्यः । अस्यहेतिरित्येवमपरे पठन्ति । अस्यहेतिः प्रयोजनमस्य, आस्यहैतिकः । अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक् । वध्योग इति बिदादिरयं, तस्यापत्यं वाध्यौगः । पुष्करसत्, अनुहरत्, एतौ बाह्वादिषु पठ्येते । पौष्करसादिः । आनुहारतिः । कुरुकत गर्गादिः, कौरुकात्यः । कुरुपञ्चाल । कुरुपञ्चालेषु भवः, कौरुपाञ्चालः । जनपदसमुदायो जनपदग्रहणेन गृह्यते इति वुञ् न भवति । उदकशुद्धस्यापत्यम्, औदकशौद्धिः । इहलोक । परलोक । तत्र भवः, ऐहलौकिकः । पारलौकिकः । लोकोत्तरपदस्येति ठञ् । सर्वलोक । तत्र विदितः, सार्वलौकिकः । सर्वपुरुषस्येदं, सार्वपौरुषम् । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । प्रयोग । तत्र भवः, प्रायोगिकः । परस्त्री । पारस्त्रैणेयः । कुलटाया वेतीनङ् * ॥ राजपुरुषात् ष्यञि ॥ राजपौरुष्यम् । ष्यञीति किम् । राजपुरुषस्यापत्यं राजपुरुषायणिः । उदीचां वृद्धादगोत्रादिति फिञ् । शतकुम्भसुखशयनादयः । शतकुम्भे भवः, शातकौम्भः । सौखशायनिकः । पारदारिकः † ॥

---

* अपपाठोऽयम् । तत्र हि स्वरूपग्रहणम् । कल्याण्यादिषु परस्त्रीशब्दः पठ्यते तस्मात्कल्याण्यादीनामिनङिति पाठ इति पदमञ्जरी ।

† शतकुम्भेत्यारभ्य पारदारिक इत्यन्तं बहुषु पुस्तकेषु नास्ति ।

सूत्रनडस्यापत्यं सौत्रनाडिः । आकृतिगणश्चायमिष्यते । तेनेदमपि सिद्धं भवति । अभिगममर्हति, आभिगामिकः । अधिदेवे भवमाधिदैविकम् । आधिभौतिकम् । चतस्र एव विद्याः, चातुर्वैद्यम् । स्वार्थे ष्यञ् । अनुशतिक । अनुहोड । अनुसंवत्सर । अङ्गारवेणु । असिहत्य । वध्योग । पुष्करसत् । अनुहरत् । कुरुकत । कुरुपञ्चाल । उदकशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री ॥ राजपुरुषात् ष्यञि ॥ सूत्रनड ॥

## देवताद्वन्द्वे च ॥ २१ ॥

देवताद्वन्द्वे च पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः । आग्निमारुतीमनड्वाहीमालभेत । आग्निमारुतं कर्म्म । यो देवताद्वन्द्वः सूक्तहविःसंबन्धी तत्रायं विधिः । इह तु न भवति । स्कन्दविशाखौ देवते अस्य, स्कान्दविशाखः । ब्रह्मप्रजापती । ब्राह्मप्रजापत्यम् ॥

## नेन्द्रस्य परस्य ॥ २२ ॥

इन्द्रशब्दस्य परस्य यदुक्तं तन्न भवति । सौमेन्द्रः । आग्नेन्द्रः । परस्येति किम् । ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत् । इन्द्रशब्दे द्वावचौ तत्र तद्धिते एकस्य यस्येति लोपो ऽपरस्य पूर्वेण सहैकादेश इत्यप्राप्तैव वृद्धिः, तदेदं प्रतिषेधवचनं ज्ञापकम् । बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेश इति, तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति ॥

## दीर्घाच्च वरुणस्य ॥ २३ ॥

दीर्घादुत्तरस्य वरुणस्य यदुक्तं तन्न भवति । ऐन्द्रावरुणम् । मैत्रावरुणम् । दीर्घादिति किम् । आग्निवारुणीमनड्वाहीमालभेत । अग्नेरीदग्नेः सोमवरुणयोरित्यस्यानङपवादस्य इद्वृद्धाविति प्रतिषेधो विधीयते तेन दीर्घात्परो न भवति ॥

## प्राचां नगरान्ते ॥ २४ ॥

प्राचां देशे नगरान्तेङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति

तद्धिते ञिति णिति किति च परतः। सुह्मनगरे भवः, सौह्मनागरः। पौण्ड्रनागरः। प्राचामिति किम्। मद्रनगरमुदक्, तत्र भवः। माद्रनगरः॥

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्॥ २५॥

जङ्गल धेनु वलज इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति विभाषितमुत्तर,मुत्तरपदस्य विभाषितं तद्धिते ञिति णिति किति वा परतः। कुरुजङ्गलेषु भवं, कौरुजङ्गलम्। कौरुजाङ्गलम्। वैश्वधेनवम्। वैश्वधैनवम्। सौवर्णवलजः। सौवर्णवालजः॥

## अर्द्धात्परिमाणस्य पूर्वस्य तु वा॥ २६॥

अर्द्धशब्दात्परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति पूर्वस्य तु वा भवति तद्धिते ञिति णिति किति वा परतः। अर्द्धद्रोणेन क्रीतमार्द्धद्रौणिकम्। अर्द्धद्रौणिकम्। अर्द्धकौडविक,मार्द्धकौडविकम्। परिमाणस्येति किम्। अर्द्धक्रोशः प्रयोजनमस्यार्द्धक्रौशिकम् *॥

## नातः परस्य॥ २७॥

अर्द्धात्परस्य परिमाणाकारस्य वृद्धिर्न भवति पूर्वस्य तु वा भवति तद्धिते ञिति णिति किति वा परतः। अर्द्धप्रस्थिकः। आर्द्धप्रस्थिकः। अर्द्धकंसिकः। आर्द्धकंसिकः। अत इति किम्। आर्द्धकौडविकः। तपरकरणं किम्। इह मा भूत्। अर्द्धखार्यां भवा अर्द्धखारी, किं च स्यात् आर्द्धखारी भार्या यस्य अर्द्धखारीभार्यः। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारइति पुंवद्भावप्रतिषेधो न स्यात्, यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते। यथा वैयाकरणी भार्या अस्य, वैयाकरणभार्य इति॥

## प्रवाहणस्य ढे॥ २८॥

प्रवाहणस्य ढे परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वप-

* परिमाणस्येति किम्। अर्धक्रोशः प्रयोजनमस्यार्द्धक्रोशिकमिति बहुषु पुस्तकेषु नास्ति।

दस्य वा भवति । प्रवाहणस्यापत्यं, प्रावाहणेयः । प्रवाहणेयः । शुभ्रादिभ्यश्चेति ढक् प्रत्ययः ॥

तत्प्रत्ययस्य च ॥ २९ ॥

ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः । प्रावाहणेयकम् । प्रवाहणेयकम् । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः ॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥

नञ उत्तरेषां शूचीश्वर क्षेत्रज्ञ कुशल निपुण इत्येतेषामचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति तद्धिते ञिति णिति किति वा परतः । शुचि । अशौचम् । आशौचम् । ईश्वर । आनैश्वर्यं,मनैश्वर्यम् । क्षेत्रज्ञ । आक्षैत्रज्ञ्यम् । अक्षेत्रज्ञम् । कुशल । आकौशलम् । अकौशलम् । निपुण । आनैपुण,मनैपुणम् । अत्र के चिदाहुरियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते । नञ्पूर्वात्तत्पुरुषादित्युत्तरो भावप्रत्ययः प्रतिषिध्यते तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद्भवतीति । तदपरे न मृष्यन्ते । भाववचनादन्योपि हि तद्धितो वृद्धिनिमित्तमपत्यादिष्वर्थेषु नञ्समासादेव विद्यते बहुव्रीहेश्च नञ्समासाद्भाववचनोप्यस्ति तत्राङ्गाधिकारोपमर्द्दनं न युज्यतइति । अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु पठ्येते,ततस्ताभ्यां भावे ष्यञ्भवति ॥

यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥

यथातथ यथापुर,इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः । आयथातथ्यम् । अयाथातथ्यम् । आयथापुर्यं,मयाथापुर्यम् । अयथातथ, अयथापुरेति ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ । सूत्रे यथातथयथापुरशब्दौ तु यथा सादृश्यइति अव्ययीभावसमासौ तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम् । भाष्ये तु यथादर्शितम् अयथातथाभाव इति तथा सुप्सुपेति समासो लक्ष्यते ॥

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

### ॥ पञ्चदशस्तबकावशेषः ॥

एवं तत्र गिरिगतोदरेऽदरे दामोदरादरानुग्रहतो हृतोपद्रवा द्रवातिरेकेण समयं रसमयं जानन्तः कोऽपि किमपि नापरं परं तदेकमनसो मनसो विषयीचक्रुः ॥ १७४ ॥

द्रवातिरेकेण सारस्याधिक्येन । अपरं श्रीकृष्णादन्यम् । परम् उत्कृष्टम् ॥ १७४ ॥

तेषु च ।

एके विस्मयिनः परे रतिभृतः केचित् प्रहासप्रियाः
प्रोत्साहाश्रयिणः परे सखितया प्रीत्येकनिष्ठाः परे ।
सर्वे कौतुकिनः स्मयेन रभसेनापि प्रसीदद्धियो
वात्सल्यादनवस्थिता तु जननी न स्वास्थ्यमालम्बते ॥ १७५ ॥

अथ तत्र विविधवासनानां सर्वेषामेकत्र स्थितानां निखिलरसपोषकस्वरूपे तस्मिन् श्रीकृष्णे स्वस्वभावोदयमाह । विस्मयिनो विप्रपीराद्याः । रतिभृतः श्रीराधाद्या गोपीजनाः । प्रहासप्रिया विदूषकाः सखिभेदाः । प्रोत्साहाश्रयिणः प्रियसखाः सुबलादयः । प्रीत्येकनिष्ठा दासा रक्तकपत्रकाद्याः । जननी न स्वास्थ्यमिति, तत्रापि वात्सल्यस्योदयोद्रेक इति शान्ताद्याः पञ्च मुख्यरसा दर्शिताः ॥ १७५ ॥

एवं सति सा सादरमेलालवङ्गखण्डाखण्डामोदघनघनसारसारस्यरस्यतमं विदलितमुद्वेगमुद्वेगहारि हारितताम्बलिकादलपुटघटितवीटीपरिपाकललितं करकमले निधाय निजगाद ॥ १७६ ॥

विदलितं कर्तितम्, उद्वेगं गुवाकफलम्, "गुवाकः खपुरोऽस्य तु । फलमुद्वेग"मित्यमरः । कथंभूतम्, एला च लवङ्गखण्डानि च अखण्ड आमोदो यत्र तथाभूतो घनो निविडो घनसारः कर्पूरश्च तैर्यत् सारस्यं सरसता तेन रस्यतमम् अत्यास्वाद्यम् ॥ १७६ ॥

वत्स मुरलीवादनं परिहर नादेनास्या दामोदर मोदरपूरणं भवति भव तिरोधापयितुं खेदमधुना धुनासि किमपरं मे मनो मनोहरमिदं प्साहीप्सा हीयते यत्र ॥ १७७ ॥

अस्या मुरल्या नादेन· उदरपूरणं मा भवति न स्यात्, खेदं तिरोधापयितुं दूरीकर्तुम्· अधुना भव वर्तस्व, इदं मनोहरं वस्तु प्साहि भुङ्क्ष्व, यत्र ईप्सा हि निश्चितम्· ईयते प्राप्नोति तच्च प्साहि, "प्सा भक्षणे" ॥ १७७ ॥

गतो हि बहुतिथोऽनेहा नेहापरं विलम्बस्व ॥ १७८ ॥

बहुतिथः· बहूनां पूरणः, अनेहा कालः ॥ १७८ ॥

यदि विलम्बसे दिवि लम्बसेषिच्यमानजलविरामापेक्षया रामापेक्षया तदा कृतं ते यदयं बुभुक्षितः खिद्यति ॥ १७९ ॥

दिवि लम्बानि लम्बमानानि सेषिच्यमानानि· अतिक्षरन्ति जलानि तेषां विरामापेक्षया यदि विलम्बसे तदा रामापेक्षया तव कृतम्, अलमित्यर्थः । रामापेक्षा त्वयातः परं त्यक्तेति कृपणं भोजनप्रवृत्तिफलकमिति भावः ॥ १७९ ॥

अथवेदं ताम्बूलमद्धि मद्धितकृत इति सुबलमामन्त्र्य सुबल बलमानस्ते महानत्र प्रणयः, तदिदमाशय समाशय सरसताम्बूलमिति तस्य करे ददाति ॥ १८० ॥

अधुनैव त्वया भोजितोऽस्मीति नेदानीं मे बुभुक्षेत्यनश्नन्तमाह· अथवेदमिति । अद्धि भुङ्क्ष्व, मद्धितकृते, मदनुरोधार्थमित्यर्थः । आशय भोजय । समः सख्या तुल्य आशयोऽन्तःकरणं यस्य हे तादृश ॥ १८० ॥

स च सचमत्कारमादाय समाकृष्य वंशिकां वंशिकाङ्गुरागस्य तस्य मुखकमलमञ्चलेन विमृज्य ताम्बूलमादयामास मादयामास च मातृहृदयं हृदयंगमो धराधरधराधरपुटं च रञ्जयामास ॥ १८१ ॥

वंशिकाया अगुरुरसस्य· अङ्गरागो यस्य तस्य, "वंशिकागुरुराजार्हे"त्यमरः । धराधरधरस्य कृष्णस्याधरपुटम् ॥ १८१ ॥

अथ बहिश्च ।

पृष्ठस्थेन विडोजसा दृढरुषा नुन्नो घनानां गणो
यावच्छक्ति ववर्ष शक्तिसदृशं वाति स्म झंझानिलः ।
अद्रीन्द्रस्य तु मेखलापरिसरान्निर्धाविता धूलयो
नैवाक्लेदि खगैर्मृगैश्च न दलैः शीर्णै तरूणामपि ॥ १८२ ॥

विडोजसा· इन्द्रेण, "विडोजाः पाकशासन"इत्यमरः, श्लेषभङ्ग्या गालिप्रदानं च । नुन्नः प्रेरितः ॥ १८२ ॥

आरात् पारावारवारादपारान्
वारां भारान् वारिदा यानहार्षुः ।
ते तं जग्मुः क्ष्मां गताः किंत्वमीषां
गारोद्गारक्षोभ एवावशिष्टः ॥ १८३ ॥

पारावारवारात् समुद्रसमूहात् ते वारां भारास्तं समुद्रमेव क्ष्मां गताः सन्तो जग्मुः । अमीषां वारिदानां गारोद्गाराभ्यां निगिलनोद्गिलनाभ्यां क्षोभः ॥ १८३ ॥

किंच ।

भ्रान्तं भूरि महानिलैर्बहुतरं वान्तं पयोदैः पयः
श्रान्तं तैरपि तैश्च हन्त पतितं तस्यैव पादोपरि ।
न श्रान्तं पतितं च नैव तदपि क्रोधेन वास्तोष्पतेः
क्रोधान्धः परमन्ध एव हतधीर्नान्धो दृशान्धो जनः ॥ १८४ ॥

तस्यैव· इन्द्रस्यैव ॥ १८४ ॥

एवं वृष्ट्यै निरन्तरायनिरन्तरायमाणाः प्रलयकालतद्विधजगत्प्रभञ्जनप्रभञ्जनसहिताः प्रबला बलाहका अहो अहोरात्रान् सप्त

तन्तुं* सप्ततन्तुभङ्गजनितमन्युं शतमन्युं शतकोटिकोटिकुटिलं प्रीणयितुमशक्नुवन्तोऽवन्तोऽनिशं तन्निदेशमपि विनाशनाशया व्रजभुवां स्वस्यपुटभेदनस्य स्वस्यपुटभेदनस्य दशामात्रं गता गतासव इव यदा बभूवुस्तदा त्रपयापयातमदो निजपुरं पुरंदरो न गन्तुमियेष ॥ १८५ ॥

अहोरात्रान् सप्त व्याप्य वृष्टयर्थं निरन्तरायं निर्विघ्नं यथा स्यात् तथा निरन्तरमयमानाश्चलन्तो बलाहका मेघास्तं तु शतमन्युमिन्द्रं तु प्रीणयितुमशक्नुवन्तः श्रान्त्या गतासव इव यदा बभूवुस्तदा पुरंदरो निजपुरं गन्तुं त्रपया न इयेष नैच्छत् । तंतु कीदृशम्, सप्ततन्तोर्मखस्य भङ्गेन जनितमन्युं, शतकोटिकोटेर्वज्रायादपि कुटिलम् । व्रजभुवां स्वस्थं यत् पुटभेदनं पत्तनं तस्य विनाशनस्याशया तन्निदेशमिन्द्राज्ञामनिशमवन्तः पालयन्तोऽपि । किंच, स्वेषां यानि स्यपुटानि शिरोऽस्थीनि तेषां भेदनस्यैव स्फोटनस्यैव दशां गताः ॥ १८५ ॥

तस्य तु सप्तभिरहोभिरहो सप्तयुगायितं धरणिधरधरपरिजनानां तु सप्तघटिकाभिरघटि काभिरमणीयतेयं भगवतो विभवस्य भवस्य कमलभवस्य च यो न गोचरो यो नगोऽचरोऽस्य करकमलगतः, स च तावता वतायामवतापि तापिभुवनेन तापिभुवनेन धारानिकरकरकापातवातबाधासहस्रेणापि निरुपद्रुतो द्रुतोद्धूर्तितशरीर इव बहुशो बहुशोभाभरनिर्भर इवाभाति स्म ॥ १८६ ॥

सप्तभिरहोभिः सप्तभिर्घटिकाभिरिव अघटि चेष्टितं, समभावीति वा, इन्द्रस्य महत् कष्टमेषां तु महत् सुखमेवेति ध्वनितम् । वर्णितमर्थमुपसंहरन् सशीत्कारमाह भगवतो विभवस्य केयमभिरमणीयता यो विभवो भवस्य शंभोः । योऽचरो निश्चलो नगो गोवर्धनपर्वतः । स च तावतापि धारानिकरादिसहस्रेणापि निरुपद्रुतो भगवच्छक्तिसंचारादिति भावः । वतेति विस्मये । आयामवतापि, यतस्तापीनि अनुतापयुक्तानि भुवनानि लोका यतस्तेन । तापकानि जलानि यत्र तेन ॥ १८६ ॥

* तं त्विति मुद्रणीये परसवर्णः प्राग्वत् ।

व्रजे पुरगोपुरगोपानसीप्रभृतिकमपि कमपि शोभाभरमापातिप्रभावतोऽभावतो विपदां कृतमङ्गलस्नानमिव ॥ १८७ ॥

किंच । व्रजे पुरेति, तत्रापि भगवच्छक्तिनिधानमेव हेतुरित्याह· अतिप्रभावत इति ॥ १८७ ॥

तथा सति जन्मान्तरमापन्नमिव गगनम्, अङ्कुरिता इव हरितः, नश्यद्दशायामन्धतमसैरुद्गीर्णो इव प्रकाशनामा पदार्थः, तत्कालमदितिगर्भान्निष्क्रान्त इव किरणमाली, तत्क्षणमादिवराहेणोन्नीतमिवावनितलं, सद्यः प्ररुह्य वर्धिता इव तरुगुल्मलतादयः, उन्मादव्याधिविनिर्मुक्त इव· अपस्मारतो निर्गत इव प्रकृतिं गतः पवनः ॥ १८८ ॥

उन्मादापस्माराभ्यां परनिर्जोद्वेजकत्वद्योतनम् ॥ १८८ ॥

पतिव्रतताव्रततादवस्थ्येन जलनिधिपतिकृतात्मसमर्पणतया तद्गतजीवनत्वेन नाममात्रैकशरीरा गिरिदुहितरः, भगवत्तत्त्वावबोधसंपत्तौ कामादय इव कुतोऽपि द्रुतविद्रुताः पयोवाहाः ॥ १८६ ॥

पतिव्रतता पातिव्रत्यं तदेव व्रतं तस्य तादवस्थ्येन स्वस्थत्वेन जलनिधिरेव पतिस्तत्र कृतमात्मसमर्पणं याभिस्तत्तया । जीवनं जीवितं जलं च । गिरिदुहितरो नद्यः । पयोवाहा मेघाः ॥ १८९ ॥

क्रमपतितेषु सप्तस्वहोरात्ररूपगर्भेषु कालभार्याया अष्टममिवापत्यमहः समुत्पन्नं यदि तदा श्रीगोवर्धनधरः सरसमुवाच ॥ १६० ॥

काल एव भार्या तस्याः ॥ १९० ॥

भोभो आर्यपादाः,

नष्टा कष्टातिवृष्टिः क्षयसमयघनाः संक्षयं प्राप्तवन्तः
शान्तं ध्वान्तं समन्तात् क्षितिरपि रहिता दुर्दमैः कर्दमौघैः ।
सप्ताहं प्राप्तमूर्च्छो नयनमिव समुन्मीलयामास सूर्यः
पुर्यो वः पूर्वरूपाः सपदि समुचितः प्रक्रमो निष्क्रमस्य ॥ १६१ ॥

क्षयसमयो महाप्रलयः । सप्ताहमिति, विंशत्यधिकचतुःशतघटिकातिक्रमज्ञानात् ॥ १९१ ॥

एवमुक्ते भगवतागवता सर्वे एव समुदिता मुदिताः सन्तो महोत्साहे तथाविधेऽनूना अनूनां धेनूनामावलिमग्रतो निष्क्रामयितुं प्रचक्रमिरे ॥ १९२ ॥

अगवता गिरिधारिणा, समुदिताः प्राप्तसमुदयाः, महोत्साहेऽनूना अन्यूनाः ॥ १९२ ॥

तासां च यथाहुंकृतमेव बहिर्जिगमिषूणामिषूणामिव वेगो यद्यपि समजनि तथापि तथा पिबन्तीनां भगवदाननमाधुर्यमाधुर्यमिवात्मानं मन्यमानानामन्यमानानादरतयादरतया च तद्बाधदुःखस्य क्षणविलम्बे विलम्बेष्टयति[*] सति स तिलमात्रतो निष्कम्पानुकम्पानुगतया तयापाङ्गभङ्ग्यैव निष्क्रामयामास ॥ १९३ ॥

इषूणामिवेति बहुक्षणनिरोधोत्तरनिष्क्रमे पशूनां तथा स्वाभाव्यात्, तथापि तथा निर्विघ्नं पिबन्तीनामित्यर्थः, आधुर्यमतिश्रेष्ठम्, अत एव अन्यमाने सुखहेतुकसंमानान्तरे अनादरतया तद्बाधदुःखस्य तस्य माधुर्यपानस्य बाधे प्राप्ते यद्दुःखं तस्य अदरतया अनल्पतया च हेतुना क्षणविलम्बे सति श्रीकृष्णनिष्क्रमादर्शनात् पुनः स्वबलादेव परावृत्य बिलं गर्तं वेष्टयति सति, स श्रीकृष्णः, अपाङ्गस्य भङ्ग्यैव अयमहमधुनैव युष्माननुसर्पामीति व्यञ्जयन्त्या इत्यर्थः, तया प्रसिद्धया, ताभिः शिक्षितप्रकारयेत्यर्थः ॥ १९३ ॥

ततश्च ।

पातालोदरतः फणीशितुरिव स्फीताः सहस्रं फणा
ज्योत्स्नाजालमिवालमन्धतमसचस्तं भुवो गर्भतः ।
अद्रीन्द्रस्य शिफावलिः स्फटिकजा संचारिणीवोद्धृता
निश्चक्राम समन्ततो बिलभुवः स्निग्धा गवां संततिः ॥ १९४ ॥

* विलं वेष्टयतीत्येवं मुद्रणीये परसवर्णः प्राग्वत् ।

फणीशितुः शेषनागस्य फणा इति, अत्र घोरत्वप्रसक्तिमाशङ्क्याह ज्योत्स्नाजालं चन्द्रिकासमूहः, तस्यापि दिने सूर्यतः पराभवमाशङ्क्य पुनराह शिफावलिः स्फटिकजेति ॥ १९४ ॥

एवं श्रीकृष्णोक्तिविक्रमतः क्रमतः सर्व एवाभीरा भीराहित्येन विकसदन्तरा दन्तराजिराजिकिरणमञ्जरीजरीजृम्भ्यमाणवदना गिरितलविवरतो वरतोषेण निश्चक्रमुश्चक्रमुत्साहस्य साहस्यसमासन्नं च समासेदुः ॥ १९५ ॥

दन्तराजीनां दन्तश्रेणीनां राजिनीभिर्विराजमानाभिः किरणमञ्जरीभिरतिप्रकाशमानवदनाः, हसो हासस्तेन सह वर्तमानं सहसं सहसस्य भावः साहस्यं तेन समासन्नं संसक्तम्· उत्साहस्य चक्रं, हासोत्साहयोरेकत्र साहित्यौचित्यात् ॥ १९५ ॥

ततश्च ।

भुवो गर्भात् सिद्धौषधिततय इव प्रज्वलन्त्यो दिवापि
चरन्तीनां शैलाद् घृणय इव महादिव्यरत्नावलीनाम् ।
भुजंगानां लोकादिव भुजगफणावृन्दमाणिक्यभासः
समुत्तस्थुः कृष्णे विनिहितनयनप्रान्तमाभीरनार्यः ॥ १९६ ॥

आभीरनार्यः श्रीगोपयुवतयः, शैलात् चरन्तीनां दिव्यरत्नावलीनां घृणयः किरणा इव । अत्र सिद्धौषधितत्यादीनां तिसृणामुपमानां कान्त्या महार्घ्यतया चोत्तरोत्तरप्राशस्त्याद्युवतियूथानामप्युत्तरोत्तरश्रेष्ठानां कनिष्ठक्रमेण निष्क्रमो ज्ञेयः ॥ १९६ ॥

एवं निःसृतेषु तेषु च सहचरादिषु । स्वयमपि च ।

करतलकृतशैलः शैलसीमामतीत्य
व्रजभुवि कृतपादाम्भोजलीलाविलासः ।
कुसुममयमिवैकं कन्दुकं वामपाणेः
शिथिलितमिव कृत्वा तं यथास्थानमास्थत् ॥ १९७ ॥

सहचरादिष्विति । अत्रायं क्रमः ।

निर्जग्मुः कालयन्तो गा गोपास्तास्तत्सखा अपि ।
पौरा गोप्यस्ततो वृद्धा नन्दः सर्वा ततः प्रसूः ॥

वामपाणेः सकाशात्· शिथिलितमिव कृत्वेति, दक्षिणहस्तास्पर्शः स्वस्यानायासत्वं सर्वान् प्रति ज्ञापयितुम् । यथास्थानं तस्य स्थानमनतिक्रम्य, आस्यत् निक्षिप्तवान् ॥ १९७ ॥

एवं यथास्थलस्थलक्षणे क्षणेन कृते सति गिरीन्द्रे स्नेहानुतापितरौ पितरौ गाढमालिङ्ग्य शिरो जिघ्रतुः कुतूहली हली चालिलिङ्ग सस्नेहास्रम् ॥ १९८ ॥

स्नेहादनुतापितरौ· अतिशयेनानुतापिनौ १९८ ॥

हा स्रंसमानवलमिवाखिलमङ्गं गिरिभरेण निर्भरेण निर्भातमस्तीति प्रसूः प्रसूतवात्सल्यातिशया शयाभ्यां वामबाहुमस्य मृद्नती वामकरतलं चुचुम्ब ॥ १९९ ॥

प्रसूः श्रीयशोदा, शयाभ्यां पाणिभ्यां, मृद्नती संवाहयन्ती ॥ १९९ ॥

वात्सल्यकाष्ठाधिरोहिणी रोहिणी च मणिदीपावलिवलितकरतला साश्रुनीरा नीराजयामास ॥ २०० ॥

वात्सल्यस्य काष्ठा·उत्कर्षस्तामधिरोढुं शीलमस्याः सा ॥ २०० ॥

व्रजपुरपुरन्ध्रयोऽरन्ध्रयोजितशुभाशिषो निविडतरस्नेहोदध्यक्षता दध्यक्षताङ्कुरितदूर्वादिभिः पूजयामासुः ॥ २०१ ॥

अरन्ध्रं निश्छिद्रमेव योजिताः शुभा आशिषो याभिस्ताः, यतो निविडतरे स्नेहोदधौ· अक्षताः क्षतं छिद्रं तद्रहिताः, अव्यभिचरिता इत्यर्थः ॥ २०१ ॥

विप्रा विप्रागल्भ्या विप्रभार्या विप्रभार्याश्च सस्नेहमाश्लिष्य सप्रशंसाभिराशंसाभिरानर्चुः ॥ २०२ ॥

विप्रागल्भ्या विशिष्टप्रागल्भ्यवन्तः, विशिष्टया प्रभया· आर्याः ॥ २०२ ॥

सन्नन्दादयश्च पितृव्याः पितृव्याकुलतानूना वत्सलतालता-पाशबद्धा इव निर्भरमालिङ्ग्य शिरो जघ्रुः ॥ २०३ ॥

पितुर्या व्याकुलता तस्यामनूना न न्यूनाः ॥ २०३ ॥

केवलवलमानानुरागरागवत्तरतरलमन्दाक्षमन्दाक्षतविलोचनाञ्चलचलदनुपमनिरीक्षणक्षणविसृष्टशोभासहचरीकेन केनचिन्मनोविलासविशेषेण समर्हयामासुरनुरागिण्यः ॥ २०४ ॥

केवलं वलमानेन· अनुरागेण रागो रञ्जनं तद्वत्तरं च तत् तरलेन विश्लथेन मन्दाक्षेण लज्जया मन्दं यथा स्यात् तथा· अक्षतं च यद्विलोचनाञ्चलं तस्माच्चलत् प्रसरच्च· अनुपमं च यन्निरीक्षणमवलोकनं तत्क्षणे तदवसर एव विसृष्टं दत्तं शोभासहचर्या शोभैव सहचरी तद्द्वारा कं सुखं यतस्तेन ॥ २०४ ॥

अथ तस्मिन्नेवानेहसि हसितसुधासुधावितमधुराधरं मधुराधरञ्जिनं वसन्तमिव सकलसुमनःपरिमलं तमेनमेनसोऽपहारिणं हारिणं व्रजराजयुवराजं नभसि भसितकुसुमसुमहावृष्टिकिरां प्रसिद्धसिद्धसरसविद्याधरविद्याधरसुसाध्यसाध्यशुभगन्धगन्धर्वकिंपुरुषपुरुषयोषितामावलिरतितुष्टा तुष्टाव ॥ २०५ ॥

माधुर्यादधिसंमग्नप्रियवर्गेण सत्कृतम् ।
ऐश्वर्यादधिसंमग्नाः सिद्धाद्यास्तुष्टुवुर्हरिम् ॥

अथानन्तरं तस्मिन्नेवानेहसि समये, "अनेहापि समय" इत्यमरः, तं प्रसिद्धसिद्धादीनामावलिस्तुष्टाव । मधुराधौ चैत्रवैशाखौ रञ्जयितुं शीलमस्य तं वसन्तमिव, सकलानां सुमनसां पुष्पाणां पक्षे देवानां साधूनां वा परिमलो गन्धः पक्षे साद्गुण्यं च यतस्तम्, एनसोऽघस्यापहारिणम् । भानि नक्षत्राणीव सितानि कुसुमानि तेषां सुमहावृष्टिं किरन्तीति तासाम् ॥ २०५ ॥

जय जय नन्दात्मज जय वृन्दावनरसकन्दातुलगुणवृन्दा-
धिकतरनन्दच्चिन्मकरन्दस्वपदरविन्दद्वयकुरुविन्द-
प्रभनखचन्द्रावलिभिरतन्द्रामलरुचिसान्द्राकृतिभिरलं द्रा-
वितनिजलोकव्यतिकरशोक स्फुरदस्तोकप्रथितश्लोक
श्रीधरधीर व्रजवरवीर प्रकटाभीर श्यामशरीर ॥ २०६ ॥

वृन्दावने रसानां सर्वेषां विषयत्वेन आश्रयत्वेन च कन्द मूलभूत, वृन्दावने रसो रागस्तेन कं सुखं ददातीति वा । अतुलैर्गुणवृन्दैरधिकतरं च तत् नन्दन्ती समृद्धिमती चित् उपलब्धिरेव मकरन्दो यत्र तच्च यत् स्वपदरविन्दद्वयं तस्य कुरुविन्दप्रभाभिर्नखचन्द्रावलिभिः । कीदृशीभिः, अतन्द्रा चासौ अमला निष्कलङ्का च रुचिभिः सान्द्रा च आकृतिर्यासां ताभिरिति, कमले चन्द्रश्रेणी सा चातन्द्रत्वादिलक्षणेत्यभूतत्वम् । अलमतिशयेन द्रावितो निजलोकानां व्यतिकरेण व्यतिषङ्गेण शोको येन, इति शोकस्य तमस्त्वं संतापत्वं वा व्यञ्जितम् । स्फुरदस्तोकः प्रचुरः श्लोको यशो यस्य हे तथाभूत ॥ २०६ ॥

वारमेकमात्रमेव तेऽहमित्युदीरयन्ति ये तु तानपि त्वमत्र नाथ पासि
जन्ममृत्युखेदभेदकारिहारिपादपद्ममेव ते भजन्ति ये तु तान्न किंतु ।
नित्यसत्यशुद्धबुद्धमुक्तरूपपार्षदौघसेव्यमानमाननीयगीयमान
गोकुलेन्द्रपुत्र चित्रसच्चरित्र देवदेव तुभ्यमेव मे नमो नमो नमोऽस्तु
॥ २०७ ॥

तेऽहमिति तवास्मीति । नित्यमेव सत्याश्च ते शुद्धबुद्धाः शुद्धज्ञानवन्तश्च मुक्तरूपा ये पार्षदौघास्तैः सेव्यमानश्चासौ माननीयश्च गीयमानश्चेति स तथा ॥ २०७ ॥

प्रकुपितवक्रोद्धतमदशक्रोद्भटकृतविक्रोशनघनचक्रो-
ज्झितगुरुवृष्टिव्रतपुरस्पृष्टिव्रजजनतुष्टिप्रथनपरीष्टि-
प्रकटितहेलालसभुजखेलातोलितशैलाधिप हे जय जय ॥ २०८ ॥

प्रकुपितश्चासौ वक्रश्च· उद्धतमदश्च यः शक्रस्तेन· उद्भटं यथा स्यात् तथा कृतं विक्रोशनं यत्र तादृशं यद्घनचक्रं मेघसमूहस्तेन· उज्झिता गुर्वी वृष्टिस्तया हता पुरुसृष्टिस्तदुपशमोपायनिर्माणं येषां तथाभूतानां व्रजजनानां तुष्टिप्रयत्नं संतोषविस्तार एव परीष्टिः परिचर्या तया प्रकटिता हेलालसस्य भुजस्य या खेला तयैव तोलित उन्नीतः शैलाधिपो येन सः ॥ २०८ ॥

लीलाकन्दुककल्पीकृतगिरितल्पीकृतकरमल्पीभवदवि-
कल्पीभूतसुरेशस्मयमखिलेशव्यतिकरकेशप्रणयिमणीश ।
व्रजजनबन्धो करुणासिन्धो दृढतरबन्धो न खलु मन्दान्धो
भजति भवन्तं भुवि विहरन्तं त्रिभुवनकान्तं स्वमहसि सन्तम् ॥२०९॥

मदान्धो जनो भवन्तं न भजति । कीदृशमपि, लीलया कन्दुककल्पीकृतो यो गिरिस्तस्य तल्पीकृतः करो येन तम् । अल्पीभवन्नतितुच्छीभवन्नविकल्पीभूतोऽपि सुरेशस्य शक्रस्य स्मयो गर्वो यतस्तं, श्लेषेण अविकल्पीभूतो मेषसदृशीभूतो यः सुरेश इत्याक्षेपः । अखिलानाम्· ईशव्यतिकराणां केशप्रणयी शिरोवर्ती यो मणीशो रत्नमुख्यस्तद्रूप । दृढतरो बन्धः संसारो यस्य सः ॥ २०९ ॥

जय जय गोपीरतिरसरोपी सकलकलापीवर सुखवापी-
चर तव देहो घनरसदेहोऽनिशसुखदोहो गतसंदेहो
महदहमादिप्रकृतिपुमादिर्नियतमनादिर्धुततरवादि-
व्यतिकरजल्पः करुणाकल्पः स्वमहिमतल्पश्चिद्रसकल्पः
सपरमहंसैर्योगिवतंसैः प्रथिताशंसैश्चित्सुखशंसै-
रपि हृदि भाव्यो निजजनसेव्यो जगदतिनव्यो जयति सुभव्यो
व्रजजनरञ्जी नवघनगञ्जी निरवधिपुञ्जीकृतसुखसञ्जी-
वनरसमूर्ते कृतरसपूर्ते हृतजगदार्ते सुविशदकीर्ते ॥ २१० ॥

गोपीनां रतिरसं रोपयितुं शीलमस्य तथाभूतः सन् जय जय। हे सकलकलापीवर तव देहो जयति। कथंभूतः, घनं सान्द्रं रसं दिग्धे· उपचिनोतीति सः। अतोऽनिशमेव सुखं दोग्धि पूरयतीति सः। अतो नात्र प्राकृतत्वाशङ्केत्याहुर्गतसंदेह इति। किंच महदहमोरादी यौ प्रकृतिपुमांसौ तयोरप्यादिः। स्वमहिमैव तल्पं शय्या यस्य सः। करुणा कृपैवाकल्पो भूषणं यस्य सः, तस्या आकल्प इति वा। चिद्रसानां कल्पः कल्पनं यस्मात् सः। सुभव्यः सुमङ्गलः॥ २१०॥

जय जय कृष्ण प्रणयसतृष्ण
द्विषति महोष्ण प्रधनिषु धृष्णक्।
जय जय धीर व्रजवरवीर
प्रकटाभीर श्यामशरीर॥ २११॥

द्विषति शत्रौ महोष्ण। प्रधनिषु योधृषु धृष्णक् हे प्रगल्भ॥ २११॥

तव पादसरोजमधुव्रततां गतवानपवर्गमपि ह्यभिकाङ्क्षति न
क्व नु धर्मधने सुखभोगकथासुतदारसुहृत्प्रभृतिग्रहिलत्वमपि।
भवनं द्रविणं सुहृदः सुजना गुरवो गरिमा महिमा यशसां च ततिर्भगवन् भजतामखिलं स भवान् निरुपाधिकृपाजलधिर्गुणरत्नमयः॥२१२॥

अपवर्गं मोक्षमपि न· अभिकाङ्क्षति, क्व नु धर्मधने, किं पुनर्धर्मार्थावित्यर्थः। अत एव भजतां जनानां सुखादिग्रहिलत्वं न स्यात्। किंच भवनादिकमखिलं भवानेव॥ २१२॥

त्वां स्तुमहे स्तुतिदूर विद्म रतिरागपरा गहनार्तिभृतो-
ऽर्तिह विभ्रतमभ्रकदम्बविडम्बकमङ्गमनङ्गतरङ्गसुसंगत-
मिन्दुमदं दुरवापमिवापरमानयदाननबिम्बमलं
विमलं वनशोभन लोभहमुद्वह मुद्वहदुत्कसमुत्कर हे॥ २१३॥

रतिरागपराः प्रेमासक्तिपरा जनास्त्वां विदुर्जानन्ति, वयं तु स्तुमहे, नतु विद्म इति भावः। किंच हे स्तुतिदूर स्तुतिभिरपि दुर्गम

तथापि ते दीनवात्सल्यस्वभाव एवास्मान् प्रवर्तयतीत्याहुः । गहनार्ति- भृतो जनस्य· आर्तिं पीडां हन्तीति हे तथाभूत । त्वां कथंभूतम्, अभ्र- कदम्बविडम्बकं मेघसमूहतिरस्कारकमङ्गं बिभ्रतम् । न विद्यते परः शत्रु- स्तिरस्कारको यस्य तत्· अपरम्· आननबिम्बं च बिभ्रतम् । कथंभू- तम्, इन्दोश्चन्द्रस्य मदं गर्वं दुरवापमिव दुर्लभमिव· आनयत् कुर्वत् । अलमतिशयेन वनं वृन्दावनं शोभयतीति हे तादृश । अत एव लोभहा- म्· अन्यस्पृहाहारिणीं मुदं वहति प्रापयतीति तथा, उक्तपोषन्यायेनाहुः, मुद्वहन्तो हर्षधारिण उत्कसमुत्करा उत्सुकसमूहा यस्य तथा ॥ २१३ ॥

पद्मरुगद्मरनेत्रमतित्रसमञ्चितकुञ्चिसदैर्घ्यमहा-
र्घ्यकचप्रचयप्रकटीकृतभाकृतकामकलामतचामर ।
तामरसाक्ष समक्षरदुन्मधुसन्मधुराधरसेधधुरा-
निजवैभवतो धुतसाधुसुबिम्बफलं वसुधामहधामद ॥ २१४ ॥

पद्मरुचां कमलकान्तीनाम्· अद्मरे कवलकारिणी नेत्रे यस्य तम् । त्रसमतिक्रान्तम्· अतित्रसं, धीरमित्यर्थः, "त्रसमिङ्गं चराचर"मित्यमरः । अञ्चितश्चासौ कुञ्चो कुटिलश्च सदैर्घ्यश्च महार्घ्योऽभिनन्दनीयश्च यः कचप्रचयस्तेन प्रकटीकृता या भा तया कृतं कल्पितं कामकलासु मतं चामरं यस्य हे तथाभूत । हे तामरसाक्ष । सम्यगक्षरत्· निश्चलम्· उत्कष्टं मधु यत्र स चासौ संश्च मधुरश्च योऽधरस्तस्य सेधधुरा माङ्ग- ल्यातिशयस्तया धुतं खण्डितं साधु सुबिम्बफलं येन तम् । वसुधाया भूमेर्महधामनी उत्सवकान्ती ददातीति हे तादृश ॥ २१४ ॥

मौक्तिकपङ्क्तिदकुन्दकसुन्दरदन्त निरन्तरभासुरभासुरसामलधा- मरहास ॥ २१५ ॥

मौक्तिकपङ्क्तिं द्यन्ति खण्डयन्तीति ते च ते कुन्दकसुन्दराश्च दन्ता यस्य हे तथाभूत, निरन्तरमेव भासुरः कान्तिमांश्चासौ भस्य नक्षत्रस्य· इव· आ सम्यक् सुरसम्· अमलं धाम रातीति तादृशश्च हासो यस्य तथा ॥ २१५ ॥

विलासकवंशिकमंशिकनूत्नसरत्नककाञ्चनपञ्चककुण्डल-
ताण्डवलोलकपोलवतंसकमंससगुञ्जितमञ्जुसरन्मधु-
पोन्मधुरागपरागधुरामलकोमलमाल्यसुपाल्यलसद्वर-
पीवरवक्षसमक्षरसौभगशोभमपारकृपारम मारम ॥ २१६ ॥

विलासं कायति गायतीति विलासिका वंशिका यस्य तम् । अंशि परिपूर्णं कं सुखं दर्शने यस्मात् तच्च नूत्नं च सरत्नकं च यत् काञ्चनं तस्य पञ्चो विस्तारो ययोस्तयोः कुण्डलयोस्ताण्डवेन लोलौ चपलौ कपोलचारिवतंसौ यस्य तम् । अंसे स्कन्धे तद्गतं चेत्यर्थः सगुञ्जितं मञ्जु यथा स्यात् तथा सरन्तो मधुपा यत्र तच्च तत्· उन्मधु· उत्कृष्टो मकरन्दः· रागो रक्तिमा परागः पुष्परजस्तेषां धुरा· अतिशयेन· अमलं कोमलं च यन्माल्यं तेन सुपाल्यं लसत्· वरं पीवरं वक्षो यस्य तम् । अक्षरमचलं सौभगं यस्यां सा शोभा यत्र तम् । अपारया कृपया रमयतीति हे तथाभूत ॥ २१६ ॥

बन्धुरसिन्धुसुताङ्कसशङ्कसुदामनि धामनिकामसुधामनि
वक्षसि लक्षणलक्षित दक्षिणकौस्तुभवास्तुनि निस्तुलवस्तुनि
हारविहारतरङ्गिणि रिङ्गितवल्लभतल्लजतीव्रवधूव्रज-
हृद्भवमुद्भवदुन्नतिमन्नवदर्पकदर्पणदर्पसमर्पण-
मुत्कटमुत्करभेन्द्रसुसान्द्ररसाकरसत्करदोर्भरनिर्भर ॥ २१७ ॥

वक्षसि लक्षणैर्लक्षित । कथंभूते, बन्धुरो मनोहरो यः सिन्धुसुताङ्को लक्ष्मीरेखा तत्र सशङ्कं तच्छोभाच्छादनसभयं सुदाम सुमाल्यं यत्र तस्मिन्, धाम्नां कान्तीनां निकामसुन्दरगृहे, दक्षिणस्य सरलस्य कौस्तुभस्य वास्तुनि वासभूमौ, निस्तुलवस्तुनि निरुपमपदार्थरूपे, हाराणां विहारा एव तरङ्गास्तद्वति । रिङ्गितः संचारितो वल्लभतल्लजे प्रियमुख्ये तीव्रे दुष्प्रवेशे वधूव्रजे हृद्भवः कामो येन तम् । ततश्च· उद्भवच्चेव· उन्नतिमान् यो नवो दर्पकः कन्दर्पः स एव दर्पणः स्वप्रतिबिम्बास्पदं तत्र दर्पस्य

समर्पणं संचारणं यस्य तम् । उत्कटा मुत् हर्षो यस्य तथाभूतस्य कर-भेन्द्रस्य सुमान्द्रो रसाकरश्च यः सत्करः स इव दोर्बाहुस्तस्य भरेण भारेण निर्भर निरतिशय ॥ २१७ ॥

गोष्ठगरिष्ठमहिष्ठवरिष्ठ म-
हेन्द्रसुसान्द्रमदक्षयसुक्षम
नन्दय नन्दज नो दययोदज-
जन्मनुतोन्मददानवहानद
निर्जरदुर्जय भोजय भोजय ॥ २१८ ॥

गोष्ठस्य हितोपदेष्टृत्वात् आश्रयत्वान्मुख्यत्वाच्च क्रमेण गरिष्ठादिक, महेन्द्रस्य सुसान्द्रमदक्षये सुक्षम, हे नन्दज, नोऽस्मान् दयया नन्दय । उदजन्मा ब्रह्मा तेन नुत स्तुत । उन्मदानां दानवानां हानद नाशक । निर्जरेण देवेनापि दुर्जय । भोजय स्वयं प्रयोजको भूत्वास्मान् पालय, भुजेर्ण्यन्ताल्लो ट् ॥ २१८ ॥

त्रिलोकशोकभञ्जनं स्वभक्तचित्तरञ्जनं
भवप्रवाहखण्डनं शिखण्डखण्डमण्डनम् ।
स्फुरत्कलिन्दनन्दिनीतटान्तकान्तकानने
तमस्तमालगञ्जनं भजामहे महन्महः ॥
प्रथमशाखा ॥ २१९ ॥

तमस्तमालगञ्जनमिति तमोगुणस्य साक्षाद्विनाश एव, तमालस्य तु सारूप्येण तिरस्कार एवात्र व्याख्येयः ॥ २१९ ॥

त्वं जय रञ्जय नो जय योजय
सादरपादरतौ भवभीभर-
मर्दय मर्दय दुर्मदनिर्दय
काममदामयमाशयमाशय
शं जनयाञ्जनपुञ्जनिगञ्जन ॥ २२० ॥

नोऽस्मान् रञ्जय । केन प्रकारेण, सादरं यथा स्यात् तथा पादरतौ चरणमेवाप्रीतौ योजय । एवं नोऽस्मान् जय कामवशतां विधूय स्ववशं कुर्वित्यर्थः ।

ननु संसारिणां युष्माकं कथमेवं भवेत् तत्राहुः, भवभीभरम् अर्दय । तत्र प्रथमं काममद एव आमयो व्याधिस्तं मर्दय । यतो दुर्मदेषु दुष्टेषु निर्दय हे शिक्षक । ततश्च शं कल्याणं जनय । जनयित्वा च आशयमन्तःकरणम् आशय व्यापय, "अशू व्याप्तौ" । हे अञ्जनपुञ्जस्य निगञ्जन निजवर्णकान्त्या तिरस्कारक ॥ २२० ॥

रञ्जनकुञ्जविहारविकार

विशारद शारदचन्द्रवितन्द्र-

दरस्मित विस्मितकृद्वदनाद्

वत विस्वरदस्वरनर्मद मर्म-

रसग्रहणग्रह जल्पविकल्पह-

सुश्रुतविश्रुत जल्पितकल्पित-

कर्णरसार्णव शुद्धरसोद्भव ॥ २२१ ॥

रञ्जनो रञ्जको यः कुञ्जविहारस्तत एव विकारो हर्षादिभावोद्गमो यस्य तथा । हे विशारद । शारदचन्द्रवद्वितन्द्रं दरस्मितं मन्दहासो यस्य तथा । विस्मयकारिणो वदनात् सकाशाद् विस्वरद्भिरस्वरैर्नर्म ददासि । वतेति हर्षे । मर्मण्यपि यो रसस्तस्य ग्रहणे ग्रह आग्रहो यस्य तथा । जल्पविकल्पौ वितण्डासंशयौ हन्तीति तथाभूतं यत् सुश्रुतं वेदशास्त्रं तत्र विश्रुत विख्यात, "श्रुतमाकर्णिते वेदे" इति मेदिनी । जल्पितेन वचनेन कल्पितः कर्णयो रसार्णवो येन तथा । शुद्धरसेनैव उद्भव उत्सवो यस्य तथा ॥ २२१ ॥

मन्मथसन्मदघूर्णनपूर्ण-

दलत्कमलोत्करह्रीकरभाकर-

लोलविलोचन लोचनरोचन ॥ २२२ ॥

मन्मथेन कामेन हेतुना मन्मद्रे विद्यमानमदे घूर्णनपूर्णं हन्नत्क-मलोत्कराणां स्फुटत्पद्मस्मूहानां ह्रीकरे तिरस्कारिणी भानां कान्तीनाम्-आकरौ खनी तद्रूपे लोले चपले विलोचने नेत्रे यस्य तथा, लोचनानि सर्वजननेत्राणि रोचयतीति तथा ॥ २२२ ॥

तापकृदापदपायकृपायद

भक्त्यनुरक्त्यनुरूपसुरूपनु-

वज्जनहृज्जलजासनवासल ॥ २२३ ॥

तापकृद् या· आपद् विपत्तिस्तस्या अपायो यतस्तथाभूता कृपा यस्य तथा, अयः शुभावहो विधिस्तं ददातीति तथा, भक्तिर्भजनमनुरक्तिः प्रेम तदनुरूपेण सुरूपं शोभनं सौन्दर्यं नुवतां स्तुवतां जनानां हृदेव जलजासनं कमलरूपमासनं तत्र वासं लातीति तथा ॥ २२३ ॥

कोपयमोपमशक्रपराक्रम-

मण्डलखण्डनचण्डिममण्डन

हेलनखेलनशैलवितोलन-

निर्भयदोर्भरताण्डवपाण्डर-

पङ्कजशङ्कनहंसवतंसन

रूपनिरूपकपूर्तिदकीर्तिक ॥ २२४ ॥

कोपेन यमोपमस्यापि शक्रस्य पराक्रममण्डलं खण्डयति यश्चण्डिमा तेनैव मण्डनं भूषणं यस्य तथा । हेलनेन हेलयैव खेलनशीलस्य क्रीडापर्वतस्य वितोलनमुन्नयनं तत्र निर्भयस्य दोषो भुजस्य भरेण ताण्डवं नाट्यं ययोस्ते पाण्डरपङ्कजशङ्कने श्वेतकमलशङ्काधारिणी हंसवतंसने सूर्योपमकुण्डले यस्य तथा । रूपनिरूपकस्य पूर्तिदा कीर्तिर्यस्य तथा ॥ २२४ ॥

वामकरामलपद्मसुसद्मल-

गोत्र विचित्रचरित्रपवित्र च-

राचरगोचरखेचरभूचर-
विस्मयनस्मयकार महारय ॥ २२५ ॥

वामकर एव· अमलपद्मं तदेव सुसद्म तल्लाति गोत्रः पर्वतो यस्य तथा । विचित्रेण चरित्रेण पवित्र । हे चराचराणां गोचरखेचराणां देवादीनां भूचराणां मनुष्याणां च विस्मयनेन स्मयकार· ईषद्धास्यकारक । हे महारय महावेग, उत्सवालय इति वा ॥ २२५ ॥

वल्लववल्लभ सुप्रथ सुप्रभ
दुर्मददुर्मरदुर्धरवार्धर-
वर्गनिसर्गसुकष्टसुरिष्टसु-
पीवरसंवरसंचयसंचर-
णाकुलगोकुलरक्षणदक्ष ल-
सत्तमवृत्तजवाद्भुतसद्भुज-
विक्रमचक्रमहत्तर सत्तम ॥ २२६ ॥

वल्लवा एव वल्लभा यस्य तथा । शोभना प्रथा यस्य तथा । हे सुप्रभ । दुर्मदश्चासौ दुर्मरो मरणशून्यश्च दुर्धरो धर्तुमशक्यश्च यो वार्धरवर्गः प्रलयमेघसमूहस्तस्य निसर्गात्· अतिवृष्टिरूपस्वभावात् सुकष्टोऽतिकष्टदश्च सुरिष्टोऽत्यशुभश्च सुपीवरः· अतिपुष्टश्च संवरसंचयो जलसंचयस्तस्य संचरणादाकुलस्य गोकुलस्य रक्षणे दक्ष, "रिष्टं क्षेमाशुभाभावे" ष्विति, "नीरक्षीराम्बुशंवर"मिति चामरः । लसत्तमश्चासौ वृत्तो दृढश्च जवेनाद्भुतश्च सश्च यो भुजविक्रमस्तस्य चक्रेण महत्तर । हे सत्तम ॥ २२६ ॥

निस्तुलशस्त दयामय कामद
चिद्घनसद्घनवृन्दविनिन्दन-
विग्रहविग्रहजाग्रदनुग्रह
दक्ष विपक्षविनिग्रहणीय वि-
शिष्टसदिष्टद दुष्टसुकष्टद ॥ २२७ ॥

निस्तुलं शस्तं क्षेमं यतस्तथा । हे दयामय । हे कामद । चिद्घनश्चासौ संश्च घनवृन्दस्य विनिन्दनः कान्त्या तिरस्कारकश्च यो विग्रहो देहस्तस्य विशिष्टो ग्रहो ग्रहणं प्रपञ्चलोके प्रकटीकरणं तेन जायत्-अनुग्रहो यत्र तथा । हे दक्ष । विपक्षाणां विनिग्रहणे- उग्र । हे विशिष्टसदिष्टदायक । दुष्टानां सुकष्टद ॥ २२७ ॥

दलत्कदम्बकेसरप्रभाविडम्बिडम्बर-
च्छविच्छटावराम्बरो महामनस्विनां वरः ।
मदान्धताधुरंधरं जिगाय यः पुरंदरं
जुगोप गोपगोकुलं स वस्तुतः स्तुतोऽस्तु नः ॥
द्वितीयशाखा ॥ २२८ ॥

डम्बर आटोपः । वस्तुतो यथार्थतः ॥ २२८ ॥

॥ शेषमग्रे ॥

---

## ॥ अथ संस्कृतसमाजाभिधसभावृत्तान्तवर्णनम् ॥

स्वस्ति श्री१०८मती
विजयिनी विनयेन मुदाऽऽदराद्
भरतभूपतिवृन्दसमर्पितम् ।
निजगुणानुगुणं भुवनेश्वरी-
पदमिदं चिगुणाहि विधौ दधौ ॥ १ ॥

सा च निर्वैरोर्वीतलसाम्राज्यसुखमनुभवन्ती पुत्रपौत्रमित्रबान्धवादिपरिवारसमेता चिरं जीव्यादिति सर्वजगन्नियन्तारं विश्वेश्वरमनवरतं प्रार्थयते,

धर्माधिकार्युपपदो ढुण्ढिराजशास्त्री ॥

॥ अथैकमत्यवादः ॥

अहो ! महदद्य सुदिनाहं यदस्मासु भारतवर्षीयप्रजासु मातेव वात्सल्यं वहन्ती श्री१०८मती श्वेतद्वीपनिकेतना विजयिनी देवीतः पूर्व-

मेव वस्तुसती भरतभूमिभूपालसामन्तचक्रवर्तिन्यपि संप्रति भारतवर्षीयमहाराजाधिराजप्रभृतिनिखिलभारतवर्षीयप्रजानां भूयो भूयो ऽभ्यर्थनया भारतराजराजेश्वरीति निजमहत्त्वानुरूपां पदवीं स्वीचक्रे । तेन च भारतीयजनस्य सर्वथैकमत्यं संपादितं भविष्यतीति सुदृढमनुमनोमि । अस्तीदं तावदसंदिग्धतया निर्विवादं सकलजनसंमतं यद् ऐकमत्येन बहूनि दुःसाधान्यपि कार्याणि तादृशकार्यकरणासमर्थैरपि साधयितुं शक्यन्ते ॥

तथा च श्लोकः । बहूनामप्यसाराणां संयोगः कार्यसाधकः । तृणैरारभ्यते रज्जुस्तेन नागोऽपि बध्यते ॥ १ ॥ यथा हि ऐकमत्येनैव च हितोपदेशे वर्णिताः कपोता जालबन्धेन जीवितसंदेहमापन्ना अपि जिजीवुः । संप्रत्यपि दृश्यतां तावत् पार्लिमेन्टनामकसभाव्यवस्थापनमुखेन, तत्तद्देशेषु चादरमात्रैकवेतनानां दण्डनायकानां ( आनररीम्याजिस्ट्रेट ) इति पदवीसमलंकृतानां प्रतिष्ठापनेन, उत्तमसाहसकार्यविवेचनादिषु प्राणदण्डादिषु च तत्तद्देशनिवासिनां महाप्रतिष्ठितानामतिलौकिकप्रतिभाशालिनां असेसर् इति पदभूषितानां द्वित्रपुरुषाणां प्राड्विवाककृतनिर्णयपरिशोधनाय वरणेन चैकमत्यसिद्धान्तमनुतिष्ठन्ती सम्राट् "असंतुष्टा द्विजा नष्टाः संतुष्टाः पार्थिवास्तथेति श्लोकार्थमनुसरन्ती क्रमेणोत्तरोत्तरं स्वाधिकारं विस्तारयन्ती च भारतश्वेतद्वीपादिविविधद्वीपोपद्वीपराजराजेश्वरीपदमलंकुर्वन्ती विराजते । परस्परवैमत्येनैव च सुन्दोपसुन्दौ समूलनाशं नष्टौ । तेनैव च भारतीयाष्टादशाक्षौहिणीसेनासमेतनिखिलवीरनाशपुरःसरं पृथ्वी पञ्चवीरावशेषिता बभूव । अन्योन्यसाहाय्यवैधुर्येणैव चास्मिन् भारतवर्षे क्रमशो ऽपचयं गच्छन्त्यः शिल्पसङ्गीतचिकित्साविद्याः संप्रति लुप्तप्रचारा विनष्टकल्पा एवाभूवन् । वैमत्यकारणानि च धर्मो धनं धरा महत्वाकाङ्क्षा चेति चत्वारि । तत्र द्वितीयादिषु त्रिषु परकीयत्वाभावसहितमेव स्वकीयत्वं सर्वोऽपि जनो वाञ्छति । आद्ये पुनरेतद्विपरीतं सर्वो लोको ऽहमिवापरे ऽपि तस्मिन् स्वीयत्वाभिमानं धारयेयुरिति सततमभिकाङ्क्षति । यद्यपि नीतिकुशला धनधराविवादपरिहारे बद्धादराः पूर्वकालिकराजेष्वपि बहवो ऽभूवन्निति श्रूयते तथापि न ते सांप्रतिकसम्राडिव परध-

मोऽविरोधिन आसन्नपि तु परधर्मोन्मूलनपुरःसरं स्वस्वधर्मव्यवस्थापका बभूवुरिति तत्र तत्रेतिहासादिषु बहुत्र वर्णितम् । श्री १०८मन्महाराज्ञ्याम-स्यां राज्यधुरं वहन्त्यां तु पूर्वकालिकाः शिल्पादिविलोपिन इव न सांप्रतिका विद्वांसोऽन्योन्यसाहाय्यं विद्विषन्ति, प्रत्युत लुप्तप्रचारपुस्तकमुद्रणादिभिर्नवीनयन्त्रनिर्माणप्रकारप्रदर्शनादिभिर्विद्याशिल्पादिप्रचारमुपबृंहयन्त आङ्गलपण्डिताः परस्परसाहाय्यं कुर्वन्तोऽधिकसाहाय्यकारितया च स्वस्मिन्नधिकं महत्त्वं बुद्ध्यमाना ऐकमत्यसिद्धान्तमेवानुतिष्ठन्ति । तथैव भारतवर्षीयानस्मानपि सम्राडनुशासनमहिमैव तात्त्विके महत्त्वाकाङ्क्षाफले परस्परसाहाय्यपूर्णोत्साहशालिनः करिष्यतीति सुदृढमाशासे । धनधरापहारकृतवैमत्यतमोन्मूलनसमर्था दण्डनीतितरणिर्जागर्त्त्येवेति तेनाप्यैकमत्यमेव क्रमेणात्रापि भारते वर्षे बाढं संभावयामि । धर्मविषये यद्यप्यस्ति तत्तन्मनुजात्मसु स्वस्वधर्मप्रविचारयिषा तथापि "श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था इति मान्यनिबन्धृवचनमादृत्य अस्मत्पूर्वजान् अपेत्याहमस्मि बुद्धिमत्तरः सारासारविवेचनक्षमतर इत्यभिमानं परप्रतारणधियं च परित्यज्य यदि वयं परधर्मानविद्विष्यैव स्वस्वकुलोचितान् धर्मान् निखिलधर्ममूलभूतान् शमदमदयासत्यादिशीलपदाभिधेयान् धर्मांश्चानुतिष्ठन्तः परान् प्रत्यपि "श्रेयान्स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितादित्येव निर्मत्सरा भूत्वोपदिशेम तर्हि मन्ये, निःसंदेहं भारतीयजनस्य सर्वथैकमत्यं संपादितं भविष्यतीत्यलं सुधियामग्रे वाचां विस्तरेण ॥

सर्वेष्वस्मासु युवपण्डितेषु महोपकारप्रावण्येन परमवात्सल्येनास्माकं मुहुरभ्यर्थनेन चैतत्संस्कृतसमाजाध्यक्षपदं स्वीकुर्वन्तो गुरुवराः श्रीदेवालशास्त्रिण एतल्लेखगतं न्यूनातिरिक्तभावं परिहरिष्यन्तीति स्वाशासे ॥

अभ्यर्थये च परेशमेतत्संस्कृतसमाजसभ्यान् चिरमुत्साहशालिनः कुर्यादिति ॥ शम् ३

दुण्ढिराजशास्त्री ॥

॥ श्रीः ॥

विश्वेश्वरेण क्षितिगोलपृष्ठे ऽखिलस्थलानां खलु मध्यदेशे ।
देशो ऽङ्गलाख्यो विनिवेशितो ऽस्तीत्येतद्धरागोलविदां प्रसिद्धम् ॥ १ ॥
मध्यःप्रदेशो ऽस्ति यतः प्रधानं सर्वत्र तस्मात् तदधीश्वरी स्यात् ।
सम्राट् परे माण्डलिकाश्च सर्वे भूपा इतीष्टं परमेश्वरस्य ॥ २ ॥
एवं समस्तावनिमण्डलस्याधीश्वर्यपि प्रेमभरेण साद्य ।
निजेच्छया भारतवर्षराजराजेश्वरीत्थं पदमारुरोह ॥ ३ ॥
ततो वयं भारतवर्षनिष्ठाः समग्रभूमण्डललोकमुख्याः ।
जाताः स्म इत्थं सुविचिन्त्य कुर्मो विश्वेश्वरस्योत्तमधन्यवादम् ॥ ४ ॥
सहात्मजा भारतवर्षराजराजेश्वरी जीवतु सा चिराय ।
नीत्या सदा रक्षतु नश्च बापूदेवस्त्विती्शं भृशमर्थये ऽहम् ॥ ५ ॥

पण्डित बापूदेवशास्त्री ।

२ २ २ १ १ २
स्वस्तिश्री सम्पूर्णा  १०  १२
२ २ २ २ २ २

१ २ १ २ १ १ २ १ २ १
तत्वाङ्कैर्व्यञ्जनैश्च मात्राभिः ॥  १४  १८
२ २ २ २ १ २ १ २ २ २

१ १ १ १ १ १ १ १ १ १
हरिवसुभूरविशशिभि-  १०  १२
१ १ १ १ २ १ १ १ १ २

१ १ १ १ १ १ १ १ २ १
स्सेवितचरणा जयत्याऽऽर्या ॥ १ ॥  ११  १५
२ १ १ १ १ २ १ २ २ २

त्र्यऽर्थः श्लोकः  ४५  ५७

तत्राद्यः। आर्या ईश्वरी जयति स्वस्ति च श्रीश्च ताभ्यां सम्पूर्णा तत्वानि च २५ अङ्काश्च ९ तावद्भिः व्यञ्जनैः हल्वर्णैः मात्राभिः १६

स्वरैश्च सम्पूर्णेत्यन्वयः हरिप्रभृतिभिर्देवैस्सेवितचरणा इति । एतेन आदिक्षान्ताऽक्षरमयी हरिहरविरिञ्च्यादिभिराराध्या श्रीशारदामूर्त्तिः प्रतिपाद्यते ॥ १ ॥

अथवा आर्याछन्दः स्वस्तिरूपिण्या श्रिया सम्पूर्णा तत्त्वप्रमितैरङ्कैः पञ्चगुणैर्नवभिः पञ्चचत्वारिंशत्सङ्ख्यैरिति यावत्, व्यञ्जनैर्हल्वर्णैः सम्पूर्णा च पुनः हरि १२ वसुभू १८ रवि १२ शशि १५ भिर्मात्राभिस्सेवितचरणा एतेनाद्यपादे द्वादश द्वितीये ऽष्टादश तृतीये द्वादश चतुर्थे पञ्चदश मात्राः पञ्चचत्वारिंशद्धलश्चास्यामार्यायां सन्तीति सूचितम् ॥ २ ॥

अथवा आर्या विजयिनी साम्राज्यपदारूढा देवी महाराज्ञी स्वस्तिश्रीपूर्वपदा तत्त्वानि पृथिव्यादीन्येवांशानि येषां तथाभूतैर्व्यञ्जनैरग्नियानादिभिः मात्राभिस्तारायन्त्रादिकलाभिश्च सम्पूर्णा हरिः सिंहः तेन सिंहासनम् वसु धनम् तेन निधयः भूः सागरान्ता मेदिनी रविः रविवंश्या राजानः शशी चन्द्रवंश्याराजानश्च तैस्सेवितचरणा । एतेन स्वस्तिश्रीविजयिनी साम्राज्यपदारूढा देवी सागरान्तमेदिन्यनुशासिनी महाराज्ञी सर्वोत्कर्षेण वर्त्तत इति मन्मानसोल्लासस्सर्वानुल्लासयतु ॥ ३ ॥

गुरूणाम्पादपद्मेषु प्रभूणां हृदयाम्बुजे ॥ कवीनाङ्करपद्मेषु विदुषां वदनाम्बुजे ॥ २ ॥ खलवारणकुम्भेषु मित्राणाचयनाम्बुजे ॥
नारायणमनोभृङ्गझङ्कारः प्रविराजताम् ॥ ३ ॥

श्रीमत्पङ्कजपुञ्जसौरभभरभ्राम्यन्मिलिन्दावली-
सौन्दर्याश्रितगर्वहारिगलरुक्कर्पूरपूराकृतिः ।
विश्वेशः करुणारसैकवरुणागारः शिवं सर्वदा
दद्यात्सेवकमण्डलाय मुदितो भक्त्याऽनुरक्त्याऽपि च ॥ १ ॥
सोऽयं सम्प्रति सर्वलोककुशलाकाङ्क्षाऽवतीर्णो ऽवनौ
नानाभूपतिमानितां विजयिनीत्याख्यां बिभर्त्त्यात्मना ।

आर्यावर्तजनान् स्वकीयतरतां संप्रापयन्नश्नुते
श्रीमद्भारतराजराजपदवीमित्यद्य मोदामहे ॥ २ ॥
नैतादृक् सकलेन्द्रियाणि मदयन् जातः कदाप्युत्सवो
नो वा क्वापि जनिष्यते दृढमिति स्वान्ते विनिश्चिन्वतः ।
जीयादाप्रलयं यशःशशिकरैरेषा जनाह्लादिनी-
त्याशंसा सफलास्तु शंभुकृपया श्रीरामकृष्णस्य सा ॥ ३ ॥

संस्कृतसमाजसभायाः प्रधानसंपादको रामकृष्णशास्त्री

श्रीमद्राजसमाजपूजितपदा श्रीराजराजेश्वरी-
त्याख्यां प्राप्तवती सदा विजयतामानन्दयित्री भृशम् ।
दीनानां परिपालने दृढमतिः कारुण्यवारांनिधिः
स्वीयैः सद्गुणमौक्तिकैः सुरचितां कीर्तिस्रजं बिभ्रती ॥ १ ॥
आसादयति यद्रूपं हरेर्गुहरणैर्विना ।
चिरपूर्वं हि ते भूयादिति याचे सदाशिवम् ॥ २ ॥
काशीस्थसंस्कृतसमाजसभास्थितेन
श्रीरामचन्द्रविदुषा किल देव ईशः ।
अभ्यर्थ्यते प्रतिदिनं खलु सार्वभौमी
जीव्यादियं शतसमाः स्वसुतैः समेता ॥ ३ ॥

पौराणिकोपाह्वरामचन्द्रशास्त्री

नमस्तस्यै यथाभक्तिभक्ताभीष्टविधायिने ।
धारिणे सर्वभद्राणां नाशिने सज्जनापदाम् ॥ १ ॥
सृष्ट्वा त्रैलोक्यमग्रे तदवनकुशलानिन्द्रचन्द्रादिदेवान्
दिग्राज्येषु न्ययुङ्क्त प्रबलतनुभृतो नागलोकाधिकारे ।
शेषादींश्चोरगेन्द्रांस्तदनु पुरुदयो भूजनान् यो जुगुप्सुः
प्रादुश्चक्रे जयश्रीललितविजयिनो नामराज्ञी नृलोके ॥ २ ॥

याऽऽदौ यस्य प्रसादादतुलगुणगणैर्भूषिता राज्यलक्ष्मीं
गौरद्वीपस्यधाम्नो विनयधनकलाशास्त्रजातस्य लेभे ।
वर्द्धस्याऽस्यापि पश्चात्प्रचुरबुधवरैर्मण्डितस्यापि राज्यं
प्राज्यं यत्नैरनेकैः सकलभुवनभृत्प्रेरितैर्भारतस्य ॥ ३ ॥

सेयं पुत्रैः प्रपौत्रैर्बहुलबलयशोराशिभीराजमाना
संपूर्णाभिः पराभिः प्रकृतिविततिभिः सेविता राजवयः ।
सम्राज्ञी भारतस्येत्यखिलजनमनःप्रेयसीं ख्यातिमद्य
स्वीकुर्वाणा सदा स्तात्सकलविजयिनी वर्षलक्षाणि लोके ॥ ४ ॥

इत्थं प्रशस्ताः समुदाशिषः स्युः सत्यीकृताः श्रीजगदीश्वरेण ।
संप्रार्थिताः केशवशास्त्रिणा या विद्वत्समाजे परमादरेण ॥ ५ ॥

केशवशास्त्री ।

आनमन्नृपसहस्रविस्फुरन्मौलिरत्नलसदङ्घ्रिपङ्कजा ।
अप्रमेयकरुणातरङ्गिणी श्रीमती विजयिनी विराजते ॥ १ ॥

या प्रभावविजितान् जनेश्वरी भारतप्रभृतिभूरिनीवृतः ।
पाति दूरपगतापि मातृवद्राजनीतिमनुसृत्यसर्वदा ॥ २ ॥

यस्याः शरच्चन्द्रकराभिरामां कीर्तिं पवित्रां जगतीतले ऽस्मिन् ।
गायन्ति सर्वे युववृद्धबालाः प्रमोदबाष्पाकुलनेत्रमालाः ॥ ३ ॥

यस्याः प्रतापज्वलनं प्रदीप्तं प्रतीपपृथ्वीपतयो ऽभिमानात् ।
उल्लङ्घयन्तः सहसा व्रजन्ति भङ्गं पतङ्गाइव दग्धपत्राः ॥ ४ ॥

सा विधाय करुणामधीश्वरी भूतये भरतवर्षवासिनाम् ।
स्वीचकार किल भारतावनेः सार्वभौमपदवीं समुन्नताम् ॥ ५ ॥

तदुत्सवे संमिलिता इदानीं श्रीविश्वनाथं वयमर्थयामः ।
यावन्मही तिष्ठति पातु तावदार्य्येश्वरी भारतवर्षमेतत् ॥ ६ ॥

पण्डितशीतलाप्रसादत्रिपाठिनः ।

य: स्वेच्छैकसहाय एतदखिलं चित्रं जगन्निर्ममे
धीरैर्यन्मनसा ऽपि नापि रचनाचातुर्यचिन्ताचरै: ।
दीनानान्तरतापतापिततनून्मीनानिवाम्भोधर:
स्वीयान् वत्सलताम्बुधि: स्वकरुणाऽऽसारैर्मुहु: सिञ्चति ॥ १

संप्राप्ता जनताऽतिपातिचरिता सर्वंसहामण्डले
कीर्त्तिक्रान्तदिगन्तरा ऽतुलदयादाक्षिण्यवारांनिधि: ।
शक्तिस्तस्य विभो: समुद्रवसनासाम्राज्यलक्ष्म्यास्पदं
सौभाग्यं विजयश्रियो विजयिनी देवी वरीवर्त्त्यसौ ॥ २ ॥

नानादेशवसुन्धराऽधिपतिरप्यार्यै ऽनुकम्पाभरात्
या स्वीकर्तुमियेष सम्प्रति मनस्यार्यैश्वरीति प्रथाम् ।
युक्तं तत्प्रतिभात्यशेषजगतां संपालकेनाप्यहो
यत्पूर्वं विभुना दयाबहुतया गोपालतैवाश्रिता ॥ ३ ॥

इयं विदधती भुवं चिरतरं सनाथामिमाम्
प्रजासु दयया ऽभिधामपि यथार्थयन्ती निजाम् ॥
जयत्वविरतं रिपून् परिभवं नयन्ती मुदा
जगत्प्रभुमिदं मुहुर्मुहुरिहा ऽर्थये ऽहं सदा ॥ ४ ॥

गन्धवट्युपाभिधो बापूशर्मा

विजयते जगदीशकृपानिधिर्विजयिनी सुतवत्परिपालिनी ।
भरतवर्षजनान्विनतान्सदा निजबलेन जितारिसमूहिनी ॥ १ ॥

नीत्या शुक्रति बुद्धिवैभवबलाऽजीवत्यसौ शान्तितो
वैकुण्ठत्यरिसङ्घकक्षदहनात्पार्थत्यतिप्रीणनात् ।
जम्बूद्वीपनिवासिलोकमनसां रामत्यहो दातृता-
शालित्वेन च कर्णति प्रतनुतश्चार्यैश्वरी चन्द्रति ॥ २ ॥

यत्कीर्त्तिः शिशिरांशुकान्तिनिचयः सन्तर्क्यते पण्डितैः
स्वर्गङ्गामवगाहते सितरुचिर्हंसीव लोकोत्तरा ।
इन्द्रेण प्रतिमार्ग्यते त्रिभुवने श्वेताश्व उच्चैःश्रवा
यत्कीर्त्या धवलीकृते त्रिनयनःस्वीयं वृषं मार्गते ॥ ३ ॥

दयानिधिः पण्डितमानतत्परा विद्यासमुद्रस्य च पूर्णचन्द्रः ।
जीयाच्छतायुर्मुदिता सपुत्रा स्वामात्ययुक्ता ससुहृद्गुणाढ्या ॥ ४ ॥

सुरेशवन्द्याङ्घ्रियुगं सुधांशुचूडामणिं लोकगुरुं शिवेशम् ।
श्रीदण्डिभट्टाख्ययुतस्त्रिनेत्रं नाथत्ययज्ञाग्र्यजविश्वनाथः ॥ ५ ॥

श्रीशम्भोः सकला कला विजयिनीवेषेण भूमण्डलं
कीर्त्या मण्डयितुं च खण्डयितुमप्यास्ते द्विषन्मण्डलं ।
संप्रत्यार्यजनानुरागमुदिता सा भारताधीश्वरी-
त्यर्थाख्यां समलंकरोत्ययमतो लोकः सनाथीकृतः ॥ ६ ॥

एतादृक्प्रमदाग्निजातपुलको दामोदरः शंकरं
शश्वत्संप्रणिपत्य भक्त्यतिशयात्संयाचते सर्वदा ।
जीव्याद्वर्षशतं सुतैर्विजयिनी स्वस्यानुरूपैर्वृता
यन्नीतिव्रततिश्रिता जनखगाः प्राप्तप्रमोदा इति ।
विजित्य वलयं भुवो मलयचन्दनाच्छं यशो
निचित्य महिमण्डलाखिलनृपालमालार्चिता ।
प्रताएतपनं रिपूत्करतमांसि लोप्तुं सदा
प्रकाश्य भुवि जाग्रती जयतु राजराजेश्वरी ॥ ७ ॥

सुतैरतुलविक्रमैरमितसद्गुणालङ्कृते-
श्चतुर्भिरिव दिग्गजैश्चतसृणां दिशां जित्वरैः ।

सहेयमवनीमिमामवति भारतीं भारती
यथार्चितपदा तथा जयतु राजराजेश्वरी ॥ २ ॥
शत्रुर्नीर्चति मित्रमुच्चति महीपालावली प्रह्वति
प्राज्ञः प्राज्ञ्यति तेजसां ततिरपि प्रोद्दण्डमार्तण्डति ।
कीर्तिः पूर्णशशाङ्कति प्रतिदिनं राजानति स्वप्रजा
यस्याः सा जयताच्चिरं विजयिनी श्रीराजराजेश्वरी ॥ १ ॥
एतां भारतभूमिमुग्रयवनैर्दुष्टैर्जितामन्वहं
शोचन्तीं निजदुर्दशां हृतपतिं नैतान् भजन्तीं मुदा ।
पश्यन्ती सकलान् विजित्य कृपया या पाति हृष्टामिमां
लोकातीतपराक्रमा जयतु सा श्रीराजराजेश्वरी ॥ २ ॥

बेचनरामपण्डितस्य

अथ पौषकृष्णप्रतिपदि संस्कृतसमाजनाम्नो सभोपस्तीर्णा तस्यां गङ्गाधरशास्त्री स्वलिखितं संदर्भमवाचयत् । तद्यथा । नैयायिकमते हि चत्वारि प्रमाणानि । तथा च सूत्रम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति । वैशेषिकास्तु द्वे पूर्वोक्ते एव प्रमाणे अनन्तरयोस्त्वनुमानान्तर्गतत्वेनैव प्रामाण्यमभ्युपगच्छन्ति । अत एवोक्तम् "शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते । अनुमानगतार्थत्वादिति वैशेषिकं मत"मिति । युक्तं चैतत् । उपमानस्येतरप्रमाणान्तर्गतत्वं सांख्यादीनामभिमतं तैरेव निरूपितमिति न प्रकृते तत्र महान् प्रयासः सफलः । शब्दस्यानुमानादनतिरिक्तत्वं तु विस्पष्टतरम् । तथाहि । यो ऽयं घटमानयेत्यादिवाक्याद्घटकर्मकानयनादेः प्रत्ययस्तस्यानुमितित्वमेव । अन्यथा करादेर्यं कं चिदभिमुखीकृत्य स्वाभिमुखमाकृष्टादभिमुखीकृतस्वसमीपागमनेच्छाप्रत्ययस्यापि प्रमित्यन्तरतायां दुर्वारतया तादृशकरचेष्टादेरपि पृथक् प्रामाण्यापत्तेः सुस्पष्टत्वात् । अतश्च यथा तादृशकरादिचेष्टावन्तं पक्षीकृत्य तत्कराभिमुखपुरुषादिकर्तृकस्वसमीपदेशप्राप्तीच्छा तथाविधक-

रचेष्टया ऽनुमातुं सुशका तथैव प्रकृते ऽपि शब्दोच्चारयिता पुरुषो मत्कर्तृकघटकर्मकस्वसंनिकृष्टदेशसंयोगेच्छावान् तथाविधशब्दोच्चारणादिति स्पष्ट एव परामर्शादिकः प्रत्ययः । अभिप्रायस्यानुमानादेव च न विषयस्य तथाविधस्यासत्त्वे ऽपि दोषः । उच्चारयित्रिच्छायामविद्यमानस्यापि घटादेः प्रकारतायाः संभवेन तत्र तत्प्रकारकत्वादेरेवानुमानात् । एवमेव किल स्वामिनो दानेच्छाभावे दानाभावे च याचतिघटितवाक्याच्छाब्दबोधो नैयायिकैरपि निर्वहणीयः । यत्तूच्यतेऽभिनवकविरचितश्लोकादपि बोधोदयात्तत्र व्याप्तिग्रहस्याभावेन गत्यन्तरविरहाच्छब्दस्य प्रामाण्यमवश्यकमिति, तन्न विचारसुन्दरम् । भवन्मते ऽपि तादृशश्लोकवृत्त्याकाङ्क्षाज्ञानासंभवेन शाब्दस्याप्यनुत्पत्त्यापत्तेः । वस्तुत आकाङ्क्षाया अकारणत्वात् । तस्मात्तत्र भवताप्यवान्तरपदयोराकाङ्क्षाया अन्यत्र सत्या ज्ञानात्सामान्यतो नामोत्तरषष्ठ्युत्तरनामादेः षष्ठीप्रत्यये स्वस्वामिभावादिसंबन्धेन तत्प्रकृत्यर्थस्य तदुत्तरनामार्थादावन्वयक्रमेण विशिष्टबोधाङ्गीकारवन्मयापि तत्रावान्तरपदरूपसंकेतज्ञानादवान्तराभिप्रायावगतिक्रमेण विशिष्टाभिप्रायो ज्ञातुं शक्यइति सममेव, अत एव कम्बलादिपदशक्त्यग्रहदशायामिव भवन्मते मन्मते तत्संकेताग्रहदशायामपि योग्यसंबन्धेन ब्राह्मणादिप्रकारको वस्तुत्वादिरूपेण विशेष्यतामवलम्बमानो बोधो ब्राह्मणस्य कम्बल इत्यादिवाक्यादानुभविको भवन्मते ऽप्युपपादनीयो मन्मतेपि । किं च भवन्मतेऽनेकत्र मुखं चन्द्रइत्यादौ शाब्दबोधस्य योग्यताज्ञानविरहादसंभवेन तत्र मानसो बोध इत्युच्यते । तच्च शपथैकसंवेद्यमेव स्वकल्पितकार्यकारणभावस्याभावेनाभ्युपगन्तव्यमिति बद्धमुष्टिवानरन्यायायितमेव । अभिप्रायमनुमिन्वतां समञ्जसमेव सर्वमुपपद्यतइति प्रागेवावोचाम । न च स्पष्टमुपलभ्यते शब्दस्यापि चेष्टाविशेषान्तर्गतत्वे दृढं प्रमाणम् । शाब्दयामीत्यनुव्यवसायस्तु न प्रत्ययान्तरत्वसाधको विप्रतिपत्तेरिति विशदमेव । तस्मात्करादिसंकेतवच्छब्दोप्यनुमापक एवाभिप्रायस्येति सिद्ध्यतीति । ततो रामकृष्णशास्त्री । नोपमानं तावत्प्रमाणान्तरेष्वन्तर्भवितुमर्हति । गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थज्ञानवतः पुंसः कदा-

चिद्गवयदर्शनं ततोतिदेशवाक्यार्थस्मरणमनन्तरं च गवयो गवयपदवाच्य इति गवयपदशक्तिग्रहात्मिका प्रमैवोपमितिरिति व्यवह्रियते, सा च नानुमितिरूपा संभवति । तस्या व्याप्तिग्रहपूर्वकत्वासंभवात् । नापि शब्दरूपा, तस्याः परैरनभ्युपगमात् । अभ्युपगमेपि वा प्रकृतप्रमायाः शब्दजन्यत्वासंभवेन तदसंभवाच्च । एवं शाब्दस्यापि नानुमितावन्तर्भावो दृष्टान्तबलेन सूपपादः, दृष्टान्ते च तादृशचेष्टाया एकार्थप्रत्यायकत्वेन व्याप्तिग्रहस्य सुघटतया अनुमानसंभवेपि शाब्दस्थले नानार्थप्रत्यायकत्वेन शब्दानां तदसंभवात् । व्याप्तिज्ञानविरहवतः पुंसो बोधानापत्तेश्च । किं च भूतलं घटवन्नवेति संदिहानस्य पुंसो घटवद्भूतलमित्याप्तवाक्यात्तादृशाप्तेच्छाज्ञानेपि संदेहानिवृत्तिरेव स्याद्, इच्छाज्ञानसंदेहयोरविरोधादिति । ततो राममिश्रशास्त्री अमुमेवार्थमनुमोद्योपमितेः पृथक् प्रमितितां गोसदृशो गवयपदवाच्य इति वाक्यस्याप्तोक्तस्य गोसदृशप्रत्यक्षकाले स्मरणेन गोसदृशे गवयपदवाच्यत्वज्ञानमनुमितिरेवेति स्फुटमुपपाद्य शाब्दस्य तु पृथक् प्रमितित्वमावश्यकमन्यथा वेदप्रामाण्यस्य दुर्निरूपत्वात्, नहि तत्र कश्चन पुरुषः प्रत्यक्षोस्ति यदभिप्रायं वेदस्थशब्दैरनुमिमीमहीत्यवोचत् । ततो गङ्गाधरशास्त्री । भो वेदस्थशब्दैरपीश्वरोनुमातुं शक्य एव । तादृशशब्दानां तथाविधाभिप्रायानुमापकत्वपूर्वकमभिप्रायस्य स्वसमवाय्यनुमापकत्वात् । किं च व्याप्तिमगृह्णतोपि पुरुषस्य शाब्दोत्पत्तिरुच्यते सा नोचिता पदजन्यपदार्थोपस्थित्युत्तरमेव शाब्दस्य भवन्मतेऽपीष्टत्वेनोपस्थितौ पदजन्यत्वाय तदर्थविषयकबोधस्य तत्पदाव्यवहितोत्तरत्वव्याप्यतया मन्मतेपि तथाविधाभिप्राये तादृशशब्दाव्यवहितोत्तरत्वव्याप्तेः सुलभत्वात् । चेष्टैकमेवार्थं बोधयतीति तु न युक्तमङ्गुलिद्वयस्य स्वसमीपदेशप्रापणेन व्यक्तिद्वयकर्मकस्वसमीपदेशप्रापणस्यापि बोधात् । शाब्दसामग्र्याः प्रत्यक्षं प्रति प्रतिबन्धकत्वं न स्यादिति तु न । इच्छानां सर्वत्रोत्तेजकत्वेनेच्छाभावविशिष्टसामग्रीत्वेन प्रतिबन्धकतयेच्छानामनुगमासंभवेन तेनतेनैव रूपेण प्रतिबन्धकताया वाच्यतया शब्दजन्यानुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वास्वीकारात् ।

ततो रामकृष्णशास्त्री न ममायमाशयो यच्चेष्टैकमेवार्थं बोधयतीति परमेकं यथार्थमेव बोधयतीत्येव, नह्यङ्गुलीनां स्वसमीपदेशप्रापणं स्वसन्निकृष्टदेशप्रापणादन्यमर्थं बोधयति शब्दस्तु तात्पर्यवशेनैक एव घटपटादीन्नानाविधानर्थान्बोधयति । तदनु प्रमदादासमित्रमहाशयः । नहि शब्दोपि युगपन्नानाविधानर्थान्बोधयति । प्रकरणादिसहकृतस्तु तत्तत्प्रकारेण भिन्नानिति चेच्चेष्टाप्येवमेव क्व चित्तात्पर्यग्राहकान्तरसत्त्वे तत्तत्प्रकारेण भिन्नार्थग्राहिका भवत्येव तात्पर्यग्राहकान्तरसत्त्वे चेष्टाया नैरर्थक्यमिति चेद्भवन्मतेऽपि तात्पर्यग्रहमन्तरा शाब्दबोधानुत्पत्तेस्तात्पर्यग्राहकान्तरस्यापेक्षिततया शब्दस्य वैयर्थ्यमिति तुल्यमेव । तस्माद्भोजनकालिकत्वविशिष्टसैन्धवशब्दो लवणतात्पर्यविषयस्सन्नेव पदार्थान्तरान्वयप्रयोजकोभ्युपेयस्तथैव मन्मतेपि चेष्टाया अप्येवमेव प्रकरणसहकृतायाः स्वार्थबोधपूर्वकविशिष्टार्थबोधकत्वमिति युक्तमित्यवोचत् । ततो रामकृष्णशास्त्री तदुक्तमभ्युपगच्छन्ननुमितिसामग्र्यां शाब्दसामग्र्यां च युगपद्वर्तमानायां शाब्दसामग्र्याः प्रतिबन्धकत्वमनुमितिं प्रतीष्यते तच्च भवन्मते न स्यादुभयोरप्यनुमितितया समूहालम्बनात्मकानुमितेरेवापत्तेरित्यभ्यधात् । ततः सर्वे सभासदः संप्रति संध्यासमयो जातस्तद्दिनान्तरे एतस्य विचारो भविष्यतीति विचार्य सभां विससृजुरिति शम् ॥

अथ पौषशुक्लप्रतिपदि सभाप्रोत्साहकश्रीयुतप्रमदादासमित्रमहाशयानां गृहे संस्कृतसमाजनाम्नी सभोपस्तीर्णा । तस्यां च केशवशास्त्री सांख्यशास्त्रविषये कं चित्संदर्भलेखं निजनिर्मितं प्रथममवाचयत् । तद्यथा श्रीनित्यशुद्धबुद्धस्वरूपं जगदीश्वरं प्रणम्य तत्र भवतां सभाध्यक्षाणां सभासदां चानुमत्या सांख्यशास्त्रमधिकृत्य किंचिज्जिज्ञास्यते । तत्र खलु पुरुषः प्रकृतिर्महानहङ्कारः पञ्चतन्मात्राण्येकादशेन्द्रियाणि भूतपञ्चकमिति पञ्चविंशतिः पदार्थाः स्वीक्रियन्ते । तेषां पुरुषो नित्यशुद्धबुद्धस्वरूपः प्रकाशात्मा चेतनोऽपरिणामी, प्रकृतिस्तु तद्विरुद्धस्वभावा गुणमयी परिणामिन्यचेतनेत्युच्यते । जडाया अपि प्रकृतेरचेतनस्यापि वत्सविवृद्धिनिमित्तं प्रवृत्तस्य क्षीरस्येव पुरुषविमोक्षणार्थं प्रवृत्तिः प्रति-

पाद्यते। एवमबुद्धिपूर्वं प्रवृत्ताया अपि प्रकृतेः कार्याणां महदादीनां 'सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मादि'त्यादिना सकलविषयग्रहणक्षमत्वं बोध्यते। पुरुषस्य तु 'तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य, कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्चे'त्यादिना सत्यपि साक्षात्करणकर्तृत्वे दर्शनकर्तृत्वे चाकर्तृत्वं प्रदर्श्यते। तथा 'तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः। लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेने,त्यनेन तस्य जरामरणादिजन्यदुःखानुभवकर्तृत्वरूपबन्धं, प्रकृतेस्तादृशबन्धमोचकत्वं चाङ्गीकृत्य 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्, संसरति बध्यते मुच्यते च नानाश्रया प्रकृति'रित्यादिना पुरुषस्य नित्यमुक्तत्वं च निरूप्यते। तस्येदृशन्नित्यमुक्तप्रकाशात्मकस्यापि प्रतिशरीरं भेदश्च साध्यते॥ अत्रेदं वदामो यदिदं सर्वं परस्परविरुद्धं बाधितमिव भासते। कथं नामैकस्या एव प्रकृतेर्जडत्वं चेतनत्वं च संभवेत्। परस्परविरुद्धयोर्धर्मयोरेकाधिकरणेऽवस्थातुमशक्यत्वात्। किं चान्तःकरणात्मिकायाः प्रकृतेश्चेतनत्वात्सकलसुखदुःखादिविषयानुभवकर्तृत्वेन भोक्तृत्वे सिद्धे किमिति पुरुषाख्योऽपरो भोक्ता कल्प्यते। कथं च तस्य नित्यमुक्तशुद्धप्रकाशात्मनो भोक्तृत्वं शक्यते वक्तुम्। कथं पुनस्तस्य ज्ञानित्वेन चेतनत्वेन वा प्रकृतिसाधर्म्यात्ततो वैधर्म्यं। कथं वाऽस्य सुखदुःखादिभोक्तृत्वेऽप्यकर्तृत्वम्। अकर्तृत्वे च तस्याभिमानराहित्येन बन्धाभावात् कोऽसौ प्रकृतिप्रयासो यदात्मबन्धमोक्षणं नाम। यदि च सूर्याकाशादाविवालौकिकमारोपितमेव वा द्रष्टृत्वसाक्षित्वादिकमात्मन्युपेयते तर्ह्याकाशादिसदृशेन सर्वव्यापकैकात्मनैव निर्वाहे नानात्मकल्पनवैयर्थ्यं स्वसिद्धान्तभङ्गश्चेति। तदनु च राममिश्रशास्त्री। चेतनत्वं च यदि परिणामित्व ज्ञानाद्यन्यतमरूपं वा तदा तस्य बुद्धिमात्रवृत्तित्वेन जडत्वसामानाधिकरण्यस्य सुस्पष्टत्वया नात्रासंभवोद्भावनसंभवः। यदि चापरिणामित्वं चेतनत्वमभिप्रेयते तदा तु पुरुषमात्रवृत्तित्वेनैव तस्य सांख्यशास्त्रे प्रसिद्धत्वेन शङ्काया एव नावसरः। तथा चान्तःकरणात्मिकायाः प्रकृतेश्चेतनत्वस्य दुरुपपादत्वेन ततः परो भोक्ताऽसंहतश्चेतनत्वादिधर्म

वान् "संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्चे"त्यादि विविधहेतुभिः स्पष्ट एव सिध्यति । न च शयनासनादिदृष्टान्तस्य संहतशरीराद्युपकारकत्वदर्शनेन तदनुरोधात् चेतनोऽपि संहत एव सिध्येत् । तेन संहतस्य सिद्धौ हि तस्यापि संघातरूपत्वेन तेनापि पुनः संहतस्यैव सिद्ध्यापत्त्या तेनतेनेत्यनवस्थाप्रसङ्गात् । दृष्टान्तदृष्टसर्वधर्मानुरोधेनत्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्गात् । ततः सभाप्रोत्साहकमहाशयेन चेतनत्वं किमात्मकं तर्ह्यभिमतं सांख्यानामिति पृष्टे राममिश्रशास्त्री पुनराह । चेतनत्वमपरिणामित्वं प्रतिबिम्बसंबन्धेन सुखादिवृत्तिमत्त्वं वा, न ज्ञानाद्यन्यतमरूपं ज्ञानेच्छादेर्बुद्धिधर्मत्वेन चैतन्यस्यात्मधर्मत्वेन च तैः स्वीकारात् । ततो ऽध्यक्षवराः श्रीबालशास्त्रिणः । "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः" इत्यनेन पुरुषसांनिध्यात्तद्गताश्चेतनत्वादयो धर्मा बुद्धौ, बुद्धिधर्माश्च कर्तृत्वादय आत्मनि प्रतिबिम्बन्तीति प्रतिपादनेन चैतन्यस्य अपरिणामात्मकत्वे प्रतिबिम्बसंबन्धेन सुखादिवृत्तिरूपत्वे वा तादृशचैतन्यारोपस्य बुद्धौ निष्फलत्वमेवापतेदिति तत्स्वरूपं सम्यङ्निरूप्यतामित्येनमेवार्थं प्रौढतरवाग्विस्तरैः स्फुटमुपपादयन् । तदनु च राममिश्रशास्त्री, सत्यमेतत् । न चेतनत्वं प्रतिबिम्बसंबन्धेन सुखादिवृत्तिरूपमित्यादि युक्तं, किं तु कार्यमात्रस्यासमवायिकारणपूर्वकत्वनैयत्येन सुखाद्यसमवायिकारणचेतनसंयोगाश्रयतयैव पुरुषः सिध्यतीति बुद्धौ चेतनसंयोगस्यावश्यकत्वेन सफल एव तदारोप इति । तदनु बालशास्त्रिणः । तन्त्रान्तरीयसामग्रीसमवधानेनैव तदुत्पत्तिसिद्धेर्निराबाधतया ऽपूर्वतत्कार्यकारणभावकल्पनायां प्रमाणाभावः । अन्यथा तद्विरुद्धस्यैव कस्य चित्सिद्ध्यापत्तेः । संघातपरार्थत्वादित्यादिहेतुभिः स्फुटमेव तत्सिद्ध्या तत्साधने सिद्धसाधनप्रसङ्गात् बुद्धिगतचैतन्याभिमानप्रश्ने पुरुषसिद्धेः सांप्रतमनुपयोगाच्चेति तदेव स्पष्टमुपपाद्यतामिति । राममिश्रशास्त्री चेतनत्वं प्रकाशात्मकत्वं, तस्य बुद्धावारोपादेव चेतनोऽहं करोमीत्यादिव्यवहारोपपत्तिरन्यथा बुद्धिगतकर्तृत्वादेरात्मगतचैतन्यस्य च सामा-

नाधिकरण्यविरहेण तदनुपपत्तेरिति । ततः सभाप्रोत्साहकमहाशयेन वेदान्तिमतसमानैवात्मसिद्धिरेतन्मतेपि संजातेति प्रतिपादिते, राममिश्रशास्त्री सत्यमेतत् परं का नो हानिरांशिकतन्मतसाम्ये, एवं तु नित्यविभुत्वादिरूपैर्नैयायिकैनाप्यस्ति साम्यमिति । तदनु बालशास्त्रिणः । सम्यगेतन्निरूपितं परं आत्मनि कर्तृत्वाभिमानेनैव तादृशव्यवहारोपपत्तेर्बुद्धौ चैतन्याभिमानस्य किं प्रयोजनमित्येतदवशिष्यते तन्निरूप्यतामिति । ततो राममिश्रशास्त्रिणा गहनोयं विषयः सभान्तरे एतस्य विचारो भवेदित्यभिहिते संध्यासमयं दृष्ट्वा सभाध्यक्षानुमत्या सर्वे सभासदः सभां विसस्रुरिति शम् ॥

अथ माघकृष्णप्रतिपदि प्रमदादासमित्रमहाशयानां गृहे संस्कृतसमाजनाम्नी सभोपस्तीर्णा । तस्यां प्रथमं रामकृष्णशास्त्री पूर्वसभावृत्तान्तं संवाच्य सभ्यानश्रावयत् । तदनु राममिश्रशास्त्री । अहं किल गतपक्षे ज्वरेण पीडितो नापारयं भाष्यपञ्चकविषये प्रतिश्रुतं संदर्भं लेखितुम् । तत् सभ्यैः सभाध्यक्षैश्च क्षम्यमाणमभ्यर्थये । आगामिप्रतिपदि च स्वस्थः स्यां चेदवश्यमेव तद्विलिख्य वाचयिष्यामीत्यभ्यधात् । ततः केशवशास्त्री पूर्वप्रक्रान्तकथाविषयएव प्रकृतेः सर्ववस्तुविषयकवृत्तिवैशिष्ट्येन तस्या एव प्रकाशरूपतायाः अनुभूयमानतया कथं जडत्वं कथं वा तद्विलक्षणः पुरुषश्चैतन्याश्रयः सिध्येदिति संदेहमुदघाटयत्। ततो राममिश्रशास्त्री संघातपरार्थत्वादिना परस्य सिद्धौ परश्चेतन एव सिध्यति संहतत्वेनैव च तस्या जाड्यमपि सिद्धश्च चैतन्यवानेवेति तेनाहितचैतन्या वस्तुजातं गृह्णाति । संहतं तु नानुमापयत्यनवस्थापातादित्युक्तमेवेति । लोकेऽपि भोज्यभोजकाभ्यामवश्यं भूयतइति भोजकत्वाद् बुद्धेस्तया भोज्योऽपेक्ष्यते स एव च पुरुषः स च प्रकाशरूपतया प्रतिबिम्बमाश्रयन् सुखादिमानिव भवतीति । ततः केशवशास्त्री चैतन्यसंबन्धमन्तरा विषयग्रहणाभावेन परकीयं चेच्चैतन्यं तत्रारोप्यतामलमारोपेण वास्तविकमेव च तस्याश्चैतन्यमङ्गीकृत्य कार्यं निर्वाह्यतामित्यवादीत् । ततो राममिश्रशास्त्री सा हि जडैव सिद्धा ततश्च जाड्यचैतन्ययोः सामानाधिकरण्यस्यासंभवाच्चैतन्याश्रयः

परः सिध्यतीति । ततः केशवशास्त्री वास्तविकं चेत् चैतन्यं तत्र नेष्यते तदारोपितं कथं कार्यं निर्वाहयेदारोपेण तद्वत्तया ज्ञानस्य सौलभ्येऽपि कार्यस्य दौर्लभ्यान्नहि आरोपेण कार्यमात्रं संपादयितुं शक्यतइति । ततो राममिश्रशास्त्री । नहि युक्तिमात्रेण स्वमर्थं साधयामस्तस्याप्रतिष्ठानदोषग्रस्तत्वादत एव तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धमित्युक्तमेवमत्राप्यागमसहकृतया युक्त्या तस्या जाड्यं पुरुषस्य च चैतन्यं साधयाम इति । एवं परस्परमधरोत्तरेणानिश्चीयमाने विषये तद्विषये निश्चयाय प्रमदादासमित्रेण नहि बुद्धिः कदापि चैतन्यव्यतिरेकेणोपलभ्यते तत्कथं बुद्धौ चैतन्यारोपप्रवादः स उपपाद्यतामिति विज्ञप्ता बालशास्त्रिणो ऽवोचन् । ज्ञानं हि विषयेण संबध्यमानमेव विषयान् प्रकाशयति न त्वन्यथा । सर्वत्रैव सर्वविषयकज्ञानोत्पादप्रसङ्गात् । अत एव नैयायिका वैज्ञानिकानां मतमपहाय बाह्यपदार्थसत्तामास्थिषत । तदनु तेषां मतमेव युक्तं मन्यमानैः सांख्यैरपि ह्यतीतानागतवस्तुविषये तेषामसत्तया तैः साकं संबन्धस्यासंभवेन बौद्धपदार्था आस्थीयन्ते । अथ बाह्यपदार्थैरपि संबन्धस्य दुर्निरूपतया ज्ञानमात्रविषये बुद्धेस्तदाकारतापरिणाम एव ज्ञानसामग्र्या जन्यते सैव वृत्तिर्नाम । ततश्च बुद्धेः परिणामितया तस्याश्च जडत्वव्याप्यतयाऽजडेन प्रकाशात्मना पदार्थेनास्त्यवश्यमपेक्षेति पुरुषोऽपि सिध्यति । स च सवितेव नानाविधं वस्तुजातं प्रकाशयन्स्वयं च प्रकाशात्मा दर्पणइव स्वस्मिन्सकलानि ज्ञानानि प्रतिबिम्बरूपेण दधानोऽपि तेन तेन रूपेणापरिणमन् अपरिणामितालक्षणं प्रकाशत्वं तत एव च नित्यत्वमाश्रयतीति । ततो गङ्गाधरशास्त्री पूर्वप्रक्रान्तं शाब्दबोधस्यानुमितिगतार्थत्वं समानविषयकानुमित्यन्तरसामग्रीसमवधाने शाब्दसामग्र्याः प्रतिबन्धकतावादिभिः शाब्दोत्पत्त्युपपादनस्य शक्यत्वात्प्रकृते च समूहालम्बनात्मकानुमितिद्वयापत्तिदोषदूषितमवधार्येत्थं तन्निराकरोत् । शाब्दस्यानुमित्यन्तर्गतत्ववादिभिरपि समानविषयकानुमितिं प्रति शब्दजन्यानुमितिसामग्र्याः प्रतिबन्धकत्वमुच्यते ऽतो नायं दोषः । किंच चेष्टायाः पृथक् प्रामाण्यापत्तिः कथं परिहृतेति । ततो राममिश्रशास्त्री । शाब्दयामीत्यनुव्यवसायोदयात् शाब्द-

त्वस्य जातित्वं सिध्यतीति तस्याः पृथगेव प्रामाण्यम्। चेष्टायास्तु तथा ऽनुव्यवसायानुदयाच्च पृथक् प्रामाण्यापत्तिरिति । ततो बालशास्त्रिणः । भो यदयं शब्दजबोधस्यानुमित्यन्तर्गतत्ववादे प्रतिबध्यप्रतिबन्धकभावविषय आक्षेपसमाधानोपन्यासो नायमुचितो यतो नायं वादः केवलं वैशेषिकान्नैयायिकान्वा विषयीकुरुते ऽपि तु सर्वानेव प्राभाकरादींस्तान्त्रिकांस्ततश्च के चन युगपदनेकज्ञानोत्पत्तिमभ्युपगच्छन्तः प्रतिबध्यप्रतिबन्धकभावमेव न स्वीकुर्वन्तीति कस्तद्विषये दोषः। एवमनुव्यवसायविसंवादस्य दूषणतयोपन्यासोप्यनुचितः केश्चिदनुव्यवसायस्यैवानभ्युपगमादपरेषां च विप्रतिपन्नत्वात् । यस्त्वत्राभिनवकविविरचितश्लोकस्य तादृशार्थविषयकबोधेन व्याप्तेरग्रहात्तस्माद्बोधो न स्यादिति दोषस्य समाधानं भवन्मते ऽपि तद्वृत्त्याकाङ्क्षाज्ञाने कारणताया अग्रहात्कथं बोधः स्यादित्युक्तं तेन चिन्नीयते मे मानसं यतस्तच्छ्लोकश्रावणप्रत्यक्षरूपस्यैव तद्वृत्त्याकाङ्क्षाज्ञानस्य सत्त्वात्तद्वृत्तिकारणताग्रहस्य चानुपयोगाच्छाब्दबोधस्योपपत्तिरनुमित्यन्तर्गतत्ववादे व्याप्तिग्रहासंभव इति । एवं योग्यतासंशयेनापि शाब्दबोधो भवत्यनुमितिस्तु नैवमिति वैषम्यम् । किंच वेदवाक्येभ्य ईश्वरमङ्गीकर्त्तॄणां तदभिप्रायानुमितिसंभवे ऽपि तमनभ्युपगच्छतां किमभिप्रायानुमितिः स्यादिति निपुणं निरीक्ष्यताम्। तेषामीश्वरानभ्युपगमस्य भ्रमत्त्वे ऽपि शाब्दबोधस्तु तेषां भवद्भिरप्युपपादनीयः। न च भवन्मते ऽपि तात्पर्यज्ञानस्य कारणत्वात्तत्र किंनिष्ठतात्पर्यज्ञानं स्यादिति शङ्क्यम् । तात्पर्यज्ञानस्य कारणतायाः सर्वैरनभ्युपगमादिति । ततः प्रमदादासमित्त्रमहाशयः । ये हि विज्ञानात्मकमेव वस्तुमात्रमुपयन्ति तन्नये विषयज्ञानयोः संबन्धस्यासत्त्वाद्विज्ञानस्यैव तत्तदाकारत्वसिद्धान्तेन तत्र स्वतः सिद्धचैतन्यसत्त्वात्कथं बुद्धेर्जडत्त्वसिद्धिः सर्वमतेषु च बुद्धेर्जाड्यं साधनीयमिति । ततो बालशास्त्रिणः । वैज्ञानिकानां मतं हि नैयायिकैरेव दूषितं तन्नास्ति प्रकृते तद्दूषणस्य सार्थक्यमिति । ततः प्रमदादासमित्त्रमहाशयो नात्र केषां चिन्मतमिति किं चनोपन्यस्यते न च तत् कस्य चिन्मतानुसारेण दूषणमर्हति यतो ऽस्याः सभाया उद्देशो न मतप्रतिपादने ऽपितु वस्तुतत्त्वपरी

त्वयाऽइति मतेषु पक्षपातमुत्सृज्य यदेव युक्तमाभासेत तच्छुश्रूषामहे इत्यवोचत् । अथ बालशास्त्रिणः । आदौ तावत्प्रत्यक्षातिरिक्तमनुपयत्सु चार्वाकेषु बौद्धास्तन्मतनिरासपुरःसरमनुमानप्रामाण्यमास्थिषत । तदनु सांख्यास्तदुक्तमार्गेणैव बुद्धेर्जडत्वमसाधयन् प्रकाशरूपतां च पुरुषस्य । एवं मध्ये बहुभिस्सैद्धान्तिकैर्वेदप्रामाण्यमपि निर्भरेण निरूपयद्भिर्यद्यपि स्वस्वमतानुसारेण पदार्थोत्पत्त्यादिक्रमो बुद्धेरात्मनिष्ठत्वादिकमपि च न्यरूप्यत तथापि न तेषां तदंशे प्रामाण्यं न वा तस्य वस्तुस्थितौ तेषां तात्पर्यम्। यत्परः शब्दः स शब्दार्थ इति न्यायात् । पूर्वपूर्वमतोपगतापसिद्धान्तनिरास एव तेषां तात्पर्यात् । अतश्च नैयायिकादिभिर्बुद्धेरात्मगुणत्वव्यवस्थापनेऽपि सुखदुःखादेरात्मसमवेतत्वव्यवस्थापने ऽपि च परमार्थतो विचारे शाङ्करमेव मतं सकलसिद्धान्तशिरोमणिभूतमित्येव परमो ऽस्माकं विश्वासः । अथापि कथाकाले तत्तन्मतोपरि निक्षिप्यमाणा आक्षेपा विचारपुरःसरं युक्तिभिर्निरसनीया एव । न हि देह एवात्मेति वदन् विना नैयायिकाद्युक्तयुक्त्युपन्यासं प्रथममेव नित्यशुद्धबुद्धमुक्त आनन्दस्वरूप एवात्मेति कथमञ्जसा श्रद्दधीत । एवमेव च किल सकलशास्त्राणामविरोध उपपादनीय इति वदन्ति स्म । तदुत्तरं चोत्तरसभायां विश्वनाथशास्त्री पुरुषबहुत्वं निरस्यामीत्यवोचत् । ततः संध्यावन्दनसमये जाते सर्वे सभां व्यसृजन्निति शम् ।

---

THE

# NYÁYADARŚANA.

WITH THE COMMENTARY BY VÁTSYÁYANA.

*Continued from page* 128.

5. APHORISM.

Now, inference preceded by that [Perception] is of three kinds: [the first is called] Púrvavat or the inference proceeding

---

न्यायदर्शनवात्स्यायनभाष्यम् ।

सू० अथ तत्पूर्व्वकं त्रिविधमनुमानम् पूर्व्ववच्छेषवत् सामान्यतो दृष्टञ्च ॥ ५ ॥

from the prior i. e. cause; [the second is] Śeshavat or that proceeding from the posterior i. e. effect; [the third is] Sámányato-drishṭa or that proceeding from the fact of general observation.

COMMENTARY.

In the phrase 'Preceded by that' the word 'that' refers to the observation of the mutual relation between a sign and what is marked by it, and to the observation of the sign itself. By the observation of the relation between a sign and what is marked by it we mean the remembrance of a sign being universally associated with what is marked by it (the "vyápti" of the later nyáya). By means of the recollection of a sign being universally associated with what is marked by it, an object which cannot be perceived by the senses at the time, is inferred.

The inference proceeding from the prior takes place when we infer an effect from its cause; as we infer for example, from the rising of clouds that it will rain. The inference proceeding from the posterior takes place when we infer a cause from its effects; as for instance, when we see a river overflowing its banks, its water having at the same time a colour quite different from that it had before, and its current being unusually rapid, we conclude from it that it has rained. The third kind of inference takes place when we conclude a thing from the fact of general obser-

---

भा॰ तत्पूर्व्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनम् लिङ्गदर्शनञ्चाभिसम्बध्यते लिङ्गलिङ्गिनोः सम्बद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते । पूर्व्ववदिति यत्र कारणेन कार्य्यमनुमीयते । यथा मेघोन्नत्या भविष्यति वृष्टिरिति । शेषवत्तत् यत्र कार्य्येण कारणमनुमीयते । पूर्व्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति, सामान्यतो दृष्टं व्रज्यापूर्व्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति तथाचादित्यस्य तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति । अथ वा पूर्व्ववदिति यत्र यथा पूर्व्वम्प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम् । यथा धूमेनाग्निरि-

vation; as for example, it being generally observed that an object seen in different places is moving, we infer the motion of the sun, though invisible to us, from his being seen in different places. Or else, the inference proceeding from the prior takes place when we infer the existence of one of two objects previously seen together from the view of the other, as for instance. fire is inferred from the sight of smoke. 'Śeshavat' means the inference of what is remaining. In this kind of inference, some of the predicates which might possibly be given to a certain object being denied to it, one is led to conclude what is not denied, that is, remaining. As for example: It being asserted that the non-eternal is possessed of the highest universality [Śattá] by this attribute, which commonly appertains to substance [Dravya] quality [Guṇa] and action [Karma], sound is excluded from the categories of generality [Sámánya] particularity [Viśesha] and of Inhesion [Samaváya]; but it being doubtful whether sound comes under the category of substance or of action or of quality, it is argued that it is not one of the substances [Dravya] from its being inherent in one substance [ether] only; nor is it an action [Karma], from its being the cause of another sound. Now what remains i. e. has not been rejected, is the category left for sound, and so it is proved to be one of the qualities.

ति । शेषवन्नाम परिशेषः स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्म्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन् द्रव्यकर्म्मगुणसंशये न द्रव्यमेकद्रव्यकत्वात्[1], न कर्म्म, शब्दान्तरहेतुत्वात्, यस्तु शिष्यते सोयमिति शब्दस्य गुणत्वप्रतिपत्तिः । सामान्यतो दृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा इच्छादयो गुणाः गुणाश्च द्रव्यसंस्थानाः तद्यदेषां स्थानं स आत्मेति ॥ विभागवचनादेतत्त्रिविधमितिसिद्धे त्रिविधवचनम् महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वा-

1 द्रव्यकत्वात् instead of द्रव्यत्वात् B. I.

'Sámányatodṛishṭa' is that kind of inference wherein the relation between a mark or sign [Linga] and what is marked by it [Lingí] being unknown we conclude the invisible Lingí from the resemblance of the sign [Linga] to some other object. As for instance: we infer the soul from desire and so forth; for, desire and so forth being qualities which must be inherent in some substance, we cannot but assign a substratum to those qualities and this we call the soul or mind.

Although the triplicity of the inference would be quite manifest from the mere statement of its division, yet the word "three fold" is added to show that the author thinks highly of the shortness of his Sútra which contains the whole doctrine of the important and much comprising syllogism, and that, he thinks comparatively less of the shortness of other Sútras. The triplicity of inference as mentioned above is mostly found in the science concerning the Established truths [Siddhánta] Fraud [chhala] words of the trustworthy [Śabda] and so forth. Perception refers to present objects [Sat]; whereas inference refers to present and absent objects. Why? From its comprehending all the three times: for the objects existing in the three times are grasped by inference. For we can infer what will be, what is, and what has been. Absent [Asat] means either what is past or what is future. Now about Comparison.

6. APHORISM.

Comparison or Knowledge of resemblance [Upamána] is the means of proving what is to be proved, through its similarity to something perfectly well known.

---

क्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः। तथाचायमित्थम्भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्रे इति। सद्विषयञ्च प्रत्यक्षं सदसद्विषयञ्चानुमानम्, कस्मात् त्रैकाल्यग्रहणात् त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते भविष्यतीत्यनुमीयते भवतीति चाभूदिति च। असच्च खल्वतीतमनागतञ्चेति। अथोपमानम् ॥

सू॰ प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

भा॰ प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथागौरेवं गवय इति, किं पुनरत्रोपमानेन क्रियते यदा खल्वयं गवासमानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति समाख्यास-

COMMENTARY.

Knowledge of resemblance [Upamána] is the instrument of knowledge of an object through its similarity to something well known previously. For instance, the Gavaya is known from its similarity to the cow. But, some one might object, what is effected, in this instance, by the knowledge of resemblance? For, when a man finds qualities similar to those of a cow, he directly perceives the object [Gavaya]. We answer that the use of the knowledge of resemblance is the knowledge of the relation between a name and an object so named. For, a particular case of knowledge of resemblance being expressed to a man as, 'just as a cow is so is Gavaya,' he when perceiving, with his eye, an object possessing the same characters as a cow, knows the relation of the name Gavaya to that object. In like manner, other cases of Upamána being expressed as, 'just as Mudga [a sort of kidney bean] is so is Mudgaparṇí '[another sort of kidney bean],' 'just as Másha is so is Máshaparṇí,' one, from the knowledge of resemblance, knowing the relations of the names 'Mudgaparṇí and Máshaparṇí' to the herbs so named takes them for the purpose of a medicament. In the same way many other cases of Upamána may be sought for in the world. Now about words of the trustworthy (śabda).

---

म्बन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्म्ममर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति । यथा मुद्गस्तथा मुद्गपर्णी यथा-माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञि[1]सम्बन्धम्प्र-तिपद्यमानस्तामोषधीं भैषज्यायाहरति एवमन्योप्युपमानस्य लोके विषयो बुभुत्सितव्य इति । अथ शब्दः ॥

सू॰ आप्तोपदेशः शब्दः ॥ ७ ॥

भा॰ आप्तः खलु साक्षात्कृतधर्म्मा यथादृष्टस्यार्थस्य चिख्याप-यिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याप्तिस्तया वर्त्तत[2] इत्याप्तः ऋष्यार्य्यम्लेच्छानां समानं लक्षणम् । तथा च सर्व्वेषां व्यवहाराः प्रवर्त्तन्त-

---

1 संज्ञासंज्ञि instead of संज्ञासङ्गि B. I.

2 वर्तते instead of प्रवर्तते, B. I.

7. APHORISM.

Word or testimony is the assertion of the veracious [Ápta].

COMMENTARY.

The characters of the veracious Ápta should be well known. The "Ápta" is a man who, whilst giving information, is actuated by a desire to state the facts in exact agreement with his own experience. Immediate knowledge of an object is called Ápti or acquisition; one possessing it [as well as other qualities] is said to be Ápta. Such is the description of the veracious 'Ápta' which is applicable to all sages, respectable men and even barbarians that are endowed with the said qualities. So that all the actions and all the intercourse of gods, men and animals proceed by means of the instruments of knowledge only and by no other way.

8. APHORISM.

It is of two kinds, 1. that [testimony] whereof the matter is seen [Dṛishṭártha], 2. that whereof the matter is not seen [Adṛishṭártha].

COMMENTARY.

Dṛishṭártha means that assertion whereof the matter is seen in this world. Adṛishṭártha means that assertion whereof the matter is to be seen in the next world. Such is the difference between the assertions of the sages and those of ordinary men. Why is this division given? It is given, in order that one may not

---

इति । एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते[1] नातोऽन्यथेति ॥

सू॰ सद्विविधो दृष्टाऽदृष्टार्थत्वात् ॥ ८ ॥

भा॰ यस्येह दृश्यतेऽर्थः स दृष्टार्थः यस्यामुत्र प्रतीयते सोऽदृष्टार्थः एवम् ऋषि[2]लौकिकवाक्यानां विभागइति । किमर्थं पुनरिदमुच्यते स न मन्येत दृष्टार्थएवाप्तोपदेशः प्रमाणम् अर्थस्यावधारणादिति । अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति । किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति तदुच्यते ॥

---

1 प्रकल्पन्ते instead of प्रकल्प्यन्ते B. I.

2 एवम् ऋषि instead of एवमपि B. I.

suppose only those assertions of the veracious to be authoritative whereof the matter is seen in this world, the certainty of the matter being manifestly determined; for, that assertion also, whereof the matter is not seen in this world, is authoritative, the existence of that matter being inferred.

In anticipation of the question what are those objects to be established by the instruments of knowledge, the author gives the next aphorism.

9. APHORISM.

Soul, body, sense, sense-objects, knowledge, intellection, mental sensory, activity, vices, transmigration, fruit, pain, and beatitude are the things worth rightly knowing.

COMMENTARY.

The Soul is all-seeing, all-enjoying and all-suffering, all-feeling and all-knowing. Body is its abode through which it enjoys or suffers. Organs of sense are the instruments of experience. Sense-objects are the things to be felt or experienced. Intellection [Buddhi] is experience. The organs of. sense are not able to produce experience of all objects; but the mental sensory [Manas] which is an internal organ, takes any thing as its object. It is the cause of the external and internal perceptions, that is, perception of the external objects and feeling of pleasure and pain. Activity and vices do not belong to it, that is, to the mental sensory. Transmigration of the soul [Pretyabháva] is the state of the soul undergoing a perpetual change of bodies differing from preceding and

---

सू॰ आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

भा॰ तत्रात्मा सर्वस्य द्रष्टा, सर्व्वस्य भोक्ता, सर्वज्ञः, सर्व्वानुभावी, तस्य भोगायतनं शरीरम् । भोगसाधनानीन्द्रियाणि भोक्तव्या इन्द्रियार्थाः भोगो बुद्धिः । सर्व्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्व्वविषयमन्तःकरणं मनः शरीरेन्द्रियार्थबुद्धिसुखदुःखवेदनानां निर्वृत्तिकारणम्, प्रवृत्तिर्दोषाश्च नास्य, इदं शरीरमपूर्व्वमनुत्तरञ्च, पूर्व्वशरीराणामादिर्नास्ति उत्तरेषामपवर्गोऽन्त इति प्रेत्यभावः । स साधनसुखदुःखोपभोगः फलम् । दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्या-

succeeding bodies. The series of the preceding bodies has no beginning, but that of the subsequent bodies terminates in beatitude. Fruit is the experience of pleasure or pain through the means of body sense and so forth. Pain does not consist in the privation of the agreeable perception of pleasure. What then? It proceeds even from the birth, in other words, pain takes its rise from the very beginning of the birth of a creature. The instruments of pleasure or pain, namely, the body, senses, objects and so forth, being ever closely connected with pain never parting from it, nay, experiencing a variety of vexations, the author recommending pain to be known, suggests us to engage in the abstract meditation; for, a man engaged in meditation obtains clearness of thoughts, and then possessing clearness of thoughts he becomes disgusted with worldly concerns, and being disgusted with the worldly concerns, he becomes void of attachment to all objects and after being void of attachment to objects he gains beatitude. Beatitude is defined as an entire annihilation of pain together with freedom from the bondage of the continuous series of births and deaths.

Though there are other sorts of objects worth knowing, as Substance. Quality, Action, Generality Particularity and Inhesion,* which are innumerable with their divisions, yet the objects enumerated in this aphorism have been particularly enunciated by the author; for, the right understanding of them leads one to beatitude and the misunderstanding to transmigration.

* See the fourth Vaiśeshika Aphorism.

ख्यानम्, किन्तर्हि जन्मनएवेदम्, ससुखसाधनस्य दुःखानुषङ्गाद्दुःखेनाविप्रयोगाद्विविधबाधनायोगाद्दुःखमिति समाधिभावनमुपदिश्यते, समाहिता भावयति, भावयन्निर्विद्यते, निर्विण्णस्य वैराग्यम् विरक्तस्यापवर्ग इति जन्ममरणप्रबन्धोच्छेदः सर्व्वदुःखप्रहाणमपवर्ग इति। अस्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः प्रमेयम् तद्भेदेन चाऽपरिसङ्ख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गः मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति॥

तत्रात्मा तावत्प्रत्यक्षतो न गृह्यते स किमाप्तोपदेशमात्रादेव प्रतिपद्यतइति नेत्युच्यते। अनुमानाच्च प्रतिपत्तव्यइति। कथम्॥

सू॰ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति॥ १०॥

The soul being not known by the senses, the question arises: Is it known merely from the assertion of the veracious, Ápta? We answer not so; it is to be known from inference. How is it?

10. APHORISM.

Desire, aversion, volition, pleasure, pain and cognition are the sign of the soul.

COMMENTARY.

The soul perceiving an object of the same sort from the vicinity of which it has once felt pleasure wants to possess it again. Such desire to possess, which, necessarily supposes one percipient, perceiving various objects and at the same time recalling his previous perceptions, is the mark of the existence of the soul. Recollection is not possible in mere intellection which is cognisant only of some limited object, just as it is impossible in the case of a separate body [which does not recollect what is perceived by another body than itself]. In like manner, as to the means of pain, there arises aversion in a percipient subject perceiving various objects, from the recollection of his previous perceptions. Again, the knowing subject, seeing an object of the same sort that is well known to him as the means of pleasure, wishes or endeavours to possess it; such will or volition cannot take place, if there be no such being to perceive various objects and to recall to himself his past experiences. Nor is this recollection possible in the mere intellection, cognisant only of some limited object, as in the case of a separate body. In the same way a volition in the case of the means of pain may be explain-

भा॰ यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनोदर्शनप्रतिसन्धानाद्भवति लिङ्गमात्मनः, नियतविषये हि बुद्धिभेदमात्रे प्रतिसंधानं न सम्भवति[1] देहान्तरवदिति। एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्दुःखहेतौ द्वेषः, यज्जातीयो यस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थम्पश्यन्नादातुम् प्रयतते सोऽयम् प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात् नियतविषये बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या

1 बुद्धिमात्रे प्रतिसंधानं न संभवति instead of बुद्धिमात्रे न संभवति. B. I.

ed. By the remembrance of pleasure or pain the soul acquiring the means of them finds pleasure or pain, that is, experiences them. Here the reason is the same as mentioned before. When the soul wishes to know something it deliberates about it: 'What is it?' and having thus pondered over it, he knows it to be such and such a thing. Such knowledge having the same agent as the desire of knowing and the reflexion about object, is another sign of the soul. Here there is the same reason as mentioned before. Now the phrase 'like a separate body,' [Dehántaravat] is thus explained :—With regard to the deniers of the soul, (we remark the following) as the different intellections situated in the different bodies, and directed upon some fixed objects, are not remembered by each other, [as they are not perceived by each other]; just so the different intellections or cognitions of the same persons could not be remembered by one another; both cases being quite similar to each other. There is a law pertaining to a single body that one can remember what has been seen by oneself and not that which is seen by any other than oneself In like manner, there is another law regarding beings more than one that they do not remember what has been seen by persons different from themselves. But the deniers of the soul are not able to establish these two laws. So it has been proved that the soul exists.

KEŚAVA ŚASTRI.

*(To be continued).*

---

चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते पूर्व्वोक्त एव हेतुः, बुभुत्समानः खल्वयं विमृशति किंस्विदिति विमृशन् जानीते इदमिति तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गम् पूर्व्वोक्त एव हेतुरिति। तत्र देहान्तरवदिति विभज्यते। यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते तथैकदेहविषया अपि न प्रतिसन्धीयेरन् अविशेषात्, सोऽयमेकसत्त्वस्य समाचारः स्वयं दृष्टस्य स्मरणं नान्यदृष्टस्येति एवं खलु नानासत्त्वानां समाचारोऽन्यदृष्टमन्ये न स्मरन्तीति। तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमिति। एवमुपपन्नमस्त्यात्मेति।

भावः स्वपुत्रत्वमयः· अहार्यतां न· आलम्बते· आश्रयति, यतः स्वभावः स्वप्रभावर्त्ती, अत एव· इह श्रीकृष्णो वो युष्माकं मान्यतया· आदरणीयतया· अलं, युष्माकमेतद्गुरुत्वादिति भावः। बतेति खेदे· अनुकम्पायां वा। कृष्णसंबन्धात्· अन्यतया च· आत्मा मा खेदयितव्यः अयमीश्वरो नु स्याद्वयं तद्वन्य एव गोपाः कथमेतत्संबन्धवन्तो भवितु मर्हाम इति भावनाकष्टं न कर्तव्यमित्यर्थः, किंतु दयितव्योऽनुकम्प्योऽयम्। अनीषदेव· अनल्पमेव, निर्वृता आनन्दिताः ॥ २६२ ॥

स्थिरे सति सकलजनमनसि निजलोकतोऽजलोकतोषितां तदनुमोदितां मोदितां च स्वसंतानरक्षणक्षणनः सकलसौभाग्यपरिमलसुरभिं सुरभिं समुपव्रजन्तीमुपव्रजन्ती * व्रतरापत्रपापत्रपालिच्छन्न· नयनसहस्रसहस्रवद्रोषरजा निर्वेदसंपदेव पुरु हूतः पुरुहूतः पथि संगम्य ॥ २६३ ॥

ततश्च पुरुहूत इन्द्र उपव्रजं निजलोकतः समुपव्रजन्तीं सुरभिं पथि संगम्य स्वापराधं क्षमापयितुं नगोपरि विहरन्तं श्रीकृष्णं रहसि समुपससादेत्यन्वयः। सुरभिं कथंभूताम्, अजलोकैः· अजेन ब्रह्मणा तल्लोकैश्च तोषितां, सकलसौभाग्यमेव परिमलस्तेन सुरभिं, सुगन्धितामित्यर्थः। स च कीदृशः, तीव्रतरा या· अपत्रपा लज्जा तस्याः पत्रपालिभिर्दलश्रेणिभिरिव छन्नं यन्नयनसहस्रं तेन सह स्रवन्ति गलन्ति रोषरजांसि क्रोधगर्वादीनि यस्य सः। निर्वेदस्य स्वावमाननस्य संपदा कर्त्र्या पुरु· अधिकं यथा स्यात् तथा हूतः,स्वशरणार्थमिव कृताह्वान इत्यर्थः ॥ २६३ ॥

स्वापराधं क्षमापयितुमापयितुमपि स्वविनयं नयं च तत्सौभाग्यलक्ष्म्या समाकृष्टमिव नगोपरि परितोषेण विहरन्तं हरन्तं च तस्य वातवृष्टिजन्यक्रममिव कस्मैचित् कार्यान्तरायान्तरायापन्नक्षणसङ्गसुखैरनुचरै रहिततयाततया च कृपयाद्वितीयं कृष्णं रहसि समुपससाद ॥ २६४ ॥

* —व्रजं तीव—इत्येवं मुद्रणार्हतायामपि संधिः प्राग्वत्।

आपयितुं प्रापयितुं, ज्ञापयितुमित्यर्थः । नगस्य गोवर्धनस्योपरि । तस्य नगस्य सौभाग्यसंपत्त्या समाकृष्टमिवेति विहरणे हेतुरुत्प्रेक्षितः । हरन्तं चेति तत्र प्रयोजनमुत्प्रेक्षितम् । कस्मैचित् इन्द्रादिप्रसादनरूपाय । अनुचरैः रहिततयेति, तत्र तैः साहित्ये रसभङ्गापत्तेः । अत एवान्तरायेण विघ्नेन आपन्नं विपन्नं क्षणं व्याप्य सङ्गसुखं येषां तैः ॥ २६४ ॥

सादरमथ सा गवां जननी गवां देवीव देवी वक्तुमुपचक्रमे क्रमेण, भो देव व्रजराजराजधानीमृगमदविशेषक विशेषकथामवधेहि ॥ २६५ ॥

गवां वाचां देवीव । देवी सुरभिः । विशेषक तिलकरूप ॥ २६५ ॥

वधेहि गवां गोदुहां च कृतोद्यमस्यातिशतमन्योः शतमन्योः प्रबलतरतरसं कष्टामतिवृष्टिमतिवाह्य मतिवाह्यतायाः अप्यविषयमतिमहिमानं महिमानं प्रकटयन् यदखिलसौभगवान् भगवान् तत्रभवान् भवान् गोकदम्बमरक्षीत्, तेन स्वयं स्वयंयोनिना परममुदितायां मुदि मुदितमनसाहमुक्ता मुक्तातिधैर्येण ॥ २६६ ॥

कष्टाम् अतिवृष्टिमतिवाह्य पराभूय भवान् यद्गोकदम्बमरक्षीत् तेन स्वयंयोनिना ब्रह्मणा मुदितमनसा अहमुक्तेत्यन्वयः । प्रबलतरं तरो वेगो यस्यास्तामतिवृष्टिम् । मतिभिर्बुद्धिभिर्वाह्यतायाः वोढुं शक्यतायाः अप्यविषयम् अतिशयो महिमा बृहत्त्वं यस्य तं महिमानं प्रकटयन् लोके प्रदर्शयन् । मुदि आनन्दे परमं यथा स्यादेवम् उदितायां सर्वत्रोदितवत्यां सत्याम् ॥ २६६ ॥

याहि सुरभे देवि सुरभेदे विगतस्पृहं दैवोपनतेन शतमन्युमन्युना विपद्यमानानां महाकविपद्यमानानां महाकरुणं गवां रक्षणक्षणपरं सानन्दा नन्दात्मजं त्वमधुना गवामिन्द्रत्वेनाभिषेक्तुमर्हसि ॥ २६७ ॥

सुराणां भेदे विगता स्पृहा येन तद्यथा स्यात् तथा याहि, महाकवीनां पद्यैर्मानः स्तवो यासां तासाम् ॥ २६७ ॥

एष चाहं स हंसमारुह्य ब्रह्मर्षिसुरर्षिसुरकिंनरचारणसिद्धसिद्धसाहित्यस्तमहमहतमहानन्दमालोकयितुमनुसरामीति ॥ २६८ ॥

एष च स तद्भृत्यत्वेन प्रसिद्धः, बालवत्साहरणार्गास दृष्टचरतद्वैभव इत्यर्थः, ब्रह्मर्ष्यादिभिः सिद्धं साहित्यं मेलनं यस्य तथाभूतः सन्नेवेति विलम्बो द्योतितः ॥ २६८ ॥

अयं च मुहुरागोरागोपहतो मन्दात्तमन्दात्त एव निजाभव्यताभव्यतापः स्वमवमन्तुमना मन्तुमनाकलितमपमार्जयितुमागतोऽपि पुरो भवितुं पुरंदरो दरोपहत आस्ते ॥ २६९ ॥

आगोऽपराधश्च रागस्तद्धेतुः क्रोधश्च ताभ्यामुपहतः स्वं मुहुरवमन्तुमना इति संबन्धः । मन्तुमपराधम्· अनाकलितमननुभूतपूर्वं, दरोपहतो भयव्याकुलः ॥ २६९ ॥

तदनुमन्यतामन्यतामागत इवायं स्वयमेव भवच्चरणाभ्यासमभ्यासन्नः स्वगतं निवेदयतु ॥ २७० ॥

अन्यतामागत इव, अन्यो जनो यथा स्वयमेव निवेदयति तथायमपीत्यर्थः ॥ २७० ॥

इति तयोक्ते भीतभीत इव नयनसहस्रसहस्रवदम्भा दम्भादवतीर्य मुकुटतटघटमानमहामणीन्द्रमहसा सहसा चालयन्निव चरणमूलमवललम्बेऽलम्बे*गुस्तम्ब इव ॥ २७१ ॥

नयनसहस्रात् सहैव स्रवन्ति· अम्भांसि यस्य सः, दम्भादवतीर्य वियुक्तीभूय, दम्भं परित्यज्येत्यर्थः ॥ २७१ ॥

---

* अत्रापि संधिः प्राग्वत् ।

चिरादुत्थाय सादरदरमञ्जलिं निबध्य सापराधतयाधोमुखः पदनखराखरामलमरीचिवीचिवीक्षणक्षणः किंचिदस्तौदस्तौजा विडौजा निविडोऽजानियतदम्भेनापि नापिहितविनयः ॥ २७२ ॥

सादरदरं सादरं सभयं च, पदनखराणाम्· अखराः स्निग्धा अमला या मरीचयस्तद्वीचीनां वीक्षणे क्षण उत्सवो यस्य सः, अस्तौजा गततेजस्कः, अजा माया तया नियत एव यो दम्भस्तेन निविडोऽपि, तदानीं न· अपिहितो न· आच्छन्नो विनयो यस्य सः, अन्यदा तु पारिजातहरणादौ दुर्विनयव्यक्तेरिति भावः ॥ २७२ ॥

त्वमसि सकललोकनाथनाथो
व्रजपुरनाथसुतः स्वतः स्वतन्त्रः ।
महमहितमहामहत्त्वतत्त्व-
स्तव महिमा नहि मादृशैर्विगाह्यः ॥ २७३ ॥

महेन· उत्सवेनापि महितं पूजितं नतु स्वेनोपमातुं शक्तं महामहत्त्वं यस्य तदेव तत्त्वं यस्य सः ॥ २७३ ॥

निजमदमदिरामुदा मदान्धाः
कथमथ ते महिमानमामनन्तु ।
प्रकृतिकृतविकारदृष्टिदोषा
द्युमणिरुचो न विलोकयन्ति घूकाः ॥ २७४ ॥

प्रकृतिः स्वभावः, घूकाः पेचकाः ॥ २७४ ॥

अथ मदमदिराविनष्टदृष्टे-
रयमुचितो मखखण्डचण्डदण्डः ।
पुरुकरुण सुदण्ड एव पथ्यो
हतजनुषां जनुषान्धमण्डलानाम् ॥ २७५ ॥

सुदण्ड एव, पक्षे॰ ऋजु लकुटम् ॥ २७५ ॥

उपकृतमिदमेव मे त्वया यत्
पुरुकरुणावरुणालयेन देव ।
अपकृतमिति तन्मया विबुद्धं
प्रकृतिखला: किल विप्रतीकबोधा: ॥ २७६ ॥

विबुद्धं विरुद्धतया बुद्धम् ॥ २७६ ॥

अपि गतरजसं रजो धुनीते
विषयविषामिषलालसान् किमस्मान् ।
कथयितुमथवा मद: कथं स्यात्
प्रभवति चेत् तव दुर्नमा न माया ॥ २७७ ॥

गतरजसं वीतरागं, मुनिमपीत्यर्थ: । अस्मान् कथयितुं किम्, अस्मान् धुनीते॰ इति वक्तुं किमशक्यमित्यर्थ:, अस्माकं का कथेति यावत् । दुर्नमा दुर्दमा ॥ २७७ ॥

जय जयद जगत्त्रयैकसार
व्रजपुरमङ्गल मङ्गलावतार ।
निरुपमगुणनामधाम दामो-
दर वसुदामसुदामदामबन्धो ॥ २७८ ॥

निरुपमानां गुणानां नाम्नां धाम हे॰ आश्रयभूत ॥ २७८ ॥

दुरवगम नमो नमो न मोहं
पुनरुपपादय देव नो दयस्व ।
सुघटविघटनाय दुर्घटस्या-
पि च घटनाय भवन्ति ते कटाक्षा: ॥ २७९ ॥

दुरवगम हे दुर्ज्ञेय पुनर्मोहं न प्रापय ॥ २७९ ॥

अभव बहुभवोंऽशत: पुरा त्वं
विबुधमुदे कुतुकादभूरुपेन्द्र: ।
स्वयमयमधुनोक्षित: सुरभ्या
भव सकलेन्द्रशिखेन्द्रनीलनील: ॥ २८० ॥

अभव हे॰ अज तदपि त्वं बहुभवो बह्ववतार:, पुरा॰ अंशतोंऽशेन विबुधानां मुदे कुतुकादेव स्वमुपसर्जनीकृत्य॰ उपेन्द्र इन्द्रकनिष्ठोऽभू:, सुरभ्या॰ उक्षित:॰ अभिषिक्त: सन् ॥ २८० ॥

गोविन्देत्यभिरामनाम यदपि प्रागेव सिद्धं सदा
गोलाभादथ गोविचारकतया शश्वद्गवां सत्तया ।
गोपेन्द्रात्मज भोस्तथापि भगवन्नद्याभिषेकोत्सवे
श्रीगोवर्धनभूधरेन्द्रधर हे गोविन्दनामा भव ॥ २८१ ॥

गोलाभादित्यादिना "विद्लृ लाभे" "विद विचारणे" "विद सत्तायां"मित्येतै: साधितं गोविन्देति ॥ २८१ ॥

इति वास्तवस्तवनेन स्वमानमुचि नमुचिसूदने सति पुरस्कृतकमलासना सनातनसनकसनन्दनसनत्कुमारकुमारसहितसोमसोमशेखरा दिगधीशपरंपरापराचिता नारदतुम्बुरुप्रभृतिकोत्तममहर्षिमहर्षिमण्डलमण्डिताहरुन्धतीप्रभृतिमुनिभार्याभार्या रूपगुणलावण्यसमानमाननारा नारायणोरुजाप्सर:प्रधानाप्सर:प्रथा नानाविधा सभा सुराणां भासुराणां तदभिषेकमहामहाधिकदिदृक्षयाक्षयानन्देन नभो मण्डयामास ॥ २८२ ॥

नमुचिसूदने॰ इन्द्रे स्वमानमुचि स्वगर्वं त्यक्तवति सति तस्य कृष्णस्य॰ अभिषेकमहामहस्य॰ अधिकदिदृक्षया सुराणां नानाविधा सभा नभ आकाशं मण्डयामासेत्यन्वय: । सनातनादिभि: सहित: सोम उमासहित: सोमशेखरो महादेवो यस्यां सा । कुमार: कार्त्तिकेय: । नारद-

तुम्बुरुप्रभृतिकं च तत्· उत्तममम्· उत्कृष्टशोभं च हर्षि हर्षयुक्तं च यन्महर्षिमण्डलं तेन मण्डिता । मुनिभार्याणां भाभिः कान्तिभिरार्या । रूपगुणादिभिः समानाम्· अनुरूपां माननाम्· आदरं रान्ति प्राप्नुवन्तीति सोमपाशब्दवत्, ताश्च नारायणोरुजा उर्वशी· अप्सरःप्रधानं यासां ता अप्सरसश्च तासां प्रधा प्रकृष्टधारणं यस्यां सा ॥ २८२ ॥

तस्मिन्नेव समये ।

सिंहासनं विविधरत्नशिलाविलासि
गोवर्धनः स्ववपुषोऽवयवेन चक्रे ।
पाशायुधः स्वयमुपेत्य मणीन्द्रमुक्ता-
विस्रावि तत्र विदधार सदातपत्रम् ॥ २८३ ॥

गोवर्धनस्य सर्वतः श्रैष्ठ्यात् सिंहासनस्यापि· इन्द्रत्वे मुख्यलिङ्गत्वात् प्रथमं तेनैव तदुपहृतमित्याह सिंहासनम् । सत् सुन्दरम् ॥ २८३ ॥

सञ्चारुचामरविधूननधूनहस्ताः
श्रद्धावशेन परितो मरुतोऽपि तस्थुः ।
पूर्णः सुधांशुरपि मण्डलरूपयैव
तन्वा विवृत्य मणिदर्पणतामियाय ॥ २८४ ॥

विवृत्य विवृतीभूय ॥ २८४ ॥

देध्मीयते स्वयमथ स्म विधाय काय-
व्यूहं मुहुस्तत इतोऽप्यथ पाञ्चजन्यः ।
ज्योतिर्मयः परित एव रुचां चयेन
जाज्वल्यते स्वयमुपेत्य सुदर्शनः स्म ॥ २८५ ॥

देध्मीयते स्म· अतिशयेन ध्वनितवान् । जाज्वल्यते स्म, दीपादिरूपेणेत्यर्थः ॥ २८५ ॥

पद्मं विभोरपि विभुत्वमुपेत्य नाना
छत्राणि हंसविशदानि समन्ततोऽभूत् ।
कौमोदकी तु महसा महिताभिषेक-
यज्ञोत्सवस्य मणियूप इवावतस्थे ॥ २८६ ॥

विभोः पद्ममपीति संबन्धः ॥ २८६

सप्तार्णवाश्च सरितश्च नदाश्च पुण्याः
पुण्यानि यानि सलिलाशयमण्डलानि ।
स्वस्वाम्बुपूर्णमणिमङ्गलकुम्भहस्ते-
स्तैस्तैरभावि परिभावितदिव्यदेहैः ॥ २८७ ॥

परिभावितस्तिरस्कृतो दिव्योऽपि देहो यैस्तैः, यद्वा परि सर्वतो भावेनैव भावितः कृतो दिव्यो देहो यैस्तैरभावि तत्राभूयत ॥ २८७ ॥

॥ शेषमग्रे ॥

---

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य ॥

### ॥ एकादशः परिच्छेदः ॥

१५ ॥ मिश्रभाववाचकेषु लक्षणाकरणेन ॥—मिश्रभावानां विशेषतो नीतिसंबन्धिनां च तेषां प्रायो मनसि स्वैरं संगृहीतसन्नित्यस्थिरप्रतिमानविधुराणां विज्ञानानां समुदायतया तद्वाचकनाम्नामर्थः शुद्धविज्ञानानीव न कथमपि शब्दग्राहिकृतया प्रदर्शयितुं शक्यते । परं तु तेषामवयवशः परीक्षया पूर्णयाथार्थ्येन ते भावा लक्षयितुं शक्यन्ते । यतस्तेषां कैश्चित्प्रतिमानैः सह संबन्धं विनैव स्वैरमात्मनासंगृहीतानामनेकविज्ञानानां समुदायतया मनुष्याः स्वविवक्षानुसारेण सर्वेषु समुदायेष्वनुगतानि कानि चिद्विज्ञानानि पृथगाकलयन्ति, ततश्च वक्तृश्रोतारावुभावपि क-

तुम्बुरुप्रभृतिकं च तत्· उत्तममम्· उत्कृष्टशोभं च हार्षं हर्षयुक्तं च यन्महर्षिमण्डलं तेन मण्डिता । मुनिभार्याणां भाभिः कान्तिभिरार्या । रूपगुणादिभिः समानाम्· अनुरूपां माननाम्· आदरं रान्ति प्राप्नुवन्तीति सोमपाशब्दवत्, ताश्च नारायणोरुजा उर्वशी· अप्सरःप्रधानं यासां ता अप्सरसश्च तासां प्रधा प्रकृष्टधारणं यस्यां सा ॥ २८२ ॥

तस्मिन्नेव समये ।

सिंहासनं विविधरत्नशिलाविलासि
गोवर्धनः स्ववपुषोऽवयवेन चक्रे ।
पाशायुधः स्वयमुपेत्य मणीन्द्रमुक्ता-
विस्रावि तत्र विदधार सदातपत्रम् ॥ २८३ ॥

गोवर्धनस्य सर्वतः श्रेष्ठ्यात् सिंहासनस्यापि· इन्द्रत्वे मुख्यलिङ्गत्वात् प्रथमं तेनैव तदुपहृतमित्याह सिंहासनम् । सत् सुन्दरम् ॥ २८३ ॥

सच्चारुचामरविधूननधूनहस्ताः
अष्टावशेन परितो मरुतोऽपि तस्थुः ।
पूर्णः सुधांशुरपि मण्डलरूपयैव
तन्वा विवृत्य मणिदर्पणतामियाय ॥ २८४ ॥

विवृत्य विवृतीभूय ॥ २८४ ॥

देध्मीयते स्वयमथ स्म विधाय काय-
व्यूहं मुहुस्तत इतोऽप्यथ पाञ्चजन्यः ।
ज्योतिर्मयः परित एव रुचां चयेन
जाज्वल्यते स्वयमुपेत्य सुदर्शनः स्म ॥ २८५ ॥

देध्मीयते स्म· अतिशयेन ध्मनितवान् । जाज्वल्यते स्म, दीपादिरूपेणेत्यर्थः ॥ २८५ ॥

पद्मं विभोरपि विभुत्वमुपेत्य नाना
छत्राणि हंसविशदानि समन्ततोऽभूत् ।
कौमोदकी तु महसा महिताभिषेक-
यज्ञोत्सवस्य मणियूप इवावतस्थे ॥ २८६ ॥

विभोः पद्ममपीति संबन्धः ॥ २८६

सप्तार्णवाश्च सरितश्च नदाश्च पुण्याः
पुण्यानि यानि सलिलाशयमण्डलानि ।
स्वस्वाम्बुपूर्णमणिमङ्गलकुम्भहस्तै-
स्तैस्तैरभावि परिभावितदिव्यदेहैः ॥ २८७ ॥

परिभावितस्तिरस्कृतो दिव्योऽपि देहो यैस्तैः, यद्वा परि सर्वतो भावेनैव भावितः कृतो दिव्यो देहो यैस्तैरभावि तत्राभूयत ॥ २८७ ॥

॥ शेषमग्रे ॥

---

## ॥ विद्वद्वरलोकाभिधमहाशयविरचितमानवीयज्ञानविषयकशास्त्रावतारे ॥

### ॥ तृतीयाध्यायस्य ॥

### ॥ एकादशः परिच्छेदः ॥

१५ ॥ मिश्रभाववाचकेषु लक्षणाकरणेन ॥—मिश्रभावानां विशेषतो नीतिसंबन्धिनां च तेषां प्रायो मनसि स्वैरं संगृहीतसन्नित्यस्थिरप्रतिमानविधुराणां विज्ञानानां समुदायतया तद्वाचकनाम्नामर्थः शुद्धविज्ञानानीव न कथमपि शङ्कयाहितकृतया प्रदर्शयितुं शक्यते । परं तु तेषामवयवशः परीक्षया पूर्णयाथार्थ्येन ते भावा लक्षयितुं शक्यन्ते । यतस्तेषां कैश्चित्प्रतिमानैः सह संबन्धं विनैव स्वैरमात्मनासंगृहीतानामनेकविज्ञानानां समुदायतया मनुष्याः स्वविवक्षानुसारेण सर्वेषु समुदायेष्वनुगतानि कानि चिद्विज्ञानानि पृथगाकलयन्ति, ततश्च वक्तृश्रोतारावुभावपि क-

स्मिंश्चिन्त्यते ऽसंदिग्धे ऽर्थविशेषे शब्दान् प्रयुञ्जाते, सत्यवसरे पूर्णतया प्रतिपादयतश्च तेषां वाच्यमर्थम् । साधु विचार्यमाणे नीतिविषमकसंवादान् सुव्यक्तमकुर्वाणास्तु महत एतद्दोषस्य भाजनानि भवन्ति । यतो मिश्रभावनाम्नां वास्तविकार्थस्य सर्वत्रैकरूपस्य निखिलविशेषजातीनामार्थस्वरूपात्मकस्य ज्ञातव्यतया तासां च विशेषजातीनामनैसर्गिकत्वान्मनुष्यरचितत्वाच्च गूढत्वेनानियमेन च नीतिविषयकः संवादो ऽविरुद्धो ऽपार्थकश्च भवति । अयं च दोषो यत्रात्यन्तविरुद्धतर्कभिया कुत्रचिदेव संदिग्धार्थानि पदानि परित्यक्तव्यानि भवन्ति तादृशस्थले नैसर्गिकद्रव्यविषयके संवादे बहुशः चन्तव्यो भवतीति क्रमशः प्रदर्शयिष्यामः ॥

१६ ॥ नीतिविषया उपपत्तिप्रभृतिसाधनैः स्फुटयितुं शक्यन्ते ॥—प्रदर्शितेन हेतुना नीतिशास्त्रीयशब्दवाच्यवस्तूनां यथार्थार्थस्वरूपस्य पूर्णभावेन ज्ञातुं शक्यतया तथैव च पदार्थानां परस्परं साधर्म्यवैधर्म्ययोर्नियताबाधिताविष्कारस्य कर्तुं शक्यतया गणितविषया इव नीतिविषया अप्युपपत्तिभिः प्रदर्शयितुं शक्यन्त इति निःशङ्कं चिन्तयामि । गूढत्वजनकभाववाचकपदानीवद्रव्यनामान्यपि नीतिशास्त्रे भूयशः प्रयुज्यन्ते इति तत्रापि सानुपपत्तिस्तु न शङ्क्या । नीति कथागतानां द्रव्याणां तु कल्पितानां विसंकुलानां धर्माणां बहूनामनपेक्षणात् । तथा हि । मनुष्यो ऽस्ति विधिनिषेधानुष्ठानाधिकारीति यदा भिधीयते तदा शरीरी विवेकशाली जीव इत्येव केवलं विवक्ष्यते । प्रकृतस्थले तस्य प्राणिन आर्थं स्वरूपं किमस्ति के वा ऽन्ये धर्माः सन्तीत्यादितु न कथमपि विचार्यते । अतश्च भौतिकपदार्थपरीक्षानुसारेण किमप्यपत्यं भूतादिपरिवर्तितं वा मनुष्यो वा भवतु, भवतु वा नैसर्गिकपदार्थपरीक्षकेषु विवादग्रस्तमिदमथापि नेदं किमपि नीतिशास्त्रीयसंवादकारिणा मनुष्येण विचार्यते येन 'शरीरी विवेकी जीव' इति विज्ञानमविकार्यमपरिहार्यं चास्तीति तं प्रति कथयितुं शक्येत । यतो यदि कश्चन वानरो ऽन्यो वा जीवो यावत्या बुद्ध्या स साधारणलिङ्गानि बोद्धुं साधारणविज्ञानसंबद्धानि फलानि संपादयितुं च

समर्थो भवेत्तावत्या बुद्ध्या युतः स्यात्तर्हि सो ऽवश्यं प्राड्विवाककृतनिर्णयफलभाग् भवेद् । एवं सति कामं तस्य मनुष्यपदाभिधेभ्यो ऽपरेभ्यः प्राणिभ्यो भिन्नाकृतिमत्त्वेप्येवंविधार्थतात्पर्येण निःसंदेहं मनुष्यपदाभिलप्यो भवेदेव । द्रव्यनामानि यथोचितार्थेषु प्रयुक्तानि चेत्तानि गाणितिकसंवादान् यावद्विपर्यस्यन्ति न ततो ऽधिकं नीतिविषयकान् संवादान् विपर्यस्यन्ति । यत्र स्वासंबद्धे कस्मिंश्चिद्द्रव्यविशेषे भ्रमेण पदस्य प्रयोगे ऽपि नियतमेकरूपं सुस्पष्टमेव विज्ञानं सुवर्णस्य द्रव्यान्तरस्य वा घनगोलावधिकृत्य भाषमाणो गाणितिको ऽवधारयति ॥

१० ॥ नीतिसंवादा लक्षणैः कर्तुं शक्यन्ते ॥—मिश्रभावनामसु तत्फलभूतेषु सर्वेषु नीतिसंवादेषु च लक्षणकरणस्य नियतस्पष्टतरनीतिविषयज्ञानसंपादकतया ऽवसरविशेषेषु लक्षणकरणेन मनुष्याणां कोर्थः सिध्यतीति प्रदर्शनायात्रैतावता प्रबन्धेन क्रमशो वर्णितम् । लक्षणकरणस्य विवादलेशशून्यनियतार्थज्ञापकोपायतया नीतिशास्त्रीयशब्दानां यथार्थार्थस्य ज्ञापनाय समर्थत्वाच्च तदकरणं प्रज्ञालेशशून्यकृत्यमेव स्यात् । अतश्च यदि नीतिविषयकाः संवादा नैसर्गिकपदार्थप्रपञ्चनशास्त्रीयेभ्यस्तेभ्यः स्पष्टतरा न भवेयुस्तर्हि विज्ञानैर्यदनुसारिभिर्यत्संबद्धैश्च भवितव्यं तादृशानां बाह्यप्रतिमानानामभावात् तेषामेकतमस्यापि विरुद्धत्वे मिथ्यात्वे वा मनुष्याणामुपेक्षाः तुन्तुं शक्यन्ते । यानि न्यायपदप्रतिपाद्यप्रतिमानानि सन्ति यैश्च तथा प्रतिमानानि विरच्यन्ते येन येषां सर्वाः क्रिया यदनुरूपा भवन्ति तानि विज्ञानानि तेन नाम्ना बोधयितुं शक्यन्ते, एवं भूतानि विज्ञानानि स्वात्मसु सुखेन मनुष्यैर्विरचयितुं शक्यन्ते न पुनर्याज्ञवल्क्यं दृष्ट्वा तत्सदृशवस्तुमात्रे वस्तुतः सर्वभावेनानुगतं किमपि विज्ञानम् । मनुष्याणां स्वैरं विज्ञानरचनाकर्तृत्वेपि तत्सदृशस्य कस्याप्यभावात् । कुत्रचित्स्वात्मनि संगतानां विज्ञानानां समुदायमात्रमेव तैर्ज्ञातुमिष्यते कुत्रचिच्च सर्वत्र गूढेष्ववयवसंस्थानेषु तत्तद्धर्मविधुराणां वस्तूनां नानाविधेषु धर्मेषु स विज्ञानसमुदायस्तैरवश्यमन्वेष्टव्यो भवति ॥

१८ ॥ किं चैष एव च प्रकारः ॥–मिश्रभावानां विशेषतश्च नीतिशब्दानामत्यन्तावश्यकलक्षणकरणस्यान्यत्कारणमयमेवैकः प्रकारो येन भूयिष्ठानां तेषामर्थो नैयत्येन ज्ञापयितुं शक्यते इति किं चिदेव पूर्वं वर्णितम् । यतः प्रायशस्तद्वाच्यविज्ञानावयवानां कुत्रापि पृथक् सहावस्थितेरभावादपि त्वन्यैः सह समस्तत्वादपृथक्त्वाच्च मन एव केवलं तानि संगृह्णाति. संयोजयति चैकविज्ञानरूपेण । किं च वयं मनसा संकलितानां बहूनां शुद्धविज्ञानानां परिगणकैः शब्दैरेव परान् प्रति तद्वाचकपदप्रतिपाद्यानि ज्ञापयामः । इन्द्रियाणां साहाय्यस्य च प्रायशो दृश्यशुद्धविज्ञाननाम्नां केषां चिद्द्रव्यनाम्नामपि चार्थप्रकाशकत्वेन प्रकृतस्थले दृश्यविषयाणां पुरः प्रदर्शनरूपोपायेन एवंविधशब्दवाच्यविज्ञानानां प्रकाशकत्वे ऽकिंचित्करत्वात्,

१९ ॥ (३) द्रव्येषु प्रदर्शनेन लक्षणकरणेन च ॥–द्रव्यनाम्नामस्मदवधृततत्तद्विशेषजातिविज्ञानवाचकतया तेषामर्थविवरणाय पूर्वोक्तं प्रदर्शनं लक्षणकरणं चेति द्वयमपि बहुषु स्थलेषु व्यवहार्यत्वायावश्यकमस्ति । येषु तद्विशेषजातेर्मिश्रविज्ञानरचकान्यपराणि विज्ञानानि योजितानीति कल्पयाम एवंभूतानां केषां चिन्मुख्यधर्माणां प्रायः सर्वासु जातिषु सत्त्वेन यत्र तस्या विशेषजातेः प्रधानतमविज्ञानत्वेन परिगृहीतं मुख्यं लिङ्गमुपलभ्यते तत्र सविश्रम्भं विशेषनाम प्रयुञ्ज्मः । इमानि मुख्यानि परिचायकानि विज्ञानानि प्राणिजातिषु महीरुहजातिषु च पञ्चमपरिच्छेदस्यैकोनत्रिंशत्तमखण्डे नवमपरिच्छेदस्य पञ्चदशे खण्डे चोक्तेन प्रकारेण प्रायश आकृतिरेव, अचेतनेषु च वर्णः केषु चिच्चोभयमपि । एवं सति ॥

२० ॥ द्रव्यगतानां मुख्यधर्माणां विज्ञानानि प्रदर्शनेन साधु परिगृह्यन्ते ॥–इमे प्रत्यक्षग्राह्या मुख्या धर्मास्ते सन्ति ये ऽस्माकं विशेषविज्ञानानां मुख्यानवयवान् रचयन्ति, तत एव चास्मज्ज्ञानगोचरद्रव्यजातिघटका विशेषपदानां लक्षणेषु विचारणीयतमा अपरिवर्तनीयाश्च भागा भवन्ति । यतो यद्यपि मनुष्य इति पदं समुदायान्तरबोधने इवैकाधि-

करणकविवेकप्राणोभयघटितमिश्रविज्ञानबोधने समर्थं तथापि लोके ऽस्मत्सजातीयकजीवजातिबोधकलिङ्गतया प्रयुज्यते। मन्ये मनुष्यपदबोध्यमिश्रविज्ञाने तत्रोपलभ्यमानान्यधर्मइव बाह्याकारोप्यावश्यकत्वेन परिगृह्यते। अत एव च “पक्षलोमहीनोद्विपात् प्राणीति” प्लेटो महाशयकृतमनुष्यलक्षणं तां प्राणिजातिं बोधयदपि साधुलक्षणं कुतो न भवितुमर्हतीति नानायासेन प्रदर्शयितुं शक्यते। यत आकार एव मुख्यो धर्मो य आपाततो ऽप्रतीयमानां कुत्र चिच्च सर्वथा ऽप्रतीयमानां तर्कशक्तिमपेक्ष्याधिकं तस्या जातेर्नियामकः प्रतीयते। किं च यद्येवं न स्वीक्रियेत तर्हि न जाने कस्य हेतोस्तेषां मनुष्यहत्यापराधः क्षम्यते, ये क्रूराकृतिमत्सु यः सद्योजाते विरूपाकृतिमति सुरूपाकृतिमति वा बालके ऽविशेषेणैव ज्ञातुं शक्यते स तर्कशक्तिमान् जीवो ऽस्ति न वेति निर्णयमकृत्वैव तान् घ्नन्ति। किं च तर्कशक्तिमान् जीवो बाह्याकारसारूप्यरहिते शरीरे वस्तुं न शक्नोति, न वा बाह्याकारेणात्यन्तसरूपं विहायान्येन पिण्डेन सहात्मानं योजयितुं शक्नोतीति को नामास्मान् कथयति स्म॥

---

THE

# NYÁYADARS'ANA.

WITH THE COMMENTARY BY VÁTSYÁYANA.

*Continued from page* 320.

The abode of soul wherein it experiences pleasure and pain is given in the next aphorism.

11. APHORISM.

The Body [S'arira], is the site of the muscular actions [cheshṭá], of the organs of sense, and of pleasure and pain.

---

न्यायदर्शनवात्स्यायनभाष्यम्।

भा॰ तस्यभोगाधिष्टानम्।

सू॰ चेष्टेन्द्रियार्थाश्रयः शरीरम्॥ ११॥

COMMENTARY.

How is this that it is the site of the muscular actions?

The activity of a man who is actuated by the desire either to obtain or to shun an object, with regard to the object he wishes to obtain or to shun, is the said muscular action; and the place wherein the activity, being characterised by the prosecution of the plan of what is intended to be done, takes place, is the body. How is this that it is the site of the organs of sense? Because the abode wherein the organs of sense, being pleased or hurt by the benefit or mischief done to the body itself, receive their objects either good or bad is what we mean by the site of the senses. How is it the site of pleasure and pain? because the abode in which pleasure and pain take their rise being produced from the contact of the senses with their objects, is what we mean by the site of pleasure and pain, and that is the body itself.

Now the author enumerates the instruments of experience.

12. APHORISM.

[The instruments of experience] are the organs of sense which [originating] from the elements, are smell, taste, sight, touch and hearing.

---

भा० कथं चेष्टाश्रयः । ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा सा यत्र वर्त्तते तच्छरीरम् । कथमिन्द्रियाश्रयः । यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्त्तन्ते स एषामाश्रयस्तच्छरीरम्, कथमर्थाश्रयः यस्मिन्नायतने इन्द्रियार्थसन्निकर्षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयस्तच्छरीरमिति । भोगसाधनानि पुनः ॥—

सू० घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥

भा० जिघ्रत्यनेनेति घ्राणं गन्धं गृह्णातीति, रसयत्यनेनेति रसनं रसं गृह्णातीति । चष्टेऽनेनेति चक्षुः रूपं पश्यतीति, स्पृशत्यनेनेति स्पर्श-

### COMMENTARY.

Smell [Ghráṇa] is that sense by which one perceives the odour of things, that is to say, this organ takes in the odour. Taste [Rasana] is that sense by which one ascertains the flavor of bodies; in other words it takes in the flavor. Sight [Chakshus] is that by which one sees, or the organ of seeing colours. Touch [Tvak] is the organ having the skin as its site; but by implication, it is called Tvak [skin] from the name of its site. Hearing is that organ whereby one hears, or in other words, it catches sounds. Such explanations of the senses, that is to say, that they are characterised by their different abilities to receive their proper objects, are to be derived from the literal sense of the names assigned to the organs of sense. The phrase 'from the elements' [Bhútebhyas] has been added in order to show that the organs of sense whose objects are limited, originate from different origins and not from the same source. And the definitions of the organs of sense by their capacities to receive their proper objects, are possible in case there be the limitation of the objects. What are the causes of the organs of sense?

### 13. APHORISM.

[They are] the elements, namely the earth, water, light, air and ether.

---

नम् * त्वक्स्थानमिन्द्रियं त्वक् तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति । एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यम् स्वविषयग्रहणलक्षणानीन्द्रियाणीति । भूतेभ्य इति नानाप्रकृतीनामेषां सतां विषयनियमो नैकप्रकृतीनां सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति । कानि पुनरिन्द्रियकारणानि ॥–

सू॰ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥

---

* The underlined phrase seems to be interpolated in the edition of the Bibliotheca Indica; for it gives the etymoligical sense of the word स्पर्शनम् which is not given in the aphorism, and it is natural to think that the commentator Vátsyáyana would not have commented a word which is not given in the text. I am further authorised, in this remark, by an old Ms. that omits the said phrase.

### COMMENTARY.

The separate enunciation of the elements by their designatory words has been made with a view that the effects of them would be easily stated they [elements] having been divided.

### 14. APHORISM.

Odour, savour, colour, tangibility and sound are the qualities of the earth &c. and are the objects of them [the senses].

### COMMENTARY.

Odour &c. are the qualities of the earth &c. just in accordance with possibility, and are the objects of senses according to the order.

'Knowledge of Intellection [Buddhi], which (buddhi) is an unintelligent internal organ, is the modification [Vṛitti] of itself (buddhi), whereas the knowledge of the soul which is inactive and intelligent is consciousness.' *—to contravene this tenet, as an unreasonable doctrine, the author states the following :—

### 15. APHORISM.

Intellection (buddhi), consciousness and knowledge all mean the same thing.

* Here the commentator states, the Sáṅkhya-dogma and refutes it by the following aphorism.

भा० संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं[1] कार्य्यम्भविष्यतीति । इमे तु खलु ॥—

सू० गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥

भा० पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति । अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः चेतनस्याकर्त्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाण इवेदमाह ॥—

सू० बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥

1. V. L. सुवचनम्.

COMMENTARY.

Intellection, in case it were an unintelligent organ, could not be said to possess knowledge; for, in that case it should be intelligent. [In truth] there is only one Intelligent principle quite different from the combination consisting of body and senses. Although this aphorism is intended to describe one of the objects [Prameyas] yet the exposition of the other fact, [viz. the contravening of the Sáńkhya-doctrine] by the same aphorism is owing to the force of the argument implied by that description. Although memory, inference, words or testimony, doubt, imagination, sleep, cognition, conjecture, feeling of pleasure &c. desire and so forth are so many marks of the existence of the internal organ, [Manas] yet there is one more given as follows :—

16. APHORISM.

Impossibility of ideas more than one arising simultaneously in the same subject is the mark of the internal organ [Manas].

COMMENTARY.

Memory and so forth, which are not caused by any organ of sense, ought to have some other organ as the cause of their production. Nor do the different sensations or perceptions arise

भा॰ नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति तद्धि चेतनं स्यात् एकश्चायं चेतनो देहेन्द्रियसङ्घातव्यतिरिक्त इति । प्रमेयलक्षणार्थस्याऽपि वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति । स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि तेषु सत्स्वयमपि ॥—

सू॰ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

भा॰ अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ताभवितुमर्हन्तीति युगपच्च खलु घ्राणादीनां गन्धादीनाञ्च सन्निकर्षेषु सत्सु युगपद्ध्नानानि[1] नोत्पद्यन्ते तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहका-

1. V. L. युगपज्ज्ञानानि.

simultaneously on the simultaneous contacts of the senses, the smell &c. with their objects, odour &c. Hence it is concluded that there is some auxiliary cause unpervading, yet putting itself in connection with each of the senses severally; and that no cognition takes place during its absence from the senses; but it takes place while it is pre-connected with them. If the contact of the senses with their objects, were the cause of cognitions, independently of the connection with the internal organ, there could simultaneously arise a multitude of sensations or perceptions. Now the author states what presents itself next in order.

17. APHORISM.

Activity is the effort done either with tongue, or with the internal organ or with body.

COMMENTARY.

Here, in the text, by the word Buddhi [usually intellection] is meant the internal organ [Manas], taking the word buddhi in its etymological sense, viz. that by means of which one takes cognisance of objects. The activity, as defined in the text, either religious or irreligious and originated either from body or from tongue or from mental sensory, is ten-fold which has already been commented in the second aphorism.

18. APHORISM.

Vices have the characteristic that they cause activity.

---

रिनिमित्तान्तरमव्यापि तस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यतइति मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति । क्रमप्राप्ता तु ॥—

सू० प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

भा० मनोऽत्र बुद्धिरित्यभिप्रेतम्, बुध्यतेऽनेनेति बुद्धिः, सोयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः, तदेतत् कृतभाष्यं द्वितीयसूत्रइति ॥

सू० प्रवर्तनालक्षणादोषाः ॥ १८ ॥

Commentary.

The text-word 'Pravartaná', signifies the capability of causing activity; for, attachment and so forth [which are all vices] lead the percipient to merit or demerit. Where there is false notion there prevails [in the same subject] attachment, hatred and so on. Why are, therefore, these vices, which are known to every mind by self-conciousness, described by their characteristics? Because, those persons who are affected by love, hatred or delusion are found to be characterised by their works; for he who is possessed by love, does such a work whereby he feels pleasure or pain; the same case is with those who are possessed by hatred or delusion. It would be much to say that attachment, hatred and delusion are vices.

19. Aphorism.

Transmigration [Pretyabháva] means reproduction.

Commentary.

Transmigration [Pretyabháva] is defined as the reproduction, after having been dead, of that which had been born somewhere in an animal body. 'The born' signifies the connected. The

भा० प्रवर्त्तना प्रवृत्तिहेतुत्वम् ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे वा । यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति । प्रत्यात्मवेदनीया हीमेदोषाः कस्मात् लक्षणतो निर्द्दिश्यन्त इति । कर्म्मलक्षणाः खलु रक्तद्विष्टमूढाः रक्तो हि तत्कर्म्म कुरुते येन कर्म्मणा सुखं दुःखं वा भजते, तथा द्विष्टस्तथा मूढ इति दोषा रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं[1] भवतीति ॥ १८ ॥

सू० पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

भा० उत्पन्नस्य क्वचित्सत्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः[2] । उत्पन्नस्य संबद्धस्य संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः, पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः । पुनरित्यभ्यासाभिधानं । यत्र

1. V. L. बहुलोक्तम्.

2. V. L. सा प्रेत्यभावः ।

soul is said to be connected with body, senses, internal organ, intellection and feeling of pleasure and pain. By reproduction we mean the reunion with body and so forth. The prefix 'Re' in the word 'reproduction' is intended to signify repetition of the case. When some one, existing in some or other animate body, gives up that body etc. previously acquired by himself, he is said to die; where as when some one existing somewhere receives a new body and so forth, he is said to be born. It may be noticed that Transmigration or one's being born over again after having been dead, consists of the repetition of a series of births and deaths, which has no beginning but has an end in beatitude.

20. APHORISM.

Fruit [Phala] is that thing which is produced by activity and vices.

COMMENTARY.

Fruit [Phala] is the experience of pleasure and pain. Activity results either in pleasure or in pain. Inasmuch as the experience of pleasure and pain is possible only in the presence of a body, organs of sense, objects, and intellection, fruit is meant in connection with the body, organs &c.; so that all these, body and so forth, taken together, are considered as the fruit produced by activity and vices. Such a fruit, when received has a tendency

---

क्वचित् प्राणभृन्निकाये वर्त्तमानः पूर्व्वोपात्तान् देहादीन् जहाति तत् प्रैति ॥ यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति ॥ प्रेत्यभावो मृत्वा पुनर्ज्जन्म। सोयं जन्ममरणप्रबन्धाभ्यासो ऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥

सू॰ प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

भा॰ सुखदुःखसंवेदनं फलम्। सुखविपाकं कर्म्म दुःखविपाकं च। तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सहदेहादिभिः फलमभिप्रेतम्। तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्व्वम्भवति। तदेतत् फलमुपात्तमुपात्तं[1] हेयं त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा

---

1. उपात्तमुपात्तम् instead of उपात्तम्. B. I.

to be lost, and when lost, a tendency to be received again. Nor is there any end of the perpetual succession of the loss and reception of the fruit. Indeed the whole universe is carried on by the current of losing and receiving the fruit. The same fruit is considered as pain as follows.

### 21. APHORISM.

Pain is that which is characterised by suffering.

### COMMENTARY.

'Suffering' signifies affliction or distress. The fruit or the experience of pleasure and pain in connection with body and so forth, being pierced by, or closely connected with, or inseparably united with pain, is said to be pain itself. A person seeing everything pierced by pain, wishing to get rid of it yet finding his life painful, gets disgusted with the worldly concerns, and being thus disgusted with the world, he becomes void of attachment to all objects, and being thus void of attachment gains emancipation. When his pain ceases to exist there results beatitude as explained in the next Sútra.

---

पर्यवसानं वाऽस्ति स[1] खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति । अथैतदेव ॥

सू॰ बाधनालक्षणं दुःखमिति ॥ २१ ॥

भा॰ बाधना पीडा ताप इति । तयानुविद्धमनुषक्तमविनिर्भागेन वर्त्तमानं दुःखयोगाद्दुःखमिति सोयं सर्व्वं दुःखेनानुविद्धम्[2] इति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते निर्विण्णो विरज्यते विरक्तो विमुच्यते यत्र तु निष्ठा यत्र तु पर्य्यवसानं सोऽयम्[3] ।

---

1. स instead of न B. I.

2. After the word अनुविद्धम् I omit बृहत्तम् which is an interpolation in the edition of Bibliothera Indica.

3. I read यत्र तु पर्यवसानं सोयम् instead of सोयं यत्र तु पर्यवसान् B. I.

22. APHORISM.

The absolute deliverance from that is beatitude.

COMMENTARY.

From that i. e. from pain or life, the entire deliverance is beatitude. How? Because the knowers of beatitude understand by the word beatitude lasting giving up of the present life, as well as the non-acceptance of the life to come. It is Brahma or the attainment of consummate bliss, which is fearless, undecaying and exempt from death. It is alleged that, beatitude is the eternal bliss, which, though beyond cognisance like the largeness of the soul, becomes. cognizable at the time of the absolute deliverance from pain; and when the bliss is cognized, one finally emancipated from pain, becomes happy. But this opinion, being supported by no grounds is untenable; for there is no evidence afforded either by perception or by inference, or by testimony, supporting the opinion that the eternal bliss, though imperceptible like the largeness of the soul, becomes cognized at the time of the absolute deliverance from pain. The cause of the cognition of the eternal bliss should be stated; in other words, that cause should be stated from which the consciousness of the eternal bliss proceeds. If you should say that the consciousness

सू॰ तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

भा॰ तेन दुःखेन जन्मनात्यन्तं विमुक्तिरपवर्गः । कथम् ॥ उपात्तस्य जन्मनो हानमन्यस्य चानुपादानम् एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति। नित्यं सुखमात्मनो महत्ववन्मोक्षे व्यज्यते तेनाभिव्यक्तेनात्यंतं विमुक्तः सुखी भवतीति के चिन्मन्यन्ते तेषां प्रमाणाभावादनुपपत्तिः । न प्रत्यक्षं नानुमानं नागमो वा विद्यते नित्यं सुखमात्मनो महत्ववन्मोक्षेऽभिव्यज्यत इति। 'नित्यस्याभिव्यक्तिः संवेदनं तस्य हेतुवचनम्'[1] । नित्यस्याभिव्यक्तिः संवेदनं ज्ञानमिति तस्य हेतुर्वाच्यो यतस्तदुपपद्यत इति । सुखवन्नित्य-

1. The passage between two commas is improperly omitted in the edition B. I.

of the bliss is equally eternal as the bliss itself; we could not agree with you. Because in that case there would be no difference between a man of the world and one emancipated from its concerns; for as the emancipated man is endowed with the eternal consciousness of the bliss as well as with the bliss itself, just so would have to be a man of the world; both, the bliss and the consciousness of it being, according to you, eternal. If your opinion be granted, the eternal bliss and the fruit of the merit or demerit would be felt simultaneously, in other words, that pleasure or pain, which we experience, by turns, in the places of its production, as the fruit of merit or demerit, would have to be felt, together with the eternal consciousness of the bliss. You cannot allege the accidental non-existence either of the bliss, or of the consciousness of it; they both being eternal. If you should say that they are not eternal, we should ask you the reason why it is so. You would state that the consciousness of the eternal bliss, which is developed at the time of the absolute emancipation [Moksha] is non-eternal; and that the cause from which the consciousness of the eternal bliss proceeds, consists of the contact of the soul with the internal organ accompanied by some other subordinate causes. But we say that though the contact of

---

मिति चेत् संसारस्थस्य मुक्तेऽनाविशेषः । यथा मुक्तः सुखेन तत्संवेदनेन च संनित्येनोपपन्नस्तथा संसारस्थोऽपि प्रसज्यतइति । उभयस्य नित्यत्वात् । अभ्यनुज्ञाने च धर्म्माधर्म्मफलेन साहचर्यं यौगपद्यं गृह्येत । यदिदमुत्पत्तिस्थानेषु धर्म्माधर्म्मफलं सुखं दुःखं वा सं वेद्यते पर्य्यायेण तस्य च नित्यसुखसंवेदनस्य[1] च सहभावो यौगपद्यं गृह्येत । न सुखाभावो नाऽनभिव्यक्तिरस्ति उभयस्य नित्यत्वात् । अनित्यत्वे हेतुवचनम् ।

अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यं यत उत्पद्यते स हेतुर्वाच्यः । आत्ममनः संयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् । आत्ममनः संयोगो हेतुरिति चेदेवमपि तस्य सहकारि निमित्तान्तरं

---

1. नित्यसुखसंवेदनस्य instead of नित्यं स्वसंवेदनस्य B. I.

the soul with the internal organ is given as the cause of the consciousness, yet the subordinate cause of it remains to be mentioned. If you assert it to be merit, we should ask you the cause even of that, wherefrom that [merit] proceeds. For the merit proceeding from religious meditation, being destructive of the notion of any object, stops consciousness or sensation whatsoever; and perishes itself. To explain, if you suppose the merit proceeding from religious meditation to be the subordinate cause of the consciousness of the eternal bliss, this will not do; because the merit being, in the mediator, distructive of the notion of any object removes sensation altogether while vanishing itself; and when there is no sensation of any object, it makes no difference whether the object of sensation is existing or not existing. In short, if the distruction of the merit is followed by the cessation of any sensation, then even the eternal bliss should not be felt. Nor is there any particular inference determining either of the cases, *viz.* whether the eternal bliss, which is not felt, does exist or does not exist. Nor can the indestructibility of the merit be inferred from its having the quality of being produced. We cannot

वचनीयमिति धर्मस्य कारणवचनम् । यदि धर्मो निमित्तान्तरं तस्य हेतुर्वाच्यो यत उत्पद्यतइति । योगसमाधिजस्य कार्यावसायविरोधात् प्रक्षये[1] संवेदनानिवृत्तिः । यदि योगसमाधिजो धर्मो हेतुस्तस्य कार्यावसायविरोधात् प्रक्षये संवेदनमत्यन्तं निवर्तयति । असंवेदने चाऽविद्यमानाविशेषः । यदि धर्मक्षयात् संवेदनोपरमो नित्यं सुखं न संवेद्यतइति । किं विद्यमानं न संवेद्यते अथाविद्यमानमिति । नानुमानं विशिष्टेस्तीति । अप्रक्षयश्च धर्मस्य निरनुमान उत्पत्तिधर्मकत्वात् । योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानमुत्पत्तिधर्मकमनित्यमिति विपर्ययस्य त्वनुमानम् । यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतु[2]र्नित्य इत्यनुमेयम् । नित्ये च मुक्तसंसारस्थयोरविशेषइत्युक्तम् । यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च । संवेदनस्य तू-

1. प्रक्षये instead of प्रलये B. I.

2. संवेदनहेतुः instead of संवेदनेन हेतुः B. I.

infer that the merit proceeding from religious meditation does not perish; nay, we can infer the contradictory of this, as a thing having the quality of being produced is not everlasting. However, one, whose sensation of the bliss does not stop at all, might infer the eternity of the cause of the sensation [i. e. the merit]. Grant the eternity of it [the merit], and there would be no difference between a man of the world and one emancipated from it, which has already been explained, For as the emancipated has, according to you, the eternal bliss and the eternal cause of its sensation, which sensation never ceases to exist on account of the eternity of its cause [the merit], just so would be the case with the man of the world; so that the sensation of the eternal bliss and that of pleasure or pain, which is the fruit of merit or demerit, would be felt simultaneously. If you say that the connection with the body and so forth prevents the sensation; we answer such is not the case; for the use of the body and so forth is nothing but the production of the experience or sensation. Nor can any inference show its contradictory. There could be an opinion that the connection with the body and so forth prevents the sensation of the eternal bliss in the man remaining in the worldly state and that, so there is no absence of

परमोनास्ति कारणस्य नित्यत्वात् । तथा संसारस्थस्यापीति । एवं च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति । शरीरादिसंबन्धः प्रतिबन्धहेतुरिति चेन्न । शरीरादीनामुपभोगार्थत्वात् । विपर्ययस्य चाननुमानात् । स्यान्मतं संसारावस्थस्य[1] शरीरादिसंबन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकस्तेनाविशेषो नास्तीति । एतच्चायुक्तम् । शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम् । न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति ।

इष्टाधिगमार्था प्रवृत्तिरिति चेन्न । अनिष्टोपरमार्थत्वात् । [इदमनुमानम्[2]] । इष्टाधिगमार्थो मोक्षोपदेशः 'प्रवृत्तिश्च मुमुक्षूणां नोभयमन-

1. संसारावस्थस्य instead of संसारावस्थशरीरादिः B. I.

2. It is omitted in B. I.

difference [between the emancipated and the man of the worldly concerns]. But we reject this opinion as being improper; for it is not reasonable to say that body and so on, which are only for the use of producing enjoyment and suffering form an empediment to them. Nor can there be any inference proving the sensitivity of the soul without body.

If you say, 'effort is made for some wished—for object,' we say, no: [such is not the general case]; the use of an effort being the removal of evils. Here some people might reason thus: instructions about the absolute emancipation and one's effort for it are for the sake of gaining some wished-for object: because both of them cannot be useless. We reject this argument as unreasonable; because the instructions about the absolute emancipation are given for the removal of evils; and the effort also of one striving after emancipation is made to the same purpose. For it is impossible for one to have one's desired object unconnected with evils through which even the wished-for object becomes evil; and consequently one trying to get rid of evils cannot but lose the wished-for objects; it being impossible to lose one without losing the other. If you say that one trying for emancipation gives up the ordinary bliss and longs for the eternal one which is not connected with evils, I say the same is the case with the

र्थकमिति । एतच्चायुक्तम् । अनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति'[1] । नेष्टमनिष्टेनाननुविद्धं संभवतीतीष्टमप्यनिष्टं संपद्यते । अनिष्टहानाय घटमान इष्टमपि जहाति विवेकहानस्याशक्यत्वादिति ॥ दृष्टातिक्रमश्च देहादिषु तुल्यः । यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते एवं देहेन्द्रियबुद्धीरनित्या[2] दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः । साधीयश्चैवं मुक्तस्य कैवल्यं[3] कल्पितं भवतीति । उपपत्तिविरुद्धमिति चेत्समानम् । देहादीनां नित्यत्वं प्रमा-

1. This also is omitted in B. I.
2. बुद्धीरनित्या instead of बुद्धिरनित्या B. I.
3. कैवल्यम् instead of चैकात्म्यम् B. I.

ordinary body and so forth; since, as you say that the man striving after emancipation gives up the transitory worldly happiness and gains the eternal bliss, so you must imagine that he, in like manner, quits the transitory body, organs of sense, and intellect, and receives the eternal ones instead of them. If so, you have established the doctrine of the absolute emancipation admirably indeed! If you assert that what I say is unreasonable, I would retort the same charge to you; for as the eternity of the body and so forth is contrary to reason and so cannot be imagined as possible, just so the eternity of the bliss is contrary to reason and cannot therefore be thought as possible.

As the word bliss is also used in the sense of the entire annihilation of the worldly pains, there is no fear of repugnance though some authority be found against us, that is to say, if there be some Vedic authority stating that the emancipated enjoy the greatest happiness, it must be understood that the word 'the greatest happiness' has been used there in the sense of the entire annihilation of pain, so there is no repugnance. Moreover in the ordinary usage, the word bliss or happiness is copiously used in the sense of the privation of pain. Attainment of the absolute emancipation is quite impossible in case the attachment towards the eternal bliss is not removed; for the attachment of any degree is known as a bondage. If a man knowing that the eternal bliss

णविरुद्धं कल्पयितुमशक्यमिति समानं सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति । आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेपि सत्यविरोधः । यद्यपि कश्चिदागमः स्यान्मुक्तस्यात्यन्तिकं सुखमिति, सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते । दृष्टोहि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोकइति । नित्यसुखरागस्यापहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात् । यद्ययं मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेन्नाधिगन्तुमर्हतीति । बन्धनसमाज्ञातो हि रागः । न च बन्धने

1. V. L. समाज्ञानो–

is developed in the state of the emancipation, strives after it with the desire of the eternal bliss, he certainly will not attain to it; nor does he deserve it, his desire being a kind of bondage. It is not possible for any one to be emancipated in spite of the bond. When the desire of the eternal bliss is removed it offers no obstruction, or in other words, when the attachment to the eternal bliss is entirely extinguished it makes no hindrance in gaining the emancipation. If it is so, it is settled then that one's possession of the emancipation and one's non-possession of it do not suppose in one, the existence of the eternal bliss, and in the other, the non-existence of it.

As this is the proper place for giving the definition of doubt, it is given in the next Aphorism.

23. APHORISM.

Doubt is the wavering judgment accompanied by a desire of knowing the proper attribute of its object and arising either from the knowledge of its object's common quality; or from the knowledge of its abject's special quality which can distinguish a given object from various objects; or from contradiction; or from the indecision of perception; or from the indecision of non-perception.

---

सत्यपि कश्चिन्मुक्तइत्युपपद्यत इति। प्रहाणे[1] नित्यसुखरागस्याप्रतिकूलत्वम्। अथास्य नित्यसुखरागः प्रहीयते तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति। यद्येवं मुक्तस्य नित्यं सुखं भवति अथापि न भवति नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्प्यत इति॥

भा॰ स्थानवत एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते।

सू॰ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः॥ २३॥

भा॰ समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशयइति। स्थाणुपुरुषयोः समानधर्ममारोहपरिणाहौ पश्यन् पूर्वं दृष्टं च तयोर्विशेषं बुभु-

---

1. V. L. प्रहीण–

COMMENTARY.

The first kind of doubt or the wavering judgment accompanied by a desire of knowing the proper attribute of its object and arising from the knowledge of its object's common quality is seen in a man, who, observing an object of such and such height, and of such and such breadth, which are the qualities common to a man and a branchless trunk of a tree, and wishing to know their difference which he once knew, finds nothing to determine between the two objects, that is, man and branchless trunk. Such uncertainty of knowledge is doubt. The consciousness of the man that he preceives only their common qualities and not their distinguishing attributes, which he desires to know, gives rise to doubt, which, for this reason is said to be accompanied by a desire of knowing the propor attribute of its object.

In the definition of the second kind of doubt or the wavering judgment arising from the knowledge of its object's special quality which can distinguish a given object from various other objects, the phrase 'various objects' indicates homogeneous and heterogeneous objects; and from them a given object can be

---

त्समानः किं स्विदित्यन्यतरन्नावधारयति तदनवधारणं ज्ञानं संशयः। समानमनयोर्धर्म्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते[1] तेन विशेषापेक्षो विमर्शः संशयः। अनेकधर्मोपपत्तेरिति समानजातीयमसमानजातीयञ्चानेकम् तस्यानेकस्य धर्मोपपत्तेर्विशेषस्योभयथादृष्टत्वात्· समानजातीयेभ्यो ऽसमानजातीयेभ्यश्चार्थो विशिष्यन्ते। गन्धवत्वात् पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च· अस्ति च शब्दे विभागजत्वं विशेषः तस्मिन् द्रव्यं गुणः कर्म्म वेति सन्देहः विशेषस्योभयथादृष्टत्वात् किं द्रव्यस्य सतो गुणकर्म्मभ्योविशेष आहोस्विद्गुणस्य सत इति अथ कर्म्मणः सत इति विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्म्मन्नोपलभे इति बुद्धिरिति। विप्रतिपत्तेरिति, व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। व्याघातो विरोधोऽसहभाव इति। अस्त्या-

---

1. V. L. विद्यते।

distinguished by its special quality; for, special qualities are seen to distinguish their objects in both ways, that is, from homogeneous as well as from heterogeneous species. As for instance the earth, by means of its special quality of smell, may be distinguished from the qualities (Guṇa) and actions (Karma) which are its heterogeneous species, and from water and as forth, which are its homogeneous species.

Of the second kind of doubt an example is furnished by the case of sound that has the special quality of being produced from the disjunction of any two things. From this quality one may doubt whether sound is a substance or a quality, or an action. For, as the special qualities are seen to distinguish their objects in both ways, as in the case of the earth, it is natural to doubt, whether the said quality of smell distinguishes sound as a substance from the qualities and actions, or as a quality from the substances and actions, or lastly, as an action from the substances and qualities. In this case doubt is accompanied by the desire of knowing the proper attribute of sound which should determine it to be either of these three categories.

KESAVA ŚASTRI.

*To be continued.*

---

त्मेत्येकं दर्शनं नास्त्यात्मेत्यपरम् न च सद्भावासद्भावौ सहैकत्र सम्भवतः न चान्यतरसाधको हेतुरुपलभ्यते तत्र तत्वानवधारणं संशय इति । उपलब्ध्यव्यवस्थातः । खल्वपि सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु वा[1] ऽविद्यमानमुदकमिति ततः क्वचिदुपलभ्यमाने तत्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते अथासदिति संशयो भवति । अनुपलब्ध्यव्यवस्थातः । सच्च नोपलभ्यते मूलकीलकोदकादि । असच्चानुत्पन्नं निरुद्धं वा, ततः क्वचिदनुपलभ्यमाने संशयः किं सन्नोपलभ्यते उतासदिति संशयो भवति । विशेषापेक्षा पूर्ववत्· पूर्वः[2] समानो ऽनेकश्च धर्म्मोज्ञेयस्थः । उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे एतावता विशेषेण पुनर्वचनम् समानधर्म्माधिगमात् समानधर्म्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति स्यानवतां लक्षणवचनमिति समानम् ॥

---

1. V. L. चा·   2. V. L. पूर्वे ।

# SARVA-DARS'ANA-SANGRAHA.

## CHAPTER XI.

### THE AKSHAPÁDA (OR NYÁYA) DARŚANA.

*(Continued from page 192).*

"If you bring forward as an antagonistic syllogism, The mountains, &c., cannot have had a maker, from the fact that they were not produced by a body, just as is the case with the eternal ether,"—this pretended inference will no more stand examination, than the young fawn can stand the attack of the full-grown lion, since the additional words 'by a body' are useless, since 'from the fact that they were not produced' would be a sufficient middle term by itself, [and the argument thus involves the fallacy called *vyápyatvásiddhi.* * ]. Nor can you retort, "well, let this then

* This and much of the whole discussion is taken from the Kusumánjali. v. 2, and I extract my note on the passage there. "The older Naiyáyikas maintained that the argument "the mountain has fire because it has blue smoke" involved the fallacy of vyápyatvásiddhi, because the alleged middle term was unnecessarily restricted. See Siddhánta Muktáv. p. 77. The moderns however more wisely consider it as a harmless error, and they would rather meet the objection by asserting that there is no proof to establish the validity of the assumed middle term."

॥ सर्वदर्शनसङ्ग्रहः ॥



ननु नगादिकमकर्तृकं शरीराजन्यत्वात् गगनवदिति चेन्नैतत् परीक्षाक्षममीक्ष्यते नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैयर्थ्यात् । तर्ह्यजन्यत्वमेव साधनमिति चेन्नासिद्धेः नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः सम्भवी अनुकूलतर्कसम्भवात् यद्ययमकर्तृकः स्यात् कार्यमपि न स्यादिह जगति नास्त्येव तत्कार्यं नाम यत्कारकचक्रमवधीर्यात्मानमवसादयेदित्येतदविवादम् । तच्च सर्वं कर्तृविशेषोपहितमर्यादं कर्तृत्वं चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम् । एवञ्च कर्तृव्यावृत्तेस्तदुपहि-

be our middle term,"—for you cannot establish it as a real fact. Nor again is it possible to raise the smallest shadow of a fear lest our middle term should be liable to limitation by any suggested condition, (*upádhi*) [such as 'from being produced by a body' instead of 'from having the nature of effects,'] because we have on our side a valid line of argument to establish our premises, viz. "if the mountains, &c. had no maker, then they would not be effects," [but all do acknowledge that they have the nature of effects,]—for in this world that is not an effect which can attain its proper nature independently of any series of concurrent causes. And this series inevitably involves the idea of some sort of maker; and I mean by 'being a maker' the being possessed of that combination of volition, desire to act, and knowledge of the proper means, which sets in motion all other causes but is itself set in motion by none." And hence we hold that if the necessity of a maker were overthrown, the possibility of the action of all other causes, would be simultaneously overthrown, since these are dependent thereon; and this would lead to the monstrous doctrine that effects could be produced without any cause at all. There is a rule laid down by Śankara-kinkara, which applies directly to the present case:

---

तसमस्तकारकव्यावृत्तावकारणककार्योत्पादप्रसङ्ग इति स्थूलः प्रमादः तथा निरटङ्कि शङ्करकिङ्करेण ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भव इति

यदीश्वरः कर्ता स्यात् तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्तीति चेदीश्वरासिद्धसिद्धिभ्यां व्याघातात् तदुदितमुदयनेन ।

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रया सिद्धिरुद्धतेति ॥

न च विशेषविरोधः शक्यशङ्कः ज्ञातत्वाज्ञातत्वविकल्पपराहतत्वात् ।

"When a middle term is accompanied by a sound argument to establish its validity,
Then you cannot attempt to supply a limiting condition from the [supposed] non-universality of the major term."

If you maintain that there are many sound counter-arguments, such as 'of the Supreme Being were a maker He would be possessed of a body,' &c., we reply that all such reasoning is equally inconsistent, whether we allow that Supreme Being's existence to be established or not.* As has been said by Udayana A'chárya [in the Kusmánjali, (iii. 5.)]

"If Śruti, &c., have any authority, your negative argument is precluded; if they are fallacious, our old objection of a 'baseless inference' returns stronger than ever."

* As in the former case it would be clear that He has no body, and in the latter you would be liable to the fault of *âśrayâsiddhi* a 'baseless inference,' since, your subject (or minor term,) being itself non-existent, it cannot be the locus or subject of a negation. Cf. Kusumánjali, iii. 2. "just as that subject from which a given attribute is excluded cannot be unreal, so neither can an unreal thing be the subject of a negation."

तदेतत् परमेश्वरस्य जगन्निर्म्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा आद्ये ऽपीष्टप्राप्त्यर्था अनिष्टपरिहारार्था वा नाद्यः अवाप्तसकलकामस्य तदनुपपत्तेः अतएव न द्वितीयः। द्वितीये प्रवृत्त्यनुपपत्तिः कः खलु परार्थं प्रवर्त्तमानं प्रेक्षावानित्याचक्षीत । अथ करुणया प्रवृत्त्युपपत्तिरित्याचक्षीत कश्चित्तं प्रत्याचक्षीत तर्हि सर्व्वान् प्राणिनः सुखिन एव सृजेदीश्वरः न दुःखशवलान् करुणाविरोधात् स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा हि कारुण्यं तस्मादीश्वरस्य जगत्सर्जनं न युज्यते । तदुक्तं भट्टाचार्य्यैः ।

प्रयोजनमनुद्दिश्य न मन्दो ऽपि प्रवर्त्तते ।
जगच्चासृजतस्तस्य किं नाम न कृतं भवेदिति ॥

नास्तिकशिरोमणे तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान् करुणया प्रवृत्तिरस्त्येव न च निसर्गतः सुखमयसर्गप्रसङ्गः सृज्यप्राणि-

Nor need we fear the possibility of any other contradiction to our argument, since it would be overthrown by either alternation of God's being known or unknown.*

"Well, let all this be granted; but the activity of God in creating the world,—what end did it have in view, his own advantage or some other being's? If it was for the former end, was it in order to attain something desired or to avoid something not desired? It could not be the first, because this would be quite incongruous in a being who possesses every possible desire gratified; and for the same reason too it cannot be the second. If it was for the latter end [the advantage of another,] it would be equally incongruous, for who would call that being 'wise' who busied himself in acting for another? If you replied that his activity was justified by compassion, any one would at once retort that this feeling of compassion should have rather induced him

* If God is known, then His existence must be granted,—if He is not known, how can we argue about Him? I read lines 15, 16 in p. 120 of the Calcutta edition विकल्पपराहतत्वात् and then begin the next clause with स्यादेतत्. The printed text—विकल्पपराहतः स्यात् । तदेतत् seems unintelligible.

---

कृतसुकृतदुष्कृतपरिपाकविशेषाद्वैषम्योपपत्तेः न च स्वातन्त्र्यभङ्गः शङ्कनीयः स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात् एक एव रुद्रो न द्वितीयाय तस्थे इत्यादिरागमस्तत्र प्रमाणम् । यद्येवं तर्हि परस्पराश्रयबाधयाधिं समाधत्स्वेति चेत् तस्यानुत्थानात् किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा । नाद्यः आगमस्येश्वराधीनोत्पत्तिकत्वे ऽपि परमेश्वरस्य नित्यत्वेनोत्पत्तेरनुपपत्तेः नापि ज्ञप्तौ परमेश्वरस्य आगमाधीनज्ञप्तिकत्वे ऽपि तस्यान्यतो ऽवगमात् नापि तदनित्यत्वज्ञप्तौ आगमानित्यत्वस्य तीव्रादिधर्म्मोपेतत्वादिना सुगमत्वात् ।

तस्मान्निर्वर्त्तकधर्म्मानुष्ठानवशादीश्वरप्रसादसिद्धावभिमतेष्टसिद्धिरिति सर्व्वमवदातम् ॥

इति सर्व्वदर्शनसंग्रहे अक्षपाददर्शनम् ॥

## अतो दीर्घो यञि ॥ १०१ ॥

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परत: । पचामि । पचाव: । पचाम: । पच्यामि । पच्याव: । पच्याम: । अत इति किम् । चिनुव: । चिनुम: । यञीति किम् । पचत: । पचथ: । सार्वधातुकइत्येव । अङ्गना, केशव: । के चिदत्र तिङीत्यनुवर्त्तयन्ति, तेषां भववानिति क्वसौ सार्वधातुकदीर्घो न भवति ॥

## सुपि च ॥ १०२ ॥

अतो दीर्घो यञीत्यनुवर्त्तते । सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति । वृक्षाय । प्लक्षाय । वृक्षाभ्याम् । प्लक्षाभ्याम् । अत इत्येव । अग्निभ्याम् * । यञीत्येव । वृक्षस्य । प्लक्षस्य ॥

## बहुवचने झल्येत् ॥ १०३ ॥

बहुवचने झलादौ सुपि परतो ऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षेभ्य: । प्लक्षेभ्य: । वृक्षेषु । प्लक्षेषु । बहुवचनइति किम् । वृक्षाभ्याम् । प्लक्षाभ्याम् । झलीति किम् । वृक्षाणाम् । सुपीत्येव । यजध्वम् । पचध्वम् ॥

## ओसि च ॥ १०४ ॥

ओसि परतोकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षयो: स्वम् । प्लक्षयो: स्वम् । वृक्षयोर्निधेहि । प्लक्षयोर्निधेहि ॥

## आङि चाप: ॥ १०५ ॥

आङिति पूर्वाचार्यनिर्द्देशेन तृतीयैकवचनं गृह्यते । तस्मिन्नाङि परतश्चकारादोसि च आबन्तस्याङ्गस्यैकारादेशो भवति । खट्वया । माल-

* वायुभ्यामित्यधिकं पुस्तकान्तरे ।

या । खट्वयोः । मालयोः । बहुराजया । कारीषगन्ध्यया । बहुराजयोः कारीषगन्ध्ययोः । आप इति पितो ग्रहणं किम् । कीलालपा ब्राह्मणेन । कीलापोर्ब्राह्मणकुलयोः । ङ्याब्ग्रहणेऽदीर्घग्रहणमिति वचनादिह न भवति । अतिखट्वेन ब्राह्मणकुलेन ॥

## संबुद्धौ च ॥ १०६ ॥

आप इति वर्त्तते । संबुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति । हे खट्वे । हे बहुराजे । हे कारीषगन्ध्ये ॥

## अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥

संबुद्धाविति वर्त्तते । अम्बार्थानामङ्गानां नद्यन्तानां ह्रस्वो भवति संबुद्धौ परतः । हे अम्ब । हे अक्क । हे अल्ल । नद्याः खल्वपि । हे कुमारि । हे शार्ङ्गरवि । हे ब्रह्मबन्धु । हे वीरबन्धु ॥ डलकवतीनां प्रतिषेधो वक्तव्यः ॥ * ॥ हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥ छन्दसि वेति वक्तव्यम् ॥ * ॥ हे अम्बाड । हे अम्बाडे । हे अम्बाल । हे अम्बाले । हे अम्बिक । हे अम्बिके ॥ तलो ह्रस्वो वा ङिसंबुद्ध्योरिति वक्तव्यम् ॥ * ॥ देवते भक्तिः । देवतायां भक्तिः । हे देवत । हे देवते ॥ छन्दस्येव ह्रस्वत्वमिष्यते ॥ मातॄणां मातच् पुत्रार्थमर्हते ॥ * ॥ मातॄणां मातजादेशो वक्तव्यः संबुद्धौ पुत्राय पुत्रमभिधातुं, कीदृशाय, अर्हते । मात्रा व्यपदेशमर्हति श्लाघनीयत्वाद्यः पुत्रस्तदर्थम् । हे गार्गीमात । नद्यृतश्चेति समासान्तापवादो मातजादेशः, चित्करणमन्तोदात्तार्थम् ॥

## ह्रस्वस्य गुणः ॥ १०८ ॥

संबुद्धाविति वर्त्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति संबुद्धौ परतः । हे अग्ने । हे वायो । हे पटो । हे कुमारि, हे ब्रह्मबन्धु, इत्येवमादीनां ह्रस्वविधानसामर्थ्याद्गुणो न भवति । यदि गुण इष्टः स्यात् । अम्बार्थानां ह्रस्व इत्युक्त्वा नदीह्रस्वयोर्गुण इत्येवं ब्रूयात् ॥

## जसि च ॥ १०९ ॥

जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति । अग्नयः । वायवः । पटवः । धेनवः । बुद्धयः ॥ जसादिषु छन्दसि वावचनं प्राक् णौ चङ्युपधाया ह्रस्व इत्येतस्मात् ॥ * ॥ इतः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम् । किं प्रयोजनम् । अम्बे दर्वि शतक्रत्वः पश्वे भृत्यः किकिदीव्या । अम्बे । अम्ब । पूर्णा दर्वि । पूर्णादर्वी । अधा शतक्रत्वः । शतक्रतवः । पश्वे भृत्यः । पशवे भृत्यः । किकिदीव्या । किकिदीविना ॥

## ऋतो ङिसर्वनामस्थानयोः ॥ ११० ॥

गुण इति वर्त्तते । ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति । ङौ । मातरि । पितरि । भ्रातरि । कर्त्तरि । सर्वनामस्थाने । कर्त्तारौ । कर्त्तारः । मातरौ । पितरौ । भ्रातरौ * ॥

## घेर्ङिति ॥ १११ ॥

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति । अग्नये । वायवे । अग्नेरागच्छति । वायोरागच्छति । अग्नेः स्वम् । वायोः स्वम् । घेरिति किम् । सख्ये । पत्ये । ङितीति किम् । अग्निभ्याम् । सुपीत्येव । पट्वी । कुरुतः ॥

## आण् नद्याः ॥ ११२ ॥

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याडागमो भवति । कुमार्यै । ब्रह्मबन्ध्वै । कुमार्याः । ब्रह्मबन्ध्वाः ॥

## याडापः ॥ ११३ ॥

आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति । खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः । अतिखट्वायेत्यत्राकृते दीर्घे ङ्याब्ग्रहणे ऽदीर्घ इति वचनाद्याडागमो न भवति । कृते तु लाक्षणिकत्वात् ॥

* तपरकरणं मुखसुखार्थम् । इति पुस्तकान्तरे ऽधिकम् ।

सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥

सर्वनाम्न आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति। सर्वस्यै। विश्वस्यै। यस्यै। तस्यै। कस्यै। सर्वस्याः। विश्वस्याः। यस्याः। तस्याः। कस्याः। अन्यस्यै। अन्यस्याः। आप इत्येव। भवति। भवते॥

विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥

द्वितीया तृतीया इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याडागमो भवति। द्वितीयातृतीययोश्च ह्रस्वो भवति। द्वितीयस्यै। द्वितीयायै। तृतीयस्यै। तृतीयायै॥

ङेराम्नद्याम्नीभ्यः ॥ ११६ ॥

नद्यन्तादाबन्तान्नीत्येतस्माच्चोत्तरस्य ङेरामित्ययमादेशो भवति। कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्। आपः। खट्वायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। नी। राजन्याम्। सेनान्याम्*॥

इदुद्भ्याम् ॥ ११७ ॥

इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति। कृत्याम्। धेन्वाम्॥

औत् ॥ ११८ ॥

इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति। यच्च नदीसंज्ञं नापि घिसंज्ञमिकारान्तं तदिहोदाहरणम्। सख्यौ। पत्यौ॥

अच्च घेः ॥ ११९ ॥

औदिति वर्त्तते। घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति तस्य च घेरकारादेशो भवति। अग्नौ। वायौ। कृतौ। धेनौ। पटौ। अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम्। औदच्च घेरिति येषामेकमेवेदं सूत्रं ते प्रधानशिष्टमिदुद्भ्यामौत्त्वं वर्णयन्ति। अन्वाचयशिष्टं घेरकारमिति॥

* ग्रामण्यामिति पुस्तकान्तरे ऽधिकम्।

## आङो ना ऽस्त्रियाम् ॥ १२० ॥

घेरुत्तरस्याङो नाभावो भवति अस्त्रियाम् । अग्निना । वायुना । पटुना । पुंसि इति नोक्तममुना ब्राह्मणकुलेन । अस्त्रियामिति किम् । कृत्या । धेन्वा ॥

॥ इति काशिकायां वृत्तौ सप्तमाध्यायस्य तृतीयः पादः ॥

---

॥ सप्तमाध्यायस्य चतुर्थः पादः ॥

## णौ चङ्युपधाया ह्रस्वः ॥ १ ॥

अङ्गस्येति वर्त्तते । चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति । अचीकरत् । अजीहरत् । अलीलवत् । अपीपठत् । अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वं तत्र कृते द्विर्वचनम् । इह तु मा भवानटिटद्दिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहितमिति ह्रस्वो न स्यात् । नैष दोषः । ओणेर्ऋदित्करणं ज्ञापकं नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यतइति । णाविति किम् । चङ्युपधाया ह्रस्व इत्युच्यमाने ऽलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात् । अदीदपदित्यत्र ह्रस्वत्वेन पुको बाधः स्यात् । अपीपचदित्येवमादौ तु नैव स्यात् । चङीति किम् । कारयति । हारयति । उपधाया इति किम् । अचकाङ्क्षत् । अववाञ्छत् । तदेतदुपधाग्रहणमुत्तरार्थमवश्यं कर्त्तव्यं तदिहापि ह्रस्वत्वं निवर्त्तयतीत्येवमर्थं येन नाव्यवधानमित्येतन्नाश्रयितव्यमिति ॥ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् * ॥ * ॥ वादितवन्तं प्रयोजितवान् । अवीवदद्वीणां परिवादकेन । योसौ णौ णिलोपस्तस्य स्थानिवद्भावेनाग्लोपित्वाद्धाङ्गस्य ह्रस्वो न प्राप्नोति । णयाकृतिनिर्देशात् सिद्धम् ॥

* णौ णिच्युपसंख्यानमिति पाठान्तरम् । णौ परतो यो णिस्तस्मिन्नित्यर्थः ।

## नाग्लोपिशास्वृदिताम् ॥ २ ॥

अग्लोपिनामङ्गानां शासेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न भवति । अग्लोपिनां तावत् । मालामाख्यत् । अममालत् । मातरमाख्यत् । अममातरत् । राजानमतिक्रान्तवान् । अत्यरराजत् । लोमान्यनुमृष्टवान् । अन्वलुलोमत् । अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम् । हलचोरादेशे तु न सिद्ध्यतीति तदर्थमेतद्वचनम् । अशशासत् । ऋदिताम् । बाधृ । अबबाधत् । याचृ । अययाचत् । ढौकृ । अडुढौकत् ॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥

भ्राज भास भाष दीप जीव मील पीड इत्येतेषामङ्गानां णौ चङ्युपधाया ह्रस्वो भवत्यन्यतरस्याम् । भ्राज । अबिभ्रजत् । अबभ्राजत् । भास । अबभासत् । अबीभसत् । भाष । अबभाषत् । अबीभषत् । दीप । अदिदीपत् । अदीदिपत् । जीव । अजीजिवत् । अजिजीवत् । मील । अमिमीलत् । अमीमिलत् । पीड । अपिपीडत् । अपीपिडत् । भ्राजभासोर्ऋदित्करणमपाणिनीयम् ॥ काण्यादीनां वेति वक्तव्यम् ॥ * ॥ अचकाणत् । अचीकणत् । अववाणत् । अवीवणत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

पिबतेरङ्गस्य णौ चङ्युपधाया लोपो भवति अभ्यासस्येकारादेशो भवति । अपीप्यत् । अपीप्यताम् । अपीप्यन् । उपधालोपे कृते ओः पुयण्ज्यपरे इति इत्वं न प्राप्नोति तदर्थमीत्वचनम् ॥ पुयण्वचनं ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवद्भावाद् द्विर्वचनम् ॥

## तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेरङ्गस्य णौ चङ्युपधाया इकारादेशो भवति । अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् ॥

## जिघ्रतेर्वा ॥ ६ ॥

जिघ्रतेरङ्गस्य णौ चङ्युपधाया इकारादेशो वा भवति । अजि-

घ्रिपत् । अजिघ्रिपताम् । अजिघ्रिपन् । अजिघ्रपत् । अजिघ्रपताम् । अजिघ्रपन् ॥

उर्ऋत् ॥ ७ ॥

णौ चङ्युपधाया ऋवर्णस्य स्थाने वा ऋकारादेशो भवति । इर-रारामपवादः । इर् । अचिकीर्त्तत् । अचीकृतत् । अर् । अववर्त्तत् । अवीवृतत् । आर् । अममार्जत् । अमीमृजत् । वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते । तपरकरणं दीर्घेपि स्थानिनि ह्रस्व एव यथा स्यात् । अचीकृतदिति । न चायं भाव्यमानः किं तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते ॥

नित्यं छन्दसि ॥ ८ ॥

छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य स्थाने ऋकारादेशो भवति नित्यम् । अवीवृधत्पुरोडाशेन । अवीवृधताम् । अवीवृधन् ॥

दयतेर्दिगि लिटि ॥ ९ ॥

दयतेरङ्गस्य लिटि परतो दिगीत्ययमादेशो भवति । अवदिग्ये । अवदिग्याते । अवदिग्यिरे । दयतेरिति दीङो ग्रहणं न तु दय दानइत्यस्य । तस्य हि लिट्याम्विहितः ॥ दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते ॥

ऋतश्च संयोगादेर्गुणः ॥ १० ॥

ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः । स्वृ । सस्वरतुः । सस्वरुः । ध्वृ । दध्वरतुः । दध्वरुः । स्मृ । सस्मरतुः । सस्मरुः । ऋत इति किम् । चिक्षियतुः । चिक्षियुः । संयोगादेरिति किम् । चक्रतुः । चक्रुः । प्रतिषेधविषयेपि गुणो यथा स्यादित्ययमारम्भः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । सस्वार । सस्मार । लिटीत्येव । स्मृतः । स्मृतवान् ॥ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्त्तव्यम् ॥ * ॥ संचस्करतुः, संचस्करुः । इत्यत्र हि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यत्र दर्शने लिटि कृते तदाश्रये च द्विर्वचने पश्चादुपसर्गयोगे सत्यडभ्यासव्यवायेपीति सुट् क्रियते । एवं च कृत्वा संस्कृषीष्ट

उपस्कृपीष्टेत्यत्र सुटो बहिरङ्गलक्षणस्यासिद्धत्वादृतश्च संयोगादेरिति इडागमो न भवति ॥

ऋच्छत्यृताम् ॥ ११ ॥

ऋच्छतेरङ्गस्य ऋइत्येतस्य ऋकारान्तानां च लिटि परतो गुणो भवति । ऋच्छ । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । ऋ । आरतुः । आरुः । ऋकारान्तानाम् । निचकरतुः । निचकरुः । निजगरतुः । निजगरुः । ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते । ऋतां तु प्रतिषिद्धः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । निचकार । निजगार ॥

शॄदॄप्रां ह्रस्वो वा ॥ १२ ॥

शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति । विशश्रतुः । विशश्रुः । विशशरतुः । विशशरुः । विदद्रतुः । विदद्रुः । विददरतुः । विददरुः । निपप्रतुः । निपप्रुः । निपपरतुः । निपपरुः । ह्रस्ववचनमित्त्वोत्त्वनिवृत्त्यर्थम् । के चिदेतत्सूत्रं प्रत्याचक्षते । श्रा पाके द्रा कुत्सायां प्रा पूरणे इत्येतेषामनेकार्था धातव इति शॄदॄप्रामर्थे वर्तमानानां विशश्रतुः विशश्रुः विदद्रतुः विदद्रुः निपप्रतुः निपप्रुः, इत्येतानि रूपाणि साधयन्ति । तथा च सति क्वसौ विशश्रिवानित्येतद्रूपं न स्यात् ॥

केऽणः ॥ १३ ॥

के प्रत्यये परतोऽणो ह्रस्वो भवति । ज्ञका । कुमारिका । किशोरिका । अण इति किम् । गोका । नौका । राका धाकेत्यत्र उणादयो बहुलमिति ह्रस्वो न भवति । न कपीतिप्रतिषेधसामर्थ्यात्कनोपि सानुबन्धकस्य ग्रहणमिह भवति ॥

न कपि ॥ १४ ॥

कपि प्रत्यये परतोऽणो ह्रस्वो न भवति । बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः । गोस्त्रियोरुपसर्जनस्येत्ययमपि ह्रस्वः कपि न भवति । समासार्थे ह्युत्तरपदे कपि कृते पश्चात्समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ॥

आपोन्यतरस्याम् ॥ १५ ॥

आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम् । बहुखट्वाकः । बहुखट्वकः । बहुमालकः । बहुमालाकः ॥

ऋदृशोऽङि गुणः ॥ १६ ॥

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः । अदर्शत् । अदर्शताम् । अदर्शन् ॥

अस्यतेस्थुक् ॥ १७ ॥

अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः । आस्थत् । आस्थताम् । आस्थन् ॥

श्वयतेरः ॥ १८ ॥

श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः । अश्वत् । अश्वताम् । अश्वन् ॥

पतः पुम् ॥ १९ ॥

पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत् । अपप्तताम् । अपप्तन् ॥

वच उम् ॥ २० ॥

वचेरङ्गस्य अङि परत उमागमो भवति । अवोचत् । अवोचताम् । अवोचन् ॥

शीङः सार्वधातुके गुणः ॥ २१ ॥

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । शेते । शयाते । शेरते । सार्वधातुकइति किम् । शिश्ये ॥

अयङ्यि क्ङिति ॥ २२ ॥

यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्यायङित्ययमादेशो भवति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य । यीति किम् । शिश्ये । क्ङितीति किम् । शेयम् ॥

उपसर्गाद्ध्रस्व ऊहतेः ॥ २३ ॥

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः । समुह्यते । समुह्य गतः । अभ्युह्यते । अभ्युह्य गतः । उपसर्गादिति किम् । ऊह्यते । ऊहतेरिति किम् । समीह्यते । यीत्येव । समूहितम् । क्ङितीत्येव । अभ्यूह्योयमर्थः । अणः इत्येव । आ ऊह्यते । ओह्यते । समोह्यते ॥

एतेर्लिङि ॥ २४ ॥

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । आशिषि लिङि अकृत्सार्वधातुकयोरिति दीर्घत्वे कृते ह्रस्वोऽनेन भवति । उपसर्गादित्येव । ईयात् । अण इत्येव आ ईयात् । एयात् । समेयात् ॥

अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति । भृशायते । सुखायते । दुःखायते । चीयते । चेचीयते । स्तूयते । तोष्टूयते । चीयात् । स्तूयात् । अकृदिति किम् । प्रकृत्य । प्रहृत्य । परत्वाद्दीर्घत्वेन तुको बाधः स्यात् । असार्वधातुकइति किम् । चिनुयात् । सुनुयात् । क्ङितीत्येव । उरुया । धृष्णुया ॥

च्वौ च ॥ २६ ॥

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति । शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् ॥

रीङ् ऋतः ॥ २७ ॥

ऋकारान्तस्याङ्गस्य अकृद्यकारे ऽसार्वधातुके यकारे च्वौ च परतो रीङित्ययमादेशो भवति । मात्रीयति । मात्रीयते । पित्रीयते । चेक्रीयते । मात्रीभूतः । क्ङितीत्येतन्निवृत्तं, तेनेहापि भवति । पितुरागतं पित्र्यम् । ऋत इति तपरकरणं किम् । चेकीर्यते । निजेगिल्यते ॥

रिङ् शयग्लिङ्क्षु ॥ २८ ॥

ऋकारान्तस्याङ्गस्य श यक् इत्येतयोर्लिङि च यकारादौ असार्वधातुके परतो रिङित्ययमादेशो भवति । श । आद्रियते । आध्रियते । यक् । क्रियते । ह्रियते । लिङ् । क्रियात् । ह्रियात् । असार्वधातुकइत्येव । बिभृयात् । यीत्येव । कृषीष्ट । हृषीष्ट ॥

गुणोर्त्तिसंयोगाद्योः ॥ २९ ॥

ऋतो यकि लिङि इति वर्त्तते । शइत्यत्रासंभवान्नानुवर्त्तते । गुणो भवत्यर्त्तेः संयोगादीनामृकारान्तानां यकि परतो लिङि च यकारादावसार्वधातुके । अर्यते । अर्यात् । स्मर्यते । स्मर्यात् । इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्त्तते । यीत्यव । स्वृषीष्ट । ध्वृषीष्ठ । असार्वधातुकइत्येव । इयृयात् ॥

यङि च ॥ ३० ॥

यङि च परतो अर्त्तेः संयोगादेश्च ऋतो गुणो भवति । अरार्यते । सास्वर्यते । दाध्वर्यते । सास्मर्यते । अर्त्तेरत्यर्त्त्यर्शूर्णोतीनामुपसंख्यानमिति यङ् ॥ न न्द्राः संयोगादय इति द्विर्वचनप्रतिषेधो यकारपरस्य नेष्यते ॥ हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः ॥ * ॥ जेघ्नीयते । हिंसायामिति किम् । जङ्घन्यते ॥

ई घ्राध्मोः ॥ ३१ ॥

घ्रा ध्मा इत्येतयोर्यङि परत ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ॥

अस्य च्वौ ॥ ३२ ॥

ई इति वर्त्तते । अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति । शुक्लीभवति । शुक्लीस्यात् । खट्वीकरोति । खट्वीस्यात् ॥

क्यचि च ॥ ३३ ॥

अस्येति वर्त्तते। क्यचि परतोवर्णान्तस्याङ्गस्य ईकारादेशो भवति। पुत्त्रीयति। घटीयति। खट्वीयति। मालीयति। अकृत्सार्वधातुकयोर्दीर्घ इत्यस्यापवादः। पृथग्योगकरणमुत्तरार्थम्॥

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु॥ ३४॥

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते बुभुक्षा पिपासा गर्द्ध इत्येतेष्वर्थेषु। अशनायेत्यशनशब्दस्यात्वं क्यचि निपात्यते। अशनायतीति भवति बुभुक्षा चेत्। अशनीयतीत्येवान्यत्र। उदन्येति उदकशब्दस्य उदन्नादेशो निपात्यते। उदन्यतीति भवति पिपासा चेत्। उदकीयतीत्येवान्यत्र। धनायेति धनशब्दस्यात्वं निपात्यते। धनायतीति भवति गर्द्धश्चेत्। धनीयतीत्येवान्यत्र॥

नच्छन्दस्यपुत्त्रस्य॥ ३५॥

छन्दसि विषये पुत्त्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति। किं चोक्तं, दीर्घत्वमीत्वं च। मित्त्रयुः। पुत्त्रयुः। संस्वेदयुः। देवाञ्जिगाति सुम्नयुः। अपुत्त्रस्येति किम्। पुत्त्रीयन्तः सुदानवः॥ अपुत्त्रादीनामिति वक्तव्यम्॥ * ॥ जनीयन्तोन्वग्रवः॥

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति॥ ३६॥

दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति एतानि छन्दसि निपात्यन्ते। दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते। अवियेना दुरस्युः। दुष्टीयतीति प्राप्ते। द्रविणशब्दस्य द्रविणस्भावो निपात्यते। द्रविणस्युर्विपन्यया। द्रविणीयतीति प्राप्ते। वृषशब्दस्य वृषण्भावो निपात्यते। वृषण्यति। वृषीयतीति प्राप्ते। रिष्टशब्दस्य रिषण्भावो निपात्यते। रिषण्यति। रिष्टीयतीति प्राप्ते॥

अश्वाघस्यात्॥ ३७॥

अश्व अघ इत्येतयोः क्यचि परतः छन्दसि विषये आकारादेशो भवति। अश्वायन्तो मघवन्। मा त्वा वृका अघायवो विदन्। एतदेवात्त्ववचनं ज्ञापकं नच्छन्दस्यपुत्त्रस्येति दीर्घप्रतिषेधो भवतीति॥

## देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥

देव सुम्न इत्येतयोः क्यचि परत आकारादेशो भवति यजुषि काठके। देवायन्तो यजमानाय। सुम्नायन्तो हवामहे। यजुषीति किम्। देवाञ्जिगाय सुम्नयुः। काठकइति किम्। सुम्नयुरिदमासीत् ॥

## कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये। कव्यन्तः सुमनसः। अध्वर। अध्वर्यन्तः। पृतन्यन्तस्तिष्ठन्ति ॥

## द्यतिस्यतिमास्थामित्ति किति ॥ ४० ॥

द्यति स्यति मा स्था इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः। द्यति। निर्दितः। निर्दितवान्। स्यति। अवसितः। अवसितवान्। मा। मितः। मितवान्। स्था। स्थितः। स्थितवान्। तीति किम्। अवदाय। कितीति किम्। अवदाता ॥

## शाछोरन्यतरस्याम् ॥ ४१ ॥

शा छा इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति। शा। निशितम्। निशातम्। निशितवान्। निशातवान्। अवच्छितम्। अवच्छातम्। अवच्छितवान्। अवच्छातवान् ॥ श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम् ॥ * ॥ संशितो ब्राह्मणः। संशितव्रत इत्यर्थः। व्यवस्थितविभाषाविज्ञानात्सिद्धम्।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

## दधातेर्हिः ॥ ४२ ॥

दधातेरङ्गस्य हीत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः। हितः। हितवान्। हित्वा ॥

## जहातेश्च क्त्वि ॥ ४३ ॥

जहातेरङ्गस्य हीत्ययमादेशो भवति क्त्वाप्रत्यये परतः। हित्वा राज्यं वनं गतः। हित्वा गच्छति। जहातेर्निर्द्देशाज्जिहीतेर्न भवति। हात्वा॥

## विभाषा छन्दसि॥ ४४॥

जहातेरङ्गस्य विभाषा हीत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः। हित्वा शरीरं यातव्यम्। हात्वा *।

## सुधितवसुधितनेमधितधिष्वधिषीय च॥ ४५॥

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधातेः क्त्वाप्रत्यये इत्त्वमिडागमो वा प्रत्ययस्य निपात्यते। गर्भं माता सुधितम्। सुहितमिति प्राप्ते। वसुधितमग्नौ जुहोति। वसुहितमिति प्राप्ते। नेमधिता बाधन्ते। नेमहिता इति प्राप्ते। धिष्वेति लोण्मध्यमैकवचने दधातेरित्त्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते। धिष्व सोमम्। धत्स्वेति प्राप्ते। धिषीयेति आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्त्वमिडागमो वा प्रत्ययस्य निपात्यते। धिषीयेति। धासीयेति प्राप्ते॥

## दो दद्घोः॥ ४६॥

दा इत्येतस्य घुसंज्ञकस्य ददित्ययमादेशो भवति तकारादौ किति प्रत्यये परतः। दत्तः। दत्तवान्। दत्तिः। द इति किम्। धीतः। धीतवान्। धेट एतद्रूपम्। घोरिति किम्। दाप् लवने। दातं बर्हिः। दैप् शोधने। अवदातं मुखम्॥ अयमादेशः स्यानइष्यते॥ एवं ह्युक्तम्। तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम्॥ यदि तु दस्तीति तकारादौ दीर्घत्वं तदा तान्तेऽप्यदोषः। दान्तधान्तयोरपि सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति नत्वधत्वे न भविष्यत इति न दोषः॥

---

* छान्दसत्वादीत्वाभाव इति पदमञ्जरी।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्म्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

अच उपसर्गात्त इति प्राप्ते निपात्यन्ते । अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ॥

## अच उपसर्गात्तः ॥ ४७ ॥

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति । प्रत्तं,अवत्तं,नीत्तं,परीत्तम् । अच इति किम् । निर्दत्तम् । दुर्दत्तम् । उपसर्गादिति किम् । दधि दत्तम् । मधु दत्तम् । घोरित्येव । अवदात्तं मुखम् । उपसर्गादिति पञ्चमीनिर्द्देशादादेरलः प्राप्नोति । तत्र समाधिमाहुः । अच इत्येतदावर्त्त्यते । तत्रैकं पञ्चम्यन्तमुपसर्गविशेषणार्थं,अपरमपि षष्ठ्यन्तं स्थानिनिर्द्देशार्थमित्याकारस्य स्थाने तकारो भवति । द्वितकारो वा संयोगो ऽयमादिश्यते । सोनेकाल्त्वात्सर्वस्य भविष्यति । अपो भीत्यत्र पञ्चम्यन्तमच इत्यनुवर्त्तते । तेन पकारमात्रस्य भविष्यति ॥ द्यतेरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन ॥ * ॥ अवत्तम् । प्रत्तं जुहोति ॥

## अपो भि ॥ ४८ ॥

अप् इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतस्त इत्ययमादेशो भवति । अद्भिः । अद्भ्यः । भीति किम् । अप्सु ॥ स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ ॥ स्ववद्भिः । स्वतवद्भिः । माद्भिष्ट इन्द्रो वृत्रहा । समुषद्भिरजायथाः ॥

## सः स्यार्द्धधातुके ॥ ४९ ॥

सकारान्तस्याङ्गस्य सकारादावार्द्धधातुके परतस्तकारादेशो भवति । वत्स्यति । अवत्स्यत् । विवत्सति । जिघत्सति । स इति किम् । वक्ष्यति । सीति किम् । वासः । वासः । आर्द्धधातुकइति किम् । आस्से । वस्से ॥

तासस्त्योर्लोपः ॥ ५० ॥

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये लोपो भवति । तासेः । कर्त्तासि । कर्त्तासे । अस्तेः । त्वमसि । व्यतिसे । अस्तेरकारसकारयोर्लुप्तयोः से इति प्रत्ययमात्रमेतत्पदम् । तेन सात्पदाद्योरिति षत्वं न भवति ॥

रि च ॥ ५१ ॥

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति । कर्त्तारौ। कर्त्तारः । अध्येतारौ । अध्येतारः । अस्तेर्लिटि । व्यतिरे ॥

ह एति ॥ ५२ ॥

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । कर्त्ताहे । अस्तेः । व्यतिहे ॥

यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति। यकारादौ। आदीध्य गतः । आवेव्य गतः । आदीध्यते । आवेव्यते । इवर्णादौ । आदीधिता । आवेविता । लिङि । अदीधीत । आवेवीत । यीवर्णयोरिति किम् । आदीध्यनम् । आवेव्यनम् ॥

सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

सनि प्रत्यये सकारादौ परतो मी मा घु रभ लभ शक पत पद इत्येतेषामङ्गानामचः स्थाने इसित्ययमादेशो भवति । मी इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । मित्सति । प्रमित्सति । मा इति गामादाग्रहणेष्वविशेषः । मित्सते । अपमित्सते । घु । दित्सति । धित्सति । रभ । आरिप्सते । लभ । आलिप्सते । शक । शिक्षति । पत । पित्सति । पद । प्रपित्सते । सनीति किम् । दास्यति । सीत्येव । पिपतिषति । तनिपतिदरिद्राणामुपसंख्यानमिति पतेरिडागमविकल्पः ॥ सनि राधो हिंसायामच इस्वक्तव्यः ॥ * ॥ प्रतिरित्सति। हिंसायामिति किम् । आरिरात्सति ॥

## आप्ज्ञप्यृधामीत् ॥ ५५ ॥

आप् ज्ञपि ऋध इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः । आप् । ईप्सति । ज्ञपि । ज्ञीप्सति । ऋधु । ईर्त्सति । ज्ञपेर्द्वावचौ तत्रणेः पूर्वविप्रतिषेधेन लोप इतरस्य त्वीत्वम् । सनीत्येव । प्राप्स्यति । सीत्येव । जिज्ञपयिषति । अर्द्दिधिषति । सनीवन्तर्द्धेति ज्ञपेर्ऋधेश्चेटो विकल्पः ॥

## दम्भ इच्च ॥ ५६ ॥

दम्भेरच इकारादेशो भवति चकारादीच्च सनि सकारादौ परतः । धीप्सति । धिप्सति । सीत्येव । दिदम्भिषति ॥

## मुचोकर्म्मकस्य गुणो वा ॥ ५७ ॥

मुचोकर्म्मकस्य गुणो वा भवति सनि सकारादौ परतः । हलन्ताच्चेति किल्वप्रतिषेधो विकल्प्यते । मोक्षते वत्सः स्वयमेव । मुमुक्षते वत्सः स्वयमेव । अकर्म्मकस्येति किम् । मुमुक्षति वत्सं देवदत्तः । कर्म्मकर्त्तरि मुचिरकर्म्मको भवति कर्म्मविशेषस्य वा विवक्षायाम् ॥

## अत्र लोपोभ्यासस्य ॥ ५८ ॥

यदेतत्प्रक्रान्तं सनि मीमेत्यादि मुचोकर्म्मकस्येति यावत् । अत्राभ्यासलोपो भवति । तथैवोदाहृतम् । अभ्यासस्येत्येतच्चाधिकृतं वेदितव्यमाध्यायपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यामोऽभ्यासस्येत्येवं तद्वेदितव्यम् । वक्ष्यति । ह्रस्वः । डुढौकिषते । तुत्रौकिषते । सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्चेत्येवं सिद्धे यदत्र ग्रहणमिह क्रियते तद्विषयावधारणार्थमत्रैवाभ्यासलोपो भवति । सन्वद्भावविषये न भवति । अमीमपत् । अदीदपत् । सन्वल्लघुनि चङ्परइति सन्वद्भावात्प्राप्नोति । सर्वस्याभ्यासस्यायं लोप इष्यते । तदर्थमेव केचिदत्रग्रहणं वर्णयन्ति । नानर्थकेलोन्त्यविधिरित्यपरे सर्वस्य कुर्वन्ति ॥

## ह्रस्वः ॥ ५९ ॥

ह्रस्वो भवत्यभ्यासस्य । डुढौकिषते । तुत्रौकिषते । डुढौके । तुत्रौके । अडुढौकत् । अतुत्रौकत् ॥ अभ्यासस्यानचि ॥ * ॥ अभ्यासस्य यदुच्यते अनचि तद्भवतीति वक्तव्यम् । चराचरः । चलाचलः । पतापतः । वदावदः । हलादिः शेषो न भवति ॥

## हलादिः शेषः ॥ ६० ॥

अभ्यासस्य हलादिः शिष्यते अनादिर्लुप्यते । जग्लौ । मम्लौ । पपाच । पपाठ । आट । आटतुः । आटुः । आदिशेषनिमित्तोयमनादेर्लोपो विधीयते । तत्राभ्यासजातेराश्रयणात्क्वचिदपि वर्त्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति । अपरे तु ब्रुवते । शेषशब्दोयं निवृत्त्या विशिष्टमवस्थानमाह । तदवस्थानमुक्तितो यद्यपि प्रधानमविधेयत्वात्तु तदप्रधानम् । निवृत्तिरेव तु विधेयत्वात्प्रधानम् । तत्रायमर्थोस्य जायते । अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति । सा किमित्यादेरविधेयां सतीमनिवृत्तिमपेक्षिष्यतइति ॥

## शर्पूर्वाः खयः ॥ ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । अन्ये हलो लुप्यन्ते । चुश्चोतिषति । तिष्ठासति । पिस्पन्दिषते । शर्पूर्वा इति किम् । पपाच । खय इति किम् । सस्नौ ॥ खर्पूर्वाः खय इति वक्तव्यम् ॥ * ॥ उचिच्छिषतीत्यत्र उच्छेरन्तरङ्गत्वात्तुकि कृते द्विर्वचनं तत्र हलादिः शेषे सत्यभ्यासे तकारः श्रूयेत ॥

## कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति । चकार । चखान । जगाम । जघान । हकारस्य । जहार । जिहीर्षति । जहौ ॥

## न कवतेर्यङि ॥ ६३ ॥

कवतेरभ्यासस्य यङि परतश्चुर्न भवति । कोकूयते उष्ट्रः । कोकूयते खरः । कवतेरिति विकरणनिर्द्देशः कौतेः कुवतेश्च निवृत्त्यर्थः । तयोश्चुत्वमेव भवति । चोकूयते । यङीति किम् । चुकुवे ॥

कृषेश्छन्दसि ॥ ६४ ॥

कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति। करीकृष्यते यज्ञकुणपः। छन्दसीति किम्। चरीकृष्यते कृषीवलः॥

दाधर्त्तिदर्द्धर्त्तिदर्द्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

दाधर्त्ति दर्धर्ति दर्द्धर्षि बोभूतु तेतिक्ते अलर्षि आपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतः दविद्युतत् तरित्रतः सरीसृपतं वरीवृजत् मर्मृज्य आगनीगन्ति इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते। दाधर्त्ति दर्द्धर्ति दर्द्धर्षीति धारयतेर्धृञो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च। दाधर्त्ति। एवं दर्द्धर्ति। श्लौ रुगभ्यासस्य निपात्यते। तथा दर्द्धर्षीति। अत्र च यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। बोभूत्विति। भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्। अत्र भूसुवोस्तिङीति गुणाभावः सिद्धः। ज्ञापनार्थं तर्हि निपातनमेतत्। ज्ञापयति। अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति। बोभोति। बोभवीति। तेतिक्ते। तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङो ङित्त्वात्प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव। ज्ञापनार्थं त्वात्मनेपदनिपातनमन्यत्र यङ्लुगन्तादात्मनेपदं न भवति। अलर्षीति। इयर्त्तेर्लटि सिपि अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्द्देशो तन्त्रं तिप्यपि दृश्यते अलर्त्ति दक्षः। आपनीफणदिति। फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीग्निपात्यते। संसनिष्यदिति। स्यन्देः संपूर्वस्य यङ्लुक् शतर्येवाभ्यासस्य निक् धातुसकारस्य षत्वं निपात्यते। न चास्य संपूर्वता तन्त्रं, अन्यत्रापि हि दृश्यते। आसनिष्यददिति। करिक्रदिति करोतेर्यङ्लुगन्तस्य शतरि चुत्वाभावोऽभ्यासक-

कारस्य रिगागमो निपात्यते । कनिक्रददिति । क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते । तथा चास्य विवरणं कृतम् । अक्रन्दीदिति भाषायाम् । भरिभ्रदिति बिभर्त्तेर्यङ्लुगन्तस्य शतरि भृञामिदिति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते । दविध्वत इति ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत् । अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते । दविध्वतो रश्मयः सूर्यस्य । दविद्युतदिति द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाभावो अत्वं विगागमश्च निपात्यते । तरित्रत इति तरतेः शतरि श्लौ षष्ठ्येकवचने ऽभ्यासस्य रिगागमो निपात्यते । सरीसृपतमिति सृपेः शतरि श्लौ द्वितीयैकवचने ऽभ्यासस्य रीगागमो निपात्यते । वरीवृजदिति वृजेः शतरि श्लौ रीगागमो निपात्यते ऽभ्यासस्य । मर्मृज्येति मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते । ततो मृजेर्वृद्धिर्न भवत्यलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते । आगनीगन्तीति आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । वत्यन्ती वेदा गनीगन्ति कर्णम् । इतिकरणमेवंविधानामन्येषामप्युपसंग्रहार्थम् ॥

### उरत् ॥ ६६ ॥

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति । ववृते । ववृधे । नर्नर्ति । नरिनर्त्ति । नरीनर्त्ति । इत्येवमादावभ्यासविकारेषु अपवादो नोत्सर्गान्विधीन्बाधतइत्युरदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

### द्युतिस्वाप्योः संप्रसारणम् ॥ ६७ ॥

द्युति स्वापि इत्येतयोरभ्यासस्य संप्रसारणं भवति । विदिद्युतत् । विदिद्योतिषते । विदिद्युतिषते । विदेद्युत्यते । स्वापेः । सुष्वापयिषति । स्वापिर्ण्यन्तो गृह्यते तस्याभ्यासंनिमित्तेन प्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते । इह न भवति । स्वापयतेर्ण्वुल् । स्वापकः । तस्मात्क्यचि स्वापकीयति । स्वापकीयतेः सन् । सिष्वापकीयिषति ॥

## व्यथो लिटि ॥ ६८ ॥

व्यथेर्लिटि परतोऽभ्यासस्य संप्रसारणं भवति । विव्यथे । विव्यथाते । विव्यथिरे । हलादिः शेषेण यकारस्य निवृत्तौ प्राप्तायां संप्रसारणं क्रियते । वकारस्य न संप्रसारणे संप्रसारणमिति प्रतिषिध्यते । लिटीति किम् । वाव्यथ्यते ॥

## दीर्घ इणः किति ॥ ६९ ॥

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः । ईयतुः । ईयुः । इणो यणिति यणादेशे कृते स्थानिवद्भावाद्द्विर्वचनम् । कितीति किम् । इयाय । इययिथ ॥

## अत आदेः ॥ ७० ॥

अभ्यासस्यादेरकारस्य दीर्घो भवति लिटि परतः । अतो गुणे पररूपत्वस्यापवादः । आट । आटतुः । आटुः । आदेरिति किम् । पपाच । पपाठ ॥

## तस्मान्नुड् द्विहलः ॥ ७१ ॥

तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति । आनङ्ग । आनङ्गतुः । आनङ्गुः । आनञ्ज । आनञ्जतुः । आनञ्जुः । द्विहल इति किम् । आट । आटतुः । आटुः । ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते । तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति । आनृधतुः । आनृधुः ॥

## अश्नोतेश्च ॥ ७२ ॥

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति । व्यानशे । व्यानशाते । व्यानशिरे । अश्नोतेरिति विकरणनिर्देशो अश्नातेर्मा भूदिति । आश । आशतुः । आशुः ॥

## भवतेरः ॥ ७३ ॥

भवतेरभ्यासस्याकारादेशो भवति लिटि परतः । बभूव । बभूव-

तुः । बभूवुः । बभूवे । भवतेरिति कर्तृनिर्द्देशादिह न भवति । अनुबभूवे कम्बलो देवदत्तेन । लिटीत्येव । बुभूषति । बोभूयते ॥

ससूवेति निगमे ॥ ७४ ॥

ससूव इति निपात्यते । सूतेर्लिटि परस्मैपदं वुगागमो ऽभ्यासस्य चात्वं निपात्यते । ससूव स्थविरं विपश्चिताम् । सुषुवे इति भाषायाम् ॥

निजां त्रयाणां गुणः श्लौ ॥ ७५ ॥

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति । णिजिर्, नेनेक्ति । विजिर्, वेवेक्ति । विष्, वेवेष्टि । त्रिग्रहणमुत्तरार्थम् । एवं हि वृत्करणं समाप्त्यर्थं पठ्यतएवेति । श्लाविति किम् । निनेज ॥

भृञामित् ॥ ७६ ॥

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति । भृञ् । बिभर्त्ति । माङ् । मिमीते । ओहाङ् । जिहीते । त्रयाणामित्येव । जहाति । श्लावित्येव । बभार ॥

अर्त्तिपिपर्त्योश्च ॥ ७७ ॥

अर्त्ति पिपर्त्ति इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ । इयर्त्ति धूमम् । पिपर्त्ति सोमम् ॥

बहुलं छन्दसि ॥ ७८ ॥

छन्दसि विषये ऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । पूर्णां विवष्टि । वशेरेतद्रूपम् । तथा वचेः । जनिमा विवक्ति । सचेः । वत्सं न माता सिषक्ति । जिघर्त्ति सोमम् । न च भवति । ददातीत्येवं ब्रूयात् । जजनमिन्द्रं माता यद्वीरं दधनद्धनिष्ठा ॥

सन्यतः ॥ ७९ ॥

सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । पिपासति । सनीति किम् । पपाच । अत इति किम् । लुलूषति । तपरकरणं किम् । पापचिषते ॥

## ओः पुयण्ज्यपरे ॥ ८० ॥

सनीति वर्त्तते इदिति च । उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः । पवर्गे परे । पिपविषति । पिपावयिषति । बिभावयिषति । यण्यपरे । यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जपरे । जु इति सौत्रोयं धातुः । जिजावयिषति । एतदेव पुयण्ज्यपरइति वचनं ज्ञापकमद्विर्वचननिमित्तेपि णौ स्थानिवद्भवतीति । ओरिति किम् । पापच्यते । सन् । पापचिषति । पुयण्जीति किम् । अवनुनावयिषति । जुहावयिषति । अपरइति किम् । बुभूषति ॥

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥

स्रवति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वा इकारादेशो भवति सनि परतः । सिस्रावयिषति । सुस्रावयिषति । शृणोति । शिश्रावयिषति । शुश्रावयिषति । द्रवति । दिद्रावयिषति । दुद्रावयिषति । प्रवति । पिप्रावयिषति । पुप्रावयिषति । प्लवति । पिप्लावयिषति । पुप्लावयिषति । च्यवति । चिच्यावयिषति । चुच्यावयिषति । वचनसामर्थ्यादेकेन वर्णेन यणोऽव्यवधानमाश्रीयते । पूर्वसूत्रे त्वनन्तरएव यणि भवितव्यमित्यप्राप्तविभाषेयम् । अपरइत्येव । सुस्रूषति । शुश्रूषति ॥

---

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ पञ्चदशस्तबकावशेषः ॥



भूमिः स्वयं तनुमती मणिपाचिकाया-
माहृत्य सप्तमणिसंपुटिकोदरस्थाः ।
आचारतोऽस्य दधती शुचिसप्तमृत्स्नाः
कृत्स्नाभिलाषवरदस्य पुरोऽवतस्थे ॥ २८८ ॥

शुचिसद्मसृत्स्थाः प्रशस्तमृत्तिकाः, "वल्मीकात् पर्वताग्राच्च सरस्तीराद्ध्रदाद्गजात्। अग्न्यागारात् तु गृह्णीया"दिति भविष्यपुराणोक्ताः, आहृत्य मणिपात्रिकायां दधती सती, पुरोऽग्रतोऽवतस्थे। तनुमती मूर्तिधारिणी ॥ २८८ ॥

मूर्ताः समेत्य ततयश्च महौषधीनां
सर्वौषधीश्च परिगृह्य महौषधीश्च।
अग्रे समासत वनस्पतयश्च पुण्या
वैदूर्यपात्रगतपञ्चकषायहस्ताः ॥ २८९ ॥

"सहदेवा वचा व्याघ्री बला चातिबला तथा। शङ्खपुष्पी तथा सिंही सूर्यावर्ता तथाष्टमी"ति· अष्ट महौषधीः· "मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शठी चम्पकमुस्तं च सर्वौषधिगणः स्मृत" इति सर्वौषधीश्च परिगृह्य, सर्वौषधीनां च ततयः समासतेति चकारात् ॥ २८९ ॥

नानाफलोदकघटीघटिताग्रहस्ता
नानाविधानि च फलानि करे दधानाः।
अभ्याययुस्तत इतो वनदेवताश्च
नानामणीश्वरकरा गिरिदेवताश्च ॥
शङ्खादयश्च निधयो नव सिद्धयोऽष्टौ
चिन्तामणीन्द्रनिकरा अपि कामगव्यः।
कल्पद्रुमा अपि गृहीतमनोज्ञरूपा
दूरे कृताञ्जलिपुटाः पुर एव तस्थुः ॥ २९० ॥

नानाफलानां नारिकेलादीनाम्· उदकपूरिता या घट्यस्तासु घटिता अग्रहस्ता यासां ताः। "इन्द्रनीलमुकुन्दादीन् मकरानन्दकच्छपान्। शङ्खपद्मादिकौ चापि निधीनष्टौ क्रमाद्यजे"दिति क्रमदीपिकानुसारेणाष्टौ। हारावल्यां तु नवैव निधयः। अणिमादयोऽष्टौ सिद्धयः प्रसिद्धा एव ॥ २९० ॥

स्वर्णाम्बराण्युपनिनाय सुमेरुलक्ष्मी-
र्हारावलीरुपजहार हिमालयश्रीः ।
श्रीगन्धमादनभवा कनकारविन्दा-
न्यादाय मानसजलात् स्वयमाजुगुम्फ ॥ २९१ ॥

मानसजलात् तत्रत्यमानसाख्यसरोवरजलात् ॥ २९१ ॥

गन्धोत्तमं मलयजं मलयस्य लक्ष्मी-
र्गोवर्धनस्य दृषदि स्वयमापिपेष ।
कैलाशतो गिरिसुतागिरिशाद्यदृष्टां
तच्छ्रीः समाहरत कामपि रत्नमालाम् ॥ २९२ ॥

तच्छ्रीः कैलाशश्रीः, गिरिसुता च गिरिशश्च तदादिभिरप्यदृष्टाम् ॥ २९२ ॥

मन्दाकिनीसलिलतो विकचानि काले
सप्तर्षिभिर्निजकरैः समुपाहृतानि ।
चन्द्रांशुभिः पुनरथो मुकुलीकृतानि
पङ्केरुहाणि रविहृत्कचयांचकार ॥ २९३ ॥

चन्द्रस्य तदानीं तत्रागत्य स्वीकृतमणिदर्पणात्मकताकस्य अंशुभिः किरणैः ॥ २९३ ॥

वह्निः स्वयं ललितकाञ्चनधूपपात्र्या-
मालम्बमानवरविद्रुमशृङ्खलायाम् ।
उद्यत्पिधानगतरन्ध्रसहस्रधूमं
चक्रे सुचारुसुरसागुरुदारुदाहम् ॥ २९४ ॥

उद्यदुद्गच्छन् पिधानगते रन्ध्रसहस्रे धूमो यतस्तद्यथा स्यात् तथा दाहं चक्रे ॥ २९४ ॥

ज्योतिर्मयेन कनकोत्तमभास्वरेण
पक्षद्वयेन गरुडो विदधे वितानम् ।
भोगान् भुजंगपतयः फणरत्नशेषां-
श्चक्रुर्ध्वजानपि च रत्नमयीः पताकाः ॥ २९५ ॥

भोगान् फणान् ध्वजांश्चक्रुः, फणानां रत्नशेषान् रत्नाग्यान् पताकाश्चक्रुः,अत्र मिथोविरोधिनामपि भगवदनुवृत्तौ निर्वैरत्वादुल्लास एव सर्वेषामुदभूत् ॥ २९५ ॥

श्रीसूक्तयोऽप्यथ परेऽप्यभिषेकमन्त्रा
धृत्वा वपुः किमपि पूरुषसूक्तयश्च ।
आत्मानमेव बभणुर्मधुरैरुदात्त-
मुख्यैः स्वरैर्मुनिगणाहितसाधुवादाः ॥ २९६ ॥

बभणुः शब्दितवन्तः, उदात्तमुख्यैरुदात्तानुदात्तादिभिः ॥ २९६ ॥

गव्यानि पञ्च सुरभिः स्वयमाजहार
पञ्चामृतानि चतुरानन एव देवः ।
ऐरावतः करहृतैः सुरदीर्घिकाया-
स्तोयैर्मणीन्द्रमयकुम्भकदम्बमप्रात् ॥
तूर्याणि नेदुरभितो दिवि देवतानां
देव्यस्तु नन्दनवनीकुसुमान्यवर्षन् ।
गन्धर्वकिंपुरुषचारणसिद्धसाध्य-
विद्याधरा मुमुदिरे ननृतुर्जगुश्च ॥ २९७ ॥

सुरदीर्घिकायाः स्वर्गङ्गायाः, अप्रात् पूरयामास ॥ २९७ ॥

नाट्यं मुखप्रभृतिपञ्चसुसंधिबन्धं
नानाविधं सरसमप्सरसोऽभ्यनैषुः ।

काश्चिन्निरीक्ष्य तमथो मुमुहुर्बभूव
नारायणोरुजनिरेव निकामभक्ता ॥ २९८ ॥

मुखप्रभृतीनां मुखप्रतिमुखगर्भविमर्शनिर्वहणानां पञ्चानां शोभनसंधीनां बन्धो यत्र तत्, नानाविधं रूपकोपरूपकाद्यवान्तरबहुभेदम्, अभ्यनैषुरभिनीतवत्यः ॥ २९८ ॥

एवं रसमये समये पितामहो महोत्सुकहृदयो दयोत्तरतरलतालतासुरभि सुरभिमासाद्य किंचिदुवाच ॥ २९९ ॥

दयोत्तरा तरलता कृपाप्रधानं तारल्यं सैव लता, अनुकम्प्यजनावरणात्, तस्याः कुसुमेन सुरभि, फलाभिव्यञ्जकप्रकाशेन समीचीनमित्यर्थः, तद्यथा स्यात् तथा ॥ २९९ ॥

अयि, अद्य निरवद्यनिरवसरसरसः समयः समयामास मा सरलेऽतः परमिष्यतां विलम्बो लम्बोदरजनकमनुज्ञाप्य समारभ्यतामभिषेकः ॥ ३०० ॥

निरवद्यश्चासौ निःशेषेणावसरेण सरसश्चेति सः, सम्यग्, अयामास प्राप्तः ॥ ३०० ॥

यावत् कृष्णं समया मया गम्यते तावन्मत्प्रियमनुरुन्धतीयमरुन्धतीयमनसूयासूयारहिता च वृत्तरजस्तमोलोपा लोपामुद्रा च मुद्राचतुरा भगवती सर्वसंमानगा नगात्मजा च पुरुगायगायत्री च वेदमाता माता च देवानामदितिरदितिरपीयं च गिरां देवी देवी स्वाहा स्वाहार्यगुणा चेति सर्वा एव तन्निकटमुपसर्पन्त्विति परिप्राप्य तन्निदेशं देशं तमनुसृतासु तासु भगवानपि स्वयं स्वयंभूरनुससार ॥ ३०१ ॥

कृष्णं समया कृष्णस्य निकटम् । साध्वीगणमूर्धन्यत्वेन माङ्गल्याधिक्यादरुन्धत्याः प्राङ्निर्देशः । मुदां रा दानं तत्र चतुरा नगात्मजा पार्वती । पुरु प्रचुरं गायति, अभिधत्त इति पुरुगाया सा चासौ गायत्री

चेति सा । दितिः खण्डनमदितिस्तद्रहिता गिरां देवी सरस्वती । सुष्ठु आहार्या गुणा यस्याः सा ॥ ३०१ ॥

अनुसृत्य च ।

अर्घ्येण पाद्यपयसाचमनीयकेन
वक्त्रेन्दुसीम्नि मधुपर्कसमर्पणेन ।
सिंहासने समुपवेश्य गिरां प्रयत्नैः
पद्मासनः स समपूजयदम्बुजाक्षम् ॥ ३०२ ॥

सिंहासने समुपवेश्य॰ अर्घ्यादिना समपूजयदिति योजना ॥ ३०२ ॥

तदनु तन्निदेशेनैव ।

पञ्चामृतैः सुरभिभिः सह पञ्चगव्ये-
र्भव्यैर्निजस्तनरसैः सुरभिश्च देवी ।
ताभिः समं कमलजासनसन्नियोगात्॰
श्रद्धान्विता शिखरिधारिणमभ्यषिञ्चत् ॥ ३०३ ॥

ताभिररुन्धत्यादिभिः ॥ ३०३ ॥

तदा तदालोकयद्भिरेवमतर्क्यत ।

ज्योत्स्नाभिर्नवनीरदः किमथवा शुक्लेन नीलो गुणः
शुद्धस्फाटिकरत्नकान्तिसलिलैः किंवेन्द्रनीलाङ्कुरः ।
मुक्ताभिः किमु वा तमालतरुणः स्नातः समुद्भ्राजते
किंवा श्यामसरोजमुज्ज्वलविधुक्षोदैर्मुरारेर्वपुः ॥ ३०४ ॥

तदा॰ अभिषेककाले ज्योत्स्नाभिरिति स्नानीयदुग्धदध्यादिवस्तूनां कदाचिज्जलमिश्रितत्वेन तारल्यात् । शुक्लेन गुणेनेति तेषामेव कदाचिज्जलामिश्रितत्वेन नैविड्यात् । शुद्धस्फाटिकेति तेषामेव प्रत्येकमन्ते शुद्धगङ्गोदकेन क्षालनात् । मुक्ताभिरिति तेषामेव कदाचिल्ललाटादिषु कणरूपेणावस्थितेः । उज्ज्वलविधुक्षोदैः॰ उत्तमकर्पूरचूर्णैरिति तेषां सर्वेषां सौरभ्यादुत्प्रेक्षा,यदुक्तं "पञ्चामृतैः सुरभिभि"रिति ॥ ३०४ ॥

तदनु च ।

गायत्रिका च गिरिजा च सुरप्रसूश्च
साऽरुन्धती च परमा पतिदेवतानाम् ।
चूर्णैर्महासुरभिभिः शुभगानपूर्वं
चक्रुर्विरूक्षणमपेक्षितमातृमोदाः ॥ ३०५ ॥

विरूक्षणमभ्यङ्गानन्तरं गन्धचूर्णैरुद्वर्तनम् । अपेक्षितो मातुरिव मोदो हर्षो याभिस्ताः ॥ ३०५ ॥

ततश्च ।

प्रत्येकमन्त्रपरिपूतमहाभिषेक-
द्रव्योज्ज्वलैः शुभजलैः सुरदीर्घिकायाः ।
एकैकशः समुदिताः सनकादयश्च
सप्तर्षयश्च गिरिधारिणमभ्यषिञ्चन् ॥ ३०६ ॥

सुरदीर्घिकाया गङ्गायाः ॥ ३०६ ॥

ततश्च ।

सिन्ध्वादिभिर्निजनिजोदकमर्पयद्भि-
स्तेषां करे स्वजनिनाथ नियोज्यमानैः ।
कृष्णोऽभ्यषेचि रभसोद्गतलोचनाम्भो-
रोमाङ्कुरक्षुभितचित्रपवित्रगात्रैः ॥ ३०७ ॥

तेषां सनकादीनाम् । स्वजनिना स्वयंभुवा । रभसेन हर्षेण· उद्गताभ्यां लोचनाम्भश्च रोमाङ्कुरश्च ताभ्यां क्षुभितानि चित्राणि पवित्राणि गात्राणि येषां तैः ॥ ३०७ ॥

भूयश्च शोणतरसुन्दरगन्धतैले-
नाभ्यज्य शैलतनयादय एव देव्यः ।
कर्पूरपूरितसुशीतसहस्रधारा-
धाराजलैस्तदनु शङ्खजलैरसिञ्चन् ॥ ३०८ ॥

कर्पूरपूरितैः सुशीतैश्च सहस्रधाराख्यस्याल्या धाराजलैः ॥ ३०८ ॥

एवं तस्मिन्नेव समये ।

चिन्ताश्मकल्पतरुकामगवीप्रभाव-
लक्ष्मीप्रसूनसुकुमारकुमारिकाणाम् ।
वर्गेण सूक्ष्मसितकोमलचैलखण्डै-
श्चक्रे निकाममभिषेकजलापसारः ॥ ३०९ ॥

चिन्ताश्मादीनां प्रभावलक्ष्मीः प्रभावमयी संपत्तिस्तया प्रसूता आविर्भाविता याः सुकुमार्यः कुमारिकास्तासां वर्गेण ॥ ३०९ ॥

काचित् केशकलापतोऽथ वदनाम्भोजात् परा वक्षसः
काचिद् बाहुयुगात् परा चरणतो गात्रस्य काचिच्छनैः ।
वासःखण्डमनार्द्रकं विदधती श्रोणीतटे वेष्टितं
वासोऽन्याः स्तिमितं विहाय्य सलिलं तस्मादपासीसरत् ॥ ३१० ॥

केशकलापादितः सलिलम्· अपासीसरत्· अपसारयामास । अनार्द्रकं शुष्कम् । तस्मात्· श्रोणीतटात् । तत्तत्कर्म मातृकल्पानामदित्यादीनां कर्तुमयोग्यमिति कान्तायमानानां कुमारिकाणां सृष्टिः ॥ ३१० ॥

एवं द्विस्त्रिराकेशमापादपद्ममभिमार्ज्य ।

पूर्वोपनीतवसनाभरणानुलेपैः
कन्यागणोऽतिचतुरः सममण्डयत् तम् ।
शैलाधिराजतनयाद्युपदिश्यमानः
केशान् प्रसाध्य निपुणं पुनराबबन्ध ॥ ३११ ॥

चतुरो दक्षः ॥ ३११ ॥

गोगोपगोपवनितादिरसप्रसङ्ग-
स्वाभाविकव्रजविलासमुहूर्तहानेः ।
कृष्णस्य तत्तदुपरोधवशेन सर्वं
स्वीकुर्वतः क्षणमुपद्रववद्बभूव ॥ ३१२ ॥

गोगोपगोपवनितानां रसप्रसङ्गेन स्वाभाविक एव यो व्रजविलासस्तस्य मुहूर्तं व्याप्य हानेर्हेतोः ॥ ३१२ ॥

तथापि तथा पितामहादीनामनुरोधत उद्वेगस्य तरङ्गा रङ्गाहतये तस्य न बभूवुः ॥ ३१३ ॥

रङ्गाहतये, तेषां स्वस्य च रङ्गनाशार्थमित्यर्थः ॥ ३१३ ॥

प्रत्युत भक्तभक्ततया ये यथावत् कुर्वन्ति तथैव तदनुमोदमानो मानोन्नतो गाम्भीर्यमेवालम्बते स्म ॥ ३१४ ॥

मानेनादरेण· उन्नतः ॥ ३१४ ॥

ते स्मयमानमुखाश्चतुर्मुखादयः स्नातमलंकृतमलंकृतकर्माणं तमवलोक्य कल्पतरुप्रसूते सर्वतोभद्रे सर्वतोभद्राभद्रासने समुपवेश्य तेनैव कन्यकागणेन कृतचरणधावनं कारयामासुः ॥ ३१५ ॥

अलमत्यर्थं कृतकर्माणं कृतकृत्यम् । सर्वतोभद्रे पीठे । सर्वतोभद्राया गंभार्या भद्रासने ॥ ३१५ ॥

समनन्तरं विरिञ्चः सर्वोत्कर्षाञ्चिकां चिकारयिषुः पूजां मनसि चिन्तयामास ॥ ३१६ ॥

पूजां चिकारयिषुः कारयितुमिच्छन् । कीदृशीं, सर्वोत्कर्षम्· अञ्चति प्राप्नोतीति सर्वोत्कर्षाञ्चिकाम् ॥ ३१६ ॥

केन करिष्यते मदभिमता मतावपरिच्छिद्यरसा निरपचितिरपचितिरस्य ॥ ३१७ ॥

निरपचितिरपचयशून्या· अपचितिः पूजा ॥ ३१७ ॥

रस्यतमेन केन मन्त्रेण वा भवितव्यं नहि निर्मन्त्रमर्हणमर्हणमिति तमथ चन्द्रशेखरोऽखरोदितवचा निजगाद ॥ ३१८ ॥

अर्हणं पूजनम् । अर्हणं योग्यम्, अर्हतीत्यर्थः । अखरं यथा स्यात् तथा· उदितमुद्गतं वचो यस्य सः ॥ ३१८ ॥

भो भो चतुरानन चतुरा न न चिन्तयन्ति कुमारोऽयमर्चयिष्यति ॥ ३१८ ॥

न न, नहि नहीत्यर्थः, संभ्रमे वीप्सा । कुमारोऽयमिति तर्जन्या मूर्तमष्टादशाक्षरमन्त्रं दर्शयति ॥ ३१९ ॥

इत्युक्तवत्येव व्योमकेशे नाकेशेनाभिमुखमीक्ष्यमाणो महोमहोदय इव गोविन्दाभिषेकपूजोपयुक्तो गोविन्दनामाङ्कितो मूर्तिमानष्टादशाक्षरो महामनुराविरासीत् ॥ ३२० ॥

व्योमकेशे महादेवे । नाकेशेन· इन्द्रेण । महसां महान्· उदय इव ॥ ३२० ॥

तमद्भुतमहसं महसंतोषवर्धकमालोक्य पितामहो महोल्लासमासाद्याहो महामनुरसौ रसौघवर्षी स्वयमाविर्भूतोऽनुभूतो नु मया यत ऋषिरमुष्य नारदो नारदोषहर्ता छन्दश्च गायत्री· उभाभ्यामेव निर्विशिष्टोऽस्मि ॥ ३२१ ॥

महसंतोषवर्धकम्· उत्सवसंबन्धिसुखवर्धकम् । नारदोषहर्ता नरसमूहस्य भक्तिप्रतिबन्धकदुरितहारी ॥ ३२१ ॥

तेनानेनाहमेव कृष्णं देवतामर्चयिष्यामीति संभृतसंभारो भारोपद्विगुणगुणगणो भक्तिवासने*तरवासनारदेन नारदेन तत्सवासनसनकादिभिश्च भक्तिरसध्रुवेण ध्रुवेण च सकलजनमनःप्रह्लादेन प्रह्लादेन च सात्वतमतवसुना वसुना च तथापरैश्च परमभागवतैः समं समुपससार ॥ ३२२ ॥

भा कान्तिस्तस्या आरोपेण मन्त्रकान्तिसंक्रमेण द्विगुणितो गुणगणो यस्य सः । वासनां रदति· उत्पाटयतीति तथा तेन, "रद उत्पादने" ॥ ३२२ ॥

* भक्तिवासेने-इति पा० ।

उपसृत्य च कृतपादशौचं भगवन् पूजार्थमाबद्धपद्मासने पद्मासने चतुर्दिगवस्थितानि चत्वारि मुखानि भगवदभिमुखमुखतयैकमुखीकृत्य हृष्टाभिरष्टाभिर्दृष्टिभिरीक्षमाणे सति भगवत्पूजामहार्घ्यादिभाजनयोग्या महार्घ्यादिभाजनयोग्याः सर्वोपरिभापरिभावितदुग्धा दुग्धाब्धिना समुपानीयन्त दीर्घतरपुङ्खाः शङ्खाः ॥ ३२३ ॥

भगवतः पूजामहस्य पूजोत्सवस्य· अर्घ्यादिपात्रार्हाः शङ्खा दुग्धसमुद्रेण समुपानीताः । कथंभूताः, महार्घ्या बहुमूल्याश्च· आदिभाजनयोग्याश्चेति ते,आदिभाजनयोगं प्रथमार्चनप्रवर्तनोपायमर्हन्तीति ते,भाजनमिति भजतेर्हेतुमण्ण्यन्ताल्ल्युट् ॥ ३२३ ॥

शतधृतिधृतिकर्या तु सुमेरुश्रियोरुश्रियो हाटकघटितास्त्रिपदिकाश्च समाह्रियन्त ॥ ३२४ ॥

एषां त्रिपदिकाः कुतो लभ्या इत्यधैर्ये प्रसक्ते शतधृतेर्ब्रह्मणो धृतिकर्या धैर्यकारिण्या । उरुश्रियो विपुलशोभाः ॥ ३२४ ॥

कैलाशलक्ष्म्या तु प्रमोदवर्धनी वर्धनी स्फटिकेन्द्रस्य ॥ ३२५ ॥

वर्धनी मङ्गलघटी ॥ ३२५ ॥

हिमगिरिश्रिया श्रियापरिमितानि सभासभाजनानि भाजनानि पुष्पादीनां तत्क्षणादेव देवताभिर्वनानां गन्धपुष्पाक्षतयवकुशाग्रतिलसिद्धार्थार्घ्यद्रव्याणि श्यामाकदूर्वाकमलापराजिताराजितानि पाद्यद्रव्याणि सुजातिजातिकक्कोललवङ्गान्याचमनीयद्रव्याणि परमेष्ठगन्धो गन्धो धरण्या नन्दनवनदेवतया तु कुसुमानि कल्पतरुणा तरुणाभरणानि पीताम्बराणि वराणि ॥ ३२६ ॥

अर्घ्यद्रव्याणीत्यादिषु सर्वत्र वचनव्यत्ययेनापि समाह्रियन्तेत्यनेनानुषङ्गः, सिद्धार्थः श्वेतसर्षपः ॥ ३२६ ॥

पुरपुरःसरसरसागुरुपरिमलमलयजादिधूपो घनसारसारवर्तिवर्तिकः सुरभिसुरभिसर्पिष्कः प्रदीपश्चाग्निवल्लभया कामगव्या गव्यानि नानाविधानि देवमात्रा मात्रारहितानि हितानि पूपादीनि ॥ ३२७ ॥

पुरपुरःसरो गुग्गुलयुक्तः, "कौशिको गुग्गुलः पुर" इत्यमरः । घनसारः कर्पूरः । सुरभीनि सुरभेः सर्पींषि यत्र सः । मात्रारहितानि· अपरिमितानि ॥ ३२७ ॥

दलितोद्वेगानि दलितोद्वेगानि जाम्बूनदाभताम्बूलीदलानि ताम्बूलानि पौलोम्यानुलोम्यानुरञ्जितमनसा ॥ ३२८ ॥

दलितः खण्डित उद्वेगो मुखजाड्यं यैस्तानि । दलितानि शिल्पकौशलकर्त्तनाद् दलायमानानि· उद्वेगानि गुवाकफलानि यत्र तानि, "गुवाकः क्रमुकोऽस्य तु फलमुद्वेग" मित्यमरः । पौलोम्या शच्या ॥ ३२८ ॥

इत्येवं युगपदेव देवदेवीभिरभितः समाहृतेषु पूजोपकरणेषु विचक्षणोऽपि स्वयं स्वयंभूरानन्दमन्दप्रज्ञतयाज्ञतया मुग्ध इव मन्त्रर्षिणा नारदेन दर्शितक्रमो मूलमन्त्रमुच्चार्य भगवन्तमर्घ्यादिक्रमेण क्रमेण यावत् पूजयितुमारेभे ॥ ३२९ ॥

क्रमेण शक्त्या ॥ ३२९ ॥

तावदेव ध्वनिपरिवर्तः कृत इव देवदुन्दुभिभिः· जन्मान्तरमासादितमिवाप्सरसां लास्येन लब्धयौवनमिव गन्धर्वादिगानं जरातः प्रतिनिवृत्य पुनस्तरुण इव चारणादिस्तवः· हर्षस्यापि हर्षः समुत्पन्न इव, एवं स एव समयः समयान्तरमिव भवन् सर्वेषां चित्तं चित्तान्तरमिव जनयामास ॥ ३३० ॥

ध्वनीति, देवदुन्दुभ्यादीनां तेषां प्रतिस्वकर्मसु तदानीमभूतपूर्वं वैचक्षण्य श्रीभगवच्छक्तिप्रभावात् स्वत एवोद्भूतमिति भावः ॥ ३३० ॥

ततः सुमहा महासेनो रसेनोरसिलस्तदातपत्रं तस्य शिरसि निदधार ॥ ३३१ ॥

सुमहाः सुतेजाः· महासेनः कार्त्तिकेयः· तस्य मूर्धनि रसेन प्रीत्या· आतपत्रं छत्त्रं दधार। उरसिलः प्रशस्तवक्षा इति सौन्दर्येण बलिष्ठतया च तस्यैव तद् योग्यमिति व्यञ्जितम्। "स्यादुरस्वानुरसिल" इत्यमरः ॥ ३३१ ॥

तस्मिंस्तदारूढे रूढेन परमानन्देन महर्षिगणगीतमन्त्रपुरःसरं पुरः स रञ्जितमनाः परमेष्ठी परमे ष्ठीव्यन्मणिमहःपटलं तन्मुकुटवरं श्रीकृष्णशिरसि निबध्य संपादितविशेषकं विशेषकं च विलिख्य भाले भालेपललित इव सकलदेवदेवेन्द्रो गोविन्दोऽसीति निजगाद ॥ ३३२ ॥

तस्मिंश्छत्त्रे तदारूढे तन्मूर्धोपरिस्थे सति परमे श्रीकृष्णशिरसि परमेष्ठी ब्रह्मा तन्मुकुटवरं निबध्य। कीदृशं, ष्ठीव्यतामिव मुखेभ्य उद्गिरतामिव मणीनां महःपटलानि यत्र तद् विशेषकं तिलकं संपादितं विशेषेण कं सुखं येन तद् भाले विलिख्य। कीदृशे, भानां कान्तीनां लेपेन प्रलेपेनेव ललिते ॥ ३३२ ॥

गदिते च तथा तेन सर्व एव महर्षयो हर्षयोगेन सनन्दनादयो नादयोगेन तुष्टुवुः ॥ ३३३ ॥

नादयोगेन· उच्चैः शब्दयोगेन ॥ ३३३ ॥

यथा।

जय श्रीमद्वृन्दावनमदन नन्दात्मज विभो
प्रियाभीरीवृन्दारिक निखिलवृन्दारकमणे।
चिदानन्दस्यन्दाधिकपदरविन्दासव नमो
नमस्ते गोविन्दाखिलभुवनकन्दाय महते ॥ ३३४ ॥

प्रिया· आभीरी वृन्दारिका यस्य हे तथाभूत। स्वयं च निखिलानां वृन्दारकाणां देवानां रूपवतां वा मुख्यानां वा मणे रत्नसदृश। चिन्म-

यस्यानन्दस्य स्यन्दः क्षरणं यतस्तथाभूतोऽधिकः पदारविन्दयोरासवो मकरन्दो यत्र तथा ॥ ३३४ ॥

ततश्च ।

पूजान्ते सहतुम्बुरु-
रुरुपरितोषेण रूढरोमाञ्चः ।
गिरिवरधरणक्रीडां
नारद उपवीणयामास ॥

ततश्च ।

मन्दाकिनीसमवगाहविधौतभूति-
मालाकपालभुजगाभरणानि हित्वा ।
मौलीन्दुकान्तिकमनीयमणीन्द्रदीपै-
र्नीराजनामथ चकार पतिः पशूनाम् ॥ ३३५ ॥

मन्दाकिन्यत्र मानसगङ्गैव ॥ ३३५ ॥

एवं कृते पूजाङ्गे तस्मिन्नाराचिके पुनरभिषेकमहोत्सवाङ्गं मही गन्धशिलाधान्यादिभिर्महर्षिगणगीतप्रत्येकमन्त्रपूतैरेकैकशः श्रीकृष्णाशिरः संस्पृश्य पुनः पुनः काञ्चनभाजनस्थितैर्मिलितैरेव सकलैः पूर्ववन्मन्त्रान्तरपाठपूर्वकं महानीराजनां च विदधे ॥ ३३६ ॥

महोत्सवाङ्गमिति महानीराजनामित्यस्य विशेषणमाविष्टलिङ्गम् ॥ ३३६ ॥

ततश्चाचारतो गायत्री गौरी चारुन्धतीप्रभृतयो मुनिपत्न्यश्च देवमातरो देवपत्न्यश्च मङ्गलदीपकलिकाभ्यामन्योन्यविपर्यस्तविन्यस्तप्रकोष्ठकरतलाभ्यामेकैकशो नीराजयामासुः ॥ ३३७ ॥

अन्योन्यं विपर्यस्तेन व्यत्ययेन विन्यस्तौ प्रकोष्ठौ ययोस्ताभ्यां करतलाभ्यां, वामप्रकोष्ठे दक्षिणप्रकोष्ठमुपर्यधोभावेन तिर्यग्विन्यस्य स्व-

वामे दक्षिणकरतलधृतया स्वदक्षिणे च वामकरतलधृतया दीपशिखये-त्यर्थः ॥ ३३७ ॥

एवं वृत्ते महोत्सवे भगवानात्मयोनिर्भगवन्नैवेद्यं विष्वक्सेनगरुडादिपरमभागवतेभ्यो विभज्य दत्त्वा शङ्खादिनिधिवर्गकल्पतरुचिन्तामणिकामधेनूरादिदेश कालोचितम्, भो भोः सम्प्रति प्रतिपन्ने भगवन्महोत्सवे ।

देवोपदेवमुनयश्च तदङ्गनाश्च
नागेश्वराश्च गिरिकाननदेवताश्च ।
ये चाप्सरःप्रभृतयोऽप्यपरे समस्ता-
स्तान् भूषयन्तु विविधं परिधापयन्तु ॥

इति तन्निदिष्टा दिष्टातीतफलप्रदाः प्रत्येकं परमसुभगभगवदुत्सवावलोककारिमाचमेव ते वासोऽलङ्कारतिलकताम्बूलैरर्हयामासुः ॥ ३३८ ॥

ते शङ्खनिध्यादयः, "पुमान् स्त्रिये" त्येकशेषात् पुंस्त्वम् ॥ ३३८ ॥

अनन्तरमनन्तरहसो महोत्सवस्य परिसमाप्तौ श्रीकृष्णं प्रदक्षिणीकृत्य कृत्यकोविदाः कोविदारा इव सुमनोरक्ताः पितामहादयो महादयोद्धुराः सद्य एव तिरोदधुः, केवलं शक्रसुरभी सुरभीतिहारिणस्तस्य पुरतः क्षणमतिष्ठताम् ॥ ३३९ ॥

कोविदाराः काञ्चनारवृक्षाः, सुमनोभिः पुष्पै रक्ता अरुणाः, पक्षे शोभनमनोभिरनुरागिणः । महादयोद्धुरा इति, दया चात्र इन्द्रविषयिका भगवदभिषेकोत्सवैः सर्वलोकविषयिका च ज्ञेया ॥ ३३९ ॥

नैतदाश्चर्यं नेदमधिकमैश्वर्यं नेदमतिरस्यं चास्य वैभवं वै भवन्ति यस्यामी केचिदंशाः केचिदंशांशाः केचित् कलाः केचिद्विभूतयः, तैः कृतेऽस्यादरे स्यादरे न किंचिदपि वैचित्र्यम् ॥ ३४० ॥

वैभवं प्रभुत्वं, वै निश्चितं भवन्ति, तैरादरोऽस्य कृते न किमपि वैचित्र्यं स्यात्, अरे· इति स्थूलधियः प्रति ससंरम्भं संबोधनम् ॥ ३४० ॥

अथ तिरोहितेषु तेषु चतुर्मुखमुखविबुधवर्गेषु पुरोऽवस्थितं पुरंदरमदरमनीषमनीषदनुग्रहोदयसदयसरसतरं तरङ्गितकौतुकः किमपि कृष्णो निजगाद ॥ ३४१ ॥

अदरमनीषं निर्भयबुद्धिम् ॥ ३४१ ॥

कथय शतमन्यो मन्योरुपशमस्ते जातः, न त्वमन्तरङ्गोऽन्तरङ्गो[1]पयितुमर्हसि, न मया नमयामासे तव मदोऽयमुद्रोहेण मुद्रोहेण केवलम् ॥ ३४२ ॥

कथयेत्यादिना प्रणयपरिहासेन किंचित् सख्यांशमुपस्थाप्य तेन च सलज्जं सकम्पं च शङ्कमालक्ष्य पुनस्तं स्वस्यीकर्तुम्· अधिकृतदासोचितभावानुकूलस्वप्रभुताविष्कारेणाह, तवायं मदो मया· उद्रोहेण· उद्रिक्तेन द्रोहेण न नमयामासे, किंतु केवलं मुद्रोहेण तव या मुद्रा मदमयी तस्या ऊहेन, यद्वा मुदो हर्षस्य रोहेण· उत्पत्त्या, ईदृशं कौतुकं द्रष्टुमिति भावः ॥ ३४२ ॥

यतः स्वजनमदो मदोजसा न सह्यते स्वजनो हि मत्तो मत्तो हि दण्डमर्हति ॥ ३४३ ॥

मदोजसा मत्तेजसा कर्त्रा, मत्तो मदयुक्तः, मत्तो हि मत्सकाशादेव ॥ ३४३ ॥

शतमख मखभङ्गस्तेऽनुग्रहत एव कृत इति मातः परं परंतप मामसूयितुमर्हसि याहि सुखेन भुज्यतां निजमैन्द्रं पदं संपदं संततां तामाश्रित्य मा परं प्रमत्तेन भवितव्यमिति सानुकम्प्यमुदितो मुदितोऽतिसरसभगवद्दुलमानकृपाकशासनः पाकशासनः सप्रश्रयं प्रणम्य

१ संधिः प्राग्वत् ।

प्रदक्षिणीकृत्य च भगवन्तं निजपुरमेव जगाम गामपि सुरभिं सुरभिं कृत्वा प्रणयपरिमलेन विमलेन विसर्ज्य स्वीकृतपूर्ववेष एव एकान्तकान्तलावण्यो निमेषमात्रात् कुतोऽपि समागत इव श्रीकृष्णोऽपि व्रजमाविवेश ॥ ३४४ ॥

अतिसरसां भगवतो वलमानां कृपां कायति गायति व्यनक्तीति तादृशं शासनं यत्र सः ॥ ३४४ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे गोवर्धनोद्धरणो नाम पञ्चदशः स्तबकः ॥ १५ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां पञ्चदशस्तबकसंगमनम् ॥ १५ ॥

॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ षोडशस्तबकारम्भः ॥

अथ कथकजनकथकथामोदमोदकारिहारिविचित्रचरित्रचरितार्थीकृततदितरकथाश्रवणे ॥ १ ॥

श्रुत्वा केशाहृतं तातं केशवे तत्पुरं गते ।
षोडशे गोपिकामोहो गोपानां ब्रह्मदर्शनम् ॥

अथ भगवति रतिरसवतां व्रजभुवां जनानां परमानन्देन कियत्सु दिवसेषु यत्सु गच्छत्सु सत्सु कदाचिद्गोपाधीशो द्वादशीपालनकृतादरतया निशाशेष एव शमनस्य स्वसारं यमुनां स्नातुमवजगाहे । भगवति कथंभूते, कथकजनानां कथा यत्र तथाभूताभिः कथाभिः किं हर्षस्यापि हर्ष इतिवत् मोदस्यापि मोदकारीणि हारीणि विचित्राणि चरित्राणि यानि तैश्चरितार्थीकृतानि रलयोरैक्यात् गतार्थीकृतानि तदितरकथाश्रवणानि येन तस्मिन् ॥ १ ॥

श्रवणेन्द्रियकृतार्थताकारिगुणावलीले लीलेहितहृतसकलजनमानसे मानसेव्यमानरूपलक्ष्मीके ॥ २ ॥

श्रवणेन्द्रियस्य कृतार्थकारिणीं गुणावलीं लाति गृह्णातीति तस्मिन्। लीला नेत्रान्तचरणाद्यङ्गभङ्गाः, ईहितानि गोवर्धनोद्धारणानि कर्माणि। मान आदरः ॥ २ ॥

लक्ष्मीकेलिकलाकलापतोऽपि परमसंगोपरमणीयगोपरमणीयशःप्रदकेलिकेऽलिके विलसत्तरकाश्मीरविशेषके ॥ ३ ॥

लक्ष्म्याः केलिकलासमूहतोऽपि परमसंगोपाः परमरहस्या रमणीया रम्या गोपरमणीनां यशःप्रदाः केलयो यस्मिन्। अलिके ललाटे विलसत्तरं काश्मीरविशेषकं कुङ्कुमतिलकं यस्य तस्मिन् ॥ ३ ॥

विशेषकेशरकुसुमसुमनोज्ञकेशकलापे कलापेशलगोपवनितानितान्तसौभाग्यस्वरूपे रूपेण जितकोटिकन्दर्पे ॥ ४ ॥

विशेषेण केशरकुसुमैर्वकुलपुष्पैः सुमनोज्ञः केशानां कलापो भूषणं यस्य तस्मिन् ॥ ४ ॥

दर्पेणाधरीकृतसकललोकपाले कपालेश्वरादिसर्वदेवाभिवादितेऽदितेरपत्यात्ययहारिणि हारिणि व्रजपुरपुरन्दरनन्दने नन्दनेश्वरमदखण्डनाय गोवर्धनधृत्या गोवर्धनधृत्या च गोविन्दनामालंकुर्वति भगवति रतिरसवतां व्रजभुवां परमानन्देन कियत्सु यत्सु दिवसेषु ॥ ५ ॥

अत्ययोऽतिक्रमः। गोवर्धनधृत्या च कान्तिवर्धिनी या धृतिर्धीरता तया च ॥ ५ ॥

पूर्वपूर्ववत् सह सहचरैस्तस्मिन्नपि गोचा गोचारणादिकेन विहारेण रसमयं समयं रचयित्वा गमयति सति ॥ ६ ॥

गोचा गां कान्तिमञ्चता प्राप्नुवता ॥ ६ ॥

कदाचिद् घोषाधीशो धीशोधिकायामेकादश्यामुपोषितः पोषितश्च तदामोदेन द्वादशीपालनकृतादरतया दरतया च तस्याः सत्वरो निशाशेषेऽनिशाशेषेहितसुकृतैस्त्रिचतुरैरतिचतुरै रतिमद्भिर्बन्धुजनैः समं समुपेत्य प्रकटितस्वसारं स्वसारं शमनस्य मनस्यवहितः स्नातुमवजगाहे ॥ ७ ॥

धियं बुद्धिं शोधयतीति तस्यां धीशोधिकायाम् । तस्या द्वादश्या दरतया· अल्पतया हेतुना सत्वरस्त्वरायुक्तो निशाशेषे रात्रेश्चरमयाम एव "कलार्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि । आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शंभुशासनात्" ॥ इति स्मृतेः। अनिशं निरन्तरमेव· अशेषेण निःशेषेण साङ्गोपाङ्गतया· ईहितानि कृतानि सुकृतानि यैस्तैः । प्रकटितस्वसारमिति स्नानक्रियाविशेषणम् । तत्र द्वादशीपारणानुरोधेनासुरकालेऽपि मे जले प्रवेशो नासमञ्जस इति स्ववलप्रकटनं स्वसङ्गिनस्तत्र समुत्साहयितुमिति ज्ञेयम् । अवहितः सावधानः ॥ ७ ॥

ततश्च स्नानसमसमयान्यथाभावेन जातप्रतिघाः प्रतिघातक्षिप्तचेतसः प्रचेतसः पुरसदो रसदोत्तमचरितं भगवतो जनकं जनकन्दनास्ते प्रसह्यासह्यातिक्रमं तमपां पत्युरभ्यासमभ्यासमनयन्त ॥ ८ ॥

स्नाने समः समञ्जसो यः समयस्तस्यान्यथाभावेन जातप्रतिघा उत्पन्नक्रोधाः प्रतिघातेन जलावघातमात्रेणैव क्षिप्तचेतसः प्रचेतसो वरुणस्य पुरे सीदन्तीत्यज्ञत्वं जनानां कन्दना उद्वेजकाः प्रसह्य बलात्· अपां पत्युर्वरुणस्य· अभ्यासं निकटम्· अभि· आभिमुख्येन· आ सम्यक्· अकष्टेन समिति संगत्या· अनयन्त ॥ ८ ॥

ततस्तटस्थास्तटस्था इव किमिदं किमिदमिति जातसंभ्रमा भ्रमापहं श्रीकृष्णमुद्दिश्य तारस्वरं चुक्रुशुः ॥ ९ ॥

तटस्थाः कूलस्थितास्तटस्था इव· उदासीना इव तत्प्रतीकाराशक्तेः सह गमनासंभवाच्च तथात्वेनोत्प्रेक्ष्यन्त एव ननु वस्तुतस्तटस्था इति । भ्रमम्· अनिष्टाशङ्कामयम्· अपहनिष्यतीति तम् ॥ ९ ॥

हन्त हन्तरसुराणां सुराणां प्रतिकर्तरार्तबन्धो बन्धोपशमन कृष्ण पाहि पाहि भो अत्याहितमत्याहितमेष ते पिता पितामहादेरपि माननीयो नीयते यमुनामवगाहमानो मानोद्धतैः कैश्चन तन्महाबाहो भवानद्य चायतामचायतामतिविपदं त्वां विना विनाशयितुं कः क्षमः ॥ १० ॥

हन्तरित्यादिविशेषणचतुष्टयेन दुष्टनिग्रहशिष्टपालनदीनवात्सल्यबद्धत्रायकत्वलक्षणा गुणाः प्रस्तुतोपयोगिन उक्ताः । पाहि पाहीत्यादिद्विरुक्तिर्भयेन । मानोद्धतैर्गर्वोद्धतैः । अत्र· आ· अयताम्· आगच्छतु ॥ १० ॥

इति गोदुहामार्तस्वरं स्वरंहसा विसारिणं श्रीकृष्णः समाकर्ण्य माकर्ण्यमतिविरसत्वेन दुरावारा वारां पत्युरनुचरापसदानां सदानान्ध्यवर्जितानामक्रियेयमिति जानन् यथास्थित एव तरुणवरुणवरसुकृतकृतसमाकर्ष इव तत्पुरपुरस्कारकारणत एव तत्र समभिजगाम ॥ ११ ॥

अतिविरसत्वेनं मा कर्ण्यं न कर्णहितम् । वारां पत्युर्वरुणस्यानुचरापसदानां भृत्याधमानामियमक्रिया कुकर्म· इति जानन् परामृशन् । अक्रिया कथंभूता, दुरावारा तेनापि वारयितुमशक्या, तस्य को दोष इति भावः । सदा सत्सु वा· अनन्धस्य भाव आनान्ध्यं चक्षुष्मत्त्वं तद्वर्जितानाम् । तरुणं वरुणस्य यत् सुकृतं तेन कृतः समाकर्षो यस्य तथाभूत इव । तत्पुरस्य पुरस्कार आदरः साफल्यमिति यावत् स एव कारणं हेतुस्तत एव, निजसंनिधानेन तत्पुरं कृतार्थीकर्तुमित्यर्थः । तत्र वरुणपुरे ॥ ११ ॥

अथ तत्र गतवति भगवति प्रचेतःसदनं चेतःसदनं बभूव गोकुलभुवां च कुलभुवां च बालानाम् ॥ १२ ॥

चेतःसदनं चेतसोऽवसादः, "षद्लृ विशरणगत्यवसादनेषु" । गोकुलभुवां व्रजवासिमात्राणां, कुलभुवां कुलजानां बालानां रमणीनाम् ॥१२॥

न भवति यद्यपि सुदृशां
सदावलोको हरेस्तदपि ।
एकग्रामनिवासो
ह्येकालयवासवद्भाति ॥

तेन प्रवासवासरमिव तं भगवतः श्रीकृष्णस्य विदित्वानुरागिण्योऽबला बलापायपातुकशरीरा इव समासत क्षणमपि युगसहस्रमिव मन्यन्ते स्म ॥ १३ ॥

बलस्यापायेन पातुकानि पतनशीलानि शरीराणि यासां ता इव ॥ १३ ॥

न शृणोति नैव पश्यति
न वदति न स्पन्दतेऽङ्गनाविततिः ।
अन्तःकरणमिवास्या
गतमिव कृष्णस्य सङ्गेन ॥ १४ ॥

बलापायेत्यादिना "चिन्तात्र जागरोद्वेगौ तानवं मलिनाङ्गता । प्रलापो व्याधिरुन्मादो मोहो मृत्युर्दशा दशे"त्यासां द्वित्रा दशाः सूचिता अप्यन्तर्भाव्यसहसैव दशम्यपि दशा· आसन्नप्राया बभूवेत्याह । न शृणोतीति मोहः ॥ १४ ॥

जीवितमिव न विलोलं
प्रेमास्यास्तेन जीवितेऽपि गते ।
प्रियविरहे खिन्नाङ्गीं
राधां प्रेमैव जीवयति ॥ १५ ॥

वृन्दावनेश्वरी तु दशमीमिव दशां संश्रितवती, ननु तर्हि संवीजनचन्दनसेकादिकं परिजनैः किमर्थं कृतं तत्राह जीवितमिवेति, अयमर्थः, जीवितेन हि प्रियविरहानलज्वालां सोढुमसमर्थेन झटित्येव तस्या

देहान्निष्क्रान्तवता स्वचापल्यदोष एवोपार्जितः, प्रेम तु महास्थिरं तादृश्या ज्वालयापि दुर्जरं प्रत्युत प्रतिक्षणं वर्धमानं सत् स्वशक्त्या तद्देहं संजीव्यैव रक्षितुं स्वस्थैर्यसाद्गुण्यमेव प्रथयामास· इति, एवं च जीविते नष्टेऽपि न प्रेमास्याः क्षीयत इत्यायातम्, इदमत्र तत्त्वं, करुणविप्रलम्भेऽस्मिन्ननिष्टाशङ्कामयेऽपि श्रीगर्गादिसर्वज्ञवाक्यविश्वासात् पुनः प्राप्तिप्रत्याशया मदन्या का वा तदा मत्कान्तं सुखयितुं पारयिष्यति मद्दशां श्रुत्वा तस्यापीदृशी दशा नूनं भविष्यतीति शङ्कया च कृच्छ्रेणापि प्राणधारणमेव दुष्करं प्राणत्यागश्च सुकर एवोक्तन्यायेन प्रेमांशप्रातिकूल्योद्भावकश्च, तेनास्या जीवनं प्रेमबलेनैव रक्षितमगतमेव गतत्वेनोत्प्रेक्षितम् ॥१५॥

तथापि ।

संवीजनेन नलिनीदलतालवृन्तैः
सेकेन चन्दनजलैस्तनुदाहमस्याः ।
शेकुर्न संशमयितुं यदि बन्धुवध्वो
मूर्च्छा सखी किमपि निर्वृतिमाततान ॥ १६ ॥

तेन नवम्येव दशास्याः प्राप्तावसरेत्याह संवीजनेत्यादि ॥ १६ ॥

प्रशिथिलतूलकधूनन-
मूलकमनुमीयते श्वसितम् ।
तेन च जीवनमस्याः
सखीजनैस्तेन च स्वायुः ॥ १७ ॥

प्रथिशिथिलस्य तूलकस्य धूननं कम्पनमेव मूलं गमकं यस्य तत्· श्वसितम् ॥ १७ ॥

आयाति कृष्ण इति बन्धुवधूजनोक्त्या
कृच्छ्रेण पङ्कजदृशा स्थिरपक्ष्मतारे ।
उन्मीलिते बत यथैव दृशौ तथैव
ते तस्थतुर्लिखितपङ्करुहद्वयीव ॥ १८ ॥

यथैव· उन्मीलिते तथैव तस्थतुरिति, सखीवाक्यविश्वासान्मूर्च्छाभङ्गे सति· उन्मीलिताभ्यां दृग्भ्यां कृष्णमदृष्ट्वा· एता मृषैव मामाश्वासयन्तीति तदैव पुनर्मूर्च्छामालम्बितवत्यास्तस्या जाड्येन दृशोर्निमेषाभावात् ॥ १८ ॥

कृष्णः क्षणादिह समेष्यति सर्वथेति
स्वालीजनस्य वचने यदपि प्रतीतिः ।
हन्त क्षणो यदि स एव युगायते तत्
किं दूषणं बत तथा विरहव्यथायाः ॥ १६ ॥

क्षणादिहेति, कृष्ण आयातीति नास्माभिर्मृषोक्तं किंतु क्षणमात्रविलम्बेनेति किमिति न विश्वस्यत इत्यभिप्रायज्ञानात् ॥ १९ ॥

उन्मील्य नेत्रमथ कृष्णमलोकयन्त्या
हृत् पूर्वतोऽपि नितरां परितप्तमस्याः ।
हृद्वर्तिकृष्णमहसः पटली यदेषा
धाराञ्जनाश्रुकपटेन बहिर्बभूव ॥ २० ॥

उन्मीलिते बत यथैव दृशौ तथैवेत्यत्र किंचिदवर्णितमवशिष्टं पुनः पद्येनैव वर्णयितुं तदेवोद्दृङ्कयति· उन्मील्येति, पूर्वतोऽपि तप्तमिति तप्ततैलकटाहमध्ये जलविन्दुपातादिव तन्मध्यतः सखीजनाश्वासप्रक्षेपात्, हृद्वर्तीति, तत्तापसहनासमर्थैवेति भावः ॥ २० ॥

एवं गतवति करुणावरुणालये वरुणालये तमालोक्यससंभ्रममुपगम्य प्रणम्य प्रणयाभिभूतः प्रचेताः प्रचेताश्चर्ययाश्चर्ययार्घ्यादिकया कयाचन पूजयित्वा जयित्वादधृष्यमहसं महसंचयमिव मूर्तिमन्तं मूर्तिमन्तं चिदानन्दरसमिव भगवन्तं तुष्टाव ॥ २१ ॥

प्रचेता वरुणः प्रचेताः प्रकृष्टचित्तवान्· चर्यया परिचर्यया· आश्चर्ययापूर्वया· अर्घ्यादिकया पूजयित्वा तुष्टाव । कथंभूतं, जयित्वात् सर्वोत्कर्षवत्त्वात्· अधृष्यतेजसं महसंचयम्· उत्सवसमूहं मूर्तिमन्तमिव

देहधारिणमिव' इति सपरिकरनिजपरमोल्लासः' चिदानन्दरसं मूर्तिमन्तं घनीभूतमिवेत्यननुभूतचरपरमरसास्वादश्च सूचितः, "मूर्तिः काठिन्यकाययो"रित्यमरः ॥ २१ ॥

नमस्ते करवाम वामदेवादिदेवादिदेव देवकीगर्भरत्न रत्नगर्भाभारावतारकावतार कामकोटिकमनीय कृतार्थोऽहमद्य निरवद्यनिरवकाशप्रकाश प्रकटपरमानन्द नन्दतनय तव चरणरजो रजोऽपहारि मम पुरीपुरीतत्परिशोधनं समजनि जनिरपि मे कृतार्था ॥ २२ ॥

वामदेवः शंभुस्तदादीनां देवानामप्यादौ दीव्यतीति हे तथाभूत, तदपि देवकीगर्भमणिखनौ रत्न नीलमणिस्वरूप, किमर्थं, रत्नगर्भायाः पृथिव्या भारावतारकः' अवतारो यस्य तथा, न केवलमेतदेव प्रयोजनं किंतु स्वरूपमाधुर्यानुभावनेन जगदपि कृतार्थयितुमित्याह कामकोटीत्यादिभिस्त्रिभिर्विशेषणैः, तत्र प्रथमेन देहसौन्दर्यस्य द्वितीयेन तच्छवीनां तृतीयेन तत्स्वरूपतत्त्वस्य विवृतिः, निरवद्यश्चन्द्रसूर्यादीनामिवातिशीतौष्ण्यादिरहितो निरवकाशोऽवच्छेदशून्यः प्रकाशो यस्य तथा, प्रकटेति, प्रकटत्वं प्रपञ्चगोचरीभूतत्वं परमत्वं मायातीतत्वं, स्वीयभावानुसारेण पूर्वं देवकीगर्भरत्नेत्युक्त्वापि सम्प्रति माधुर्यनिमग्नचित्ततया प्राह नन्दतनयेति, तव चरणरजो मम रजोऽपहारि रजोगुणहन्तृ समजनि, तथा मम पुर्यां पुरीं स्वकाटीवर्गं ये तन्वन्ति ते पुरीपुरीततो मण्डलेश्वरास्तेषामपि परिशोधनं, "गमः क्वा"वित्यत्र "गमादीनामिति वक्तव्य"मिति तनोतेः क्विप्यनुनासिकलोपे रूपम् ॥ २२ ॥

किंच ।

कालाख्यभवदणुभङ्गिभङ्गुरमिममुपलभ्यविभवं विभवन्तं भवन्तं यन्न विद्मो विद्मोहेन तत्र तत्रभवत्या भवत्यायतो हेतुः प्रभावो भवन्मायायाः ॥ २३ ॥

विभवः संपत्तिः, विभवन्तं विभुं, विद्मोहेन ज्ञानमोहेन, आयतो विस्तृतो हेतुर्भवति ॥ २३ ॥

मा यायावरादिमुनिनिकरदुर्गयानयातः परं परंपरागतेन मोहेन नष्टदृशो मादृशो माधव कारयितुमर्हसि ॥ २४ ॥

यायावरादीनामपि मुनीनां निकरैर्दुर्गया दुस्तरया॰ अनया मायया॰ अतः परं मद्विधान् नष्टदृशः कारयितुं मा॰ अर्हसि ॥ २४ ॥

हन्त हन्तरघासुरस्य सुरस्यचरित तापकृतापकृताप्युपकृतं मे तव जनकं जनकंसन समानयता मानयतात्मनः सौबुद्ध्यं बुद्ध्यंशलेशाभाववतापि मदनुचरेण ॥ २५ ॥

मदनुचरेण तव जनकं समानयता मम तापकृता तथा॰ अपकृता भृत्यापराधेन स्वामिनो दण्ड इति न्यायेन ममापकारं कुर्वतापि॰ उपकृतमेव । हे जनकंसन जननाम्नोऽसुरस्य कंसन घातक, "कसि हिंसायां" हे जनार्दनेत्यर्थः । मदनुचरेण कीदृशेन,आत्मनः सौबुद्ध्यं सुबुद्धित्वं मानयता,वस्तुतस्तु बुद्ध्यंशलेशस्याप्यभाववता ॥ २५ ॥

रेणवस्ते चरणकमलयोरनयोरनयोद्धुरस्य मम शिरःशेखरीभूताः खरीभूताः किल्बिषविषज्वालाश्च शान्ताः ॥ २६ ॥

अहो परमदुर्लभं वस्तु मया कृतागसापि लब्धमित्याह रेणव इति, किल्बिषमपराधः पापकूटं संसारो वा तद्विषज्वालाश्च शान्ताः । कीदृश्यः, खरीभूताः ॥ २६ ॥

तेन वन्दे नवन्दे*वाधिदेव ते रुचिरुचिरताजितनवतमालमालम्बमानवनमालमाललितशतपत्त्रपत्त्रनेत्रमाबन्धुरोदरमदरमहःपूरमायतवृत्तद्विबाहु बाहुलेयजनकादिवृन्दारकवृन्दवन्द्यचरणकमलमिदं वपुरपूर्वम् ॥ २७ ॥

हे देवाधिदेव तेन हेतुना तव नवं वपुरिदं वन्दे । कथं भूतं, रुचीनां कान्तीनां रुचिरतया जितो नवतमालो येन तत् । आ सम्यक्॰

* संधिः प्राग्वत् ।

लम्बमाना वनमाला यत्र तत् । आयतौ· आजानुलम्बिनौ वृत्तौ सुवलितौ द्वौ बाहू यत्र तत् । वाहुलेयः कार्त्तिकेयः ॥ २७ ॥

इत्यभिष्टुत्य चरणकमलममलमधुगन्धिनाम्बुनाम्बुनाथो निजकरकिशलयेन धावयामास धावयामास च सकलापदं पदं सकलसौभाग्यस्य ॥ २८ ॥

सकलसौभाग्यस्य पदं चरणकमलं धावयामास चालयामास, सकलापदं धावयामास द्रावयामास, "धावु गतिशुद्ध्योः" ॥ २८ ॥

तदनु दनुजदमनं पुनर्जगाद भगवन्ननुगृहाण गृहाण यद्रोचते च ते वस्तुषु मदीयलोकरत्नभूतेष्वेतेष्वेतदखिलं तवैव वै बहुना किमुक्तेन ॥ २९ ॥

मदीयलोके रत्नभूतेषु· एतेषु वस्तुषु मध्ये यद्रोचते तद्गृहाण ॥ २९ ॥

वयमपि तावका वकार्दन तत एवास्माभिः समुपचितसुकृतसुकृतफलोदयवशादेव क्षणमात्रमपि लब्धचरणपरिचरणः पितापि तावदयं ते हन्तेह रचितोऽचिंतोषाय भवदवलोकनोत्थाय नोत्थाय विरतो भवति भवति कृतोऽभिलाषः ॥ ३० ॥

हन्त· अनुकम्पायाम्· अकष्टमेव· इह रचितः, अचितोषाय भवदवलोकनादुत्तिष्ठति योऽस्मोस्तोषस्तदर्थम् ॥ ३० ॥

तथापि क्षम्यतामयमपराधोऽपराधोचितदण्डधर धरणितलालंकार किंवा क्षमाभृत्या भृत्यापराधे स्वामिनो दण्ड इति ममोद्दण्डो दण्डो ह्येव समुचित इति कृताञ्जलि जलितमदमतिकम्रेडितमाम्रेडितमाकर्ण्य पाशभृतो भृतोदारकारुण्यः श्रीकृष्णो निजगाद ॥ ३१ ॥

भृत्यस्यापराधे सति स्वामिनः क्षमाभृत्या क्षमाधारणेन हेतुना दण्डः, यदि तु भृत्यं न क्षमते स्वयं दण्डयत्येव तदा स्वामी न दण्ड्य इत्यर्थः, समुचित इत्यत्र क्रियतामित्यनुक्तिराज्ञापनदोषप्रसक्तिभयात्, क्र-

ताञ्जलि यथा स्यात्· जलितमदं जरा संजाता· अस्य जरितो जनितो मदो मत्तता येन तद्यथा स्यात् तथा, अतिकम्रमीडितम्, आम्रेडितं द्विस्त्रिरुक्तम् ॥ ३१ ॥

परितुष्टोऽस्मि मोश्चरमदिगधीश धीशबलताभावेन भावेन ते ॥ ३२ ॥

धीशबलता बुद्धेः शावल्यं कर्बुरत्वं मालिन्यमित्यर्थः· तस्या अभावो यत्र तेन भावेन प्रेम्णा ॥ ३२ ॥

अखिलमेवैतन्मे तन्मेदुराशय दुराशयदूरवर्तिने मह्यं किं पुनर्देयं त्वय्येवास्तु वास्तुरयं ममैवेति निगद्य मितममितमधुरं धुरंधरो माधुर्यवतामथ विधाय पितरमग्रेसरमग्रे सरहसो विस्मयस्य स्मयस्य च वर्तमानः समाजगाम व्रजपुरं व्रजपुरंदरनन्दनः ॥ ३३ ॥

मेदुराशय हे स्निग्धाशय । पितरम्·अग्रेसरं विधाय । सरहसः सरहस्यस्य विस्मयस्य स्मयस्य प्रफुल्लतायाश्च· अग्रे वर्तमानः सन् समाजगाम । तदागमनानन्तरं व्रजस्थानां तादृशविस्मयप्रफुल्लते समाजग्मतुरित्यर्थः ॥ ३३ ॥

तदा प्रभूतभूतमङ्गलकोलाहलोहलोलमनसां सहचरीणां सह चरीणां प्रमोदसुधाधारामुद्वहन्तीनां विरहिसखीसमाश्वासमाश्वासरसतया जनयन्तीनां नयन्तीनां प्रेमपरिपाकं महानुत्साहो जातः ॥ ३४ ॥

तदा सहचरीणां महानुत्साहो जातः, प्रथमं प्रभूतभूतः प्रचुरीभूतो यो मङ्गलकोलाहलस्तेन· ऊहः श्रीकृष्णागमनवितर्कस्तेन लोलमनसां, ततश्च जनसंघमुखात् तदागमनं निर्धार्य सह च साहित्येनैव रीणां द्रवितां प्रमोदसुधाधाराम्· उत्कर्षेण वहन्तीनां, ततश्च विरहिणी या सर्वयूथेशा तस्याः समाश्वासम्· आशु· आसरसतया जनयन्तीनां, यथासौ जायते तथा कथयन्तीनामित्यर्थः ॥ ३४ ॥

अथ व्रजपुरपुरंदरेणादरेणादरेणातिविस्मयतः पाशभृतः पुरः श्रीरश्रीयमाणमालिन्या वनमालिन्यावनत्यं च लालित्यं च स्तुतीनां यदवलोकयामासे ॥ ३५ ॥

व्रजपुरपुरंदरेण यदवलोकयामासे तदखिलं तदाननतः· आश्रुत्य गोपा इमं श्रीकृष्णम्· अखिलजगतो गोपायितारम्· ईश्वरं मन्यमानाः किमयं ब्रह्माख्यं परमहोऽस्मान् दर्शयिष्यतीत्येवं हृदि संकल्पकल्पका यदि बभूवुस्तदा· अमीषां ब्रह्माकारां धिषणाया वृत्तिं कारयामासेत्यन्वयः। अदरेण निर्भयेन। न श्रीयमाणं न स्वीक्रियमाणं मालिन्यं यया सा पुरःश्रीः। आवनत्यम्· अवनतत्वम् ॥ ३५ ॥

तदाननतो ननतोषतरलास्तदखिलमाश्रुत्य श्रुत्यर्थमिव मूर्तिमन्तमिमं तमिमे गोपा गोपायितारमखिलजगतो गतोहं मन्यमाना मानातीतोऽयमीश्वरः स्वयमात्मनो ब्रह्माख्यं परमहो महोदारं किमहो दर्शयिष्यतीति सर्वे यदि संकल्पकल्पका बभूवुः ॥ ३६ ॥

ननतोषतरला अपितु परमगम्भीरा अपि तदाश्रुत्य· आनन्दचपलाः सन्तः। गतोहं गतवितर्कं यथा स्यात् तथा मन्यमानाः। मानातीतो ज्ञानातीतो निष्परिमाणो वा। परमहः परमतेजोमयम् ॥ ३६ ॥

तदा तदाज्ञाय तेषां मनोरथगतमथ महाकारुणिको नराकारवपुर्ब्रह्म ब्रह्मतोऽप्यानन्दकन्दकमनीयमिति व्यतिरेकेण बोधयिष्यन् धयिष्यन्नतिमोहतमोहतधियां कुतर्ककृतां संदेहं व्रजभुवाममीषां ब्रह्माकाराम‌धिकाराम‌धिषणाया वृत्तिं कारयामास ॥ ३७ ॥

महाकारुणिक इति, मुक्तिसुखमेवामी बहु मन्यन्ते तत् तु किंचिन्मात्रादपि भक्तिसुखात्· न्यूनं किं पुनरेतदीयादिति तदनुभावनेनैव तस्यारोचकतामेषां जनयित्वा वर्तमानमेतत् प्रेमसुखमेव समुत्कर्षयिष्ये तथा वरुणलोकसंपत्तिमात्रश्रवणेनैवानुमितसर्वोत्कर्षे मद्वैकुण्ठलोके वासेप्सूनेतान्· तदनुभावनेनैव ततोऽपि निवर्तयिष्य इति स्वगतं परामृश्येत्यर्थः। व्यतिरेकेण नराकारब्रह्मविषयकप्रेमास्वादस्य त्याजनेन। अतिमोहेन तत्कारणभूततमसा च हता धीर्येषां तेषां कुतर्कं कुर्वतां संदेहं धयिष्यन्· चुलुकीकरिष्यन्, दूरीकरिष्यन्नित्यर्थः। अधिक आरामः प्रेमसुखास्वादमयो यस्यास्तादृश्या अपि धिषणाया बुद्धेर्वृत्तिं ब्रह्माकाराम्॥ ३७ ॥

ततश्च ब्रह्मसाक्षात्कारेऽविकारेऽविशेषतस्तदानन्दानानन्दानाकलनानुभवबाधे बाधेव तेषां यद्यजनि जनितकरुणस्तदा तदाकारवृत्तितो मुक्तियातुधानीजठरपिठरपिनद्धानमूनमूढयन्निव निवहीभूतप्रणयानात्मजनान् न कदापि दापितमुक्तिग्रहग्रहणान् करोतीति सिद्धान्तयन्निव निष्क्रमय्य भूयो भूयोऽपिहितहितमानन्दनन्दकं कुतोऽपि कदापि न वै कुण्ठं वैकुण्ठं नाम परमं स्वलोकं दर्शयामास ॥ ३८ ॥

तस्य कृष्णस्य· आनन्दश्च· अनानन्दश्च तयोः स्वकर्तृकलालनालालनोत्ययोरनाकलनम्· अदर्शनमज्ञानं वा तेन हेतुना· अनुभवस्य पूर्वसिद्धस्य बाधे सति तेषां बाधा· इव व्यथा· इव यद्यजनि तदा तयैव बाधया जनिता करुणा यस्य तादृशः सन् ब्रह्माकारवृत्तितो निष्क्रमय्य भूयः पुनरपि भूयो बहुतरं वैकुण्ठं दर्शयामास । दापितेति भक्तेः कर्तृत्वं स्वस्य च प्रयोजकत्वमिति णिच्, दापितेन मुक्तिग्रहेण ग्रहणं स्वीकारो येषां तथाभूतान् न करोति किंतु कथंचिद्भक्तेच्छानुरोधात् तान् कियन्तं कालमेव तत्स्पृष्टान् करोतीति, अत एवोक्तं "मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं भजन्ते" इति । न पिहितमाच्छादितं हितं यत्र तत्· आनन्दस्य नन्दकं समृद्धिकरम् ॥ ३८ ॥

ततश्च समाधितः समुत्थिता इव तमथ मूर्तं ब्रह्मानन्दमिव समालोक्यतममालोक्य तमसः परं परं प्रमोदमापुरमी पुरमीमांसकाः सन्तः किमपि विषयीकर्तुं न शक्नुवन्ति स्म ॥ ३९ ॥

समालोक्यतमम्· अतिशयेन दर्शनीयं तं वैकुण्ठं तमसः प्रकृतेः परम् । परमं प्रमोदमापुरिति, मुक्तियातुधानीजठरतो निष्क्रान्तानां तेषां तेनापि संधुक्षणप्राप्तेः । ततश्च पुरस्य निजगोष्ठवसतेर्मीमांसका विमर्शकाः सन्तः किमपि वैकुण्ठीयं वस्तु विषयीकर्तुं द्रष्टुं श्रोतुं स्प्रष्टुं घ्रातुं वा न शक्नुवन्ति स्म ॥ ३९ ॥

क्षणमात्र एव ब्रह्मकैवल्यं वल्यं च वैकुण्ठसुखमनुभवन्तो भ-

वन्तो युगसहस्रमिव मन्यमाना न्यमाना इव बभूवुर्निखिलसौभगवतो भगवतो मुखानवलोकेन ॥ ४० ॥

तत्र हेतुर्मधुरनरलीलामयस्य श्रीकृष्णस्यादर्शनमेवेत्याह क्षणमात्र एवेति । बल्यं बलार्हं, कैवल्याद्धनवदित्यर्थः । न्यमाना इव नितराम् अमानास्तत्सुखवञ्चनादनादृता दीना इव ॥ ४० ॥

नवलोकेन पुनस्तेन तेषामानन्दं वर्धयितुं वर्धयितुं च परितापं पुनस्तदपि वैकुण्ठं कुण्ठं चकार कारणरसविग्रहो भगवान् ॥ ४१ ॥

ततस्तदपि वैकुण्ठं कुण्ठं चकार, व्रजवासिनामसारस्यापातात् ततोऽपि तान् निष्क्रमयामासेत्यर्थः । किमर्थं, नवलोकेन नवीनस्यावलोकेन यद्वा नित्यनवो यो लोको गोकुलाख्यस्तेन । परितापं च वर्धयितुं छेदयितुम् । नन्वेतस्य कुतस्तया शक्तिस्तत्राह, कारणभूतश्च रसमयश्च विग्रहो यस्य तथा, कर्तुमकर्तुमन्यथाकर्तुं च समर्थ इत्यर्थः ॥ ४१ ॥

तदनन्तरं तरङ्गितमहा महानन्दमिर्वृताः श्रीकृष्णं विलोकयन्तो बभूवुरेते. एतेन ब्रह्मब्रह्मस्वरूपस्वलोकसायुज्ययुज्यमानताभ्यामपि तदलौकिकलौकिकलीलालावण्यादिकपरिशीलनमेव परमरमणीयमिति सिद्धान्तः ॥ ४२ ॥

ब्रह्म च ब्रह्मभूतः स्वलोको वैकुण्ठश्च तयोर्यथाक्रमेण सायुज्यं च युज्यमानता च ताभ्यामपि, अत एव "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता" इत्यादेस्तात्पर्यार्थमुद्घाटयद्भिः श्रीरूपगोस्वामिचरणैरुक्तम्,

"लोको रम्यः कोऽपि वृन्दाटवीतो
नास्ति क्वापीत्यञ्जसा बन्धुवर्गम् ।
वैकुण्ठं यः सुष्ठु संदर्श्य भूयो
गोष्ठं निन्ये पातु स त्वां मुकुन्दः" ॥

इति ॥ ४२ ॥

स एवं हि वंहिष्ठमहिमा नहि मानवद्भिरपि वितर्ककुतर्ककुलकर्कशकश्मलमतिभिर्वेदितुं सुशको दुःशको दुःशीलैरनुसंधातुमपि यः खलु लीलारिङ्गदपाङ्गतरङ्गतरलिममात्रेणैव प्रयुज्य सायुज्यसाधीयस्त्वमथ ततोऽतिदुर्घटघटनविघटनविधिना निष्कासयामास किमशक्यं तस्य लीलाशक्तेरिति ॥ ४३ ॥

इत्यानन्दवृन्दावने कै*वल्यलीलालताविस्तारे ब्रह्मलोकदर्शनो नाम षोडशः स्तवकः ॥ १६ ॥

मानवद्भिरपि ज्ञानवद्भिरपि । अत्र स्तवकद्वयोक्तलीलासमयक्रमो वैष्णवतोषणीदृष्ट्या ज्ञेयः, यथा कार्तिकस्यामावास्यायां कर्मवादोत्थापनेन॰ इन्द्रमखभङ्गः, तच्छुक्लप्रतिपदि गोवर्धनमखोत्सवः, द्वितीयायां यमुनातीरे भ्रातृद्वितीयाभोजनोत्सवः, तृतीयामारभ्य नवमीपर्यन्तं गोवर्धनधारणं, दशम्यां गोपानां विस्मयकथाबाहुल्यम्, एकादश्यां गोविन्दाभिषेकः, द्वादश्यां वरुणलोकगमनं, पौर्णमास्यां ब्रह्मलोकदर्शनमिति ॥ ४३ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां षोडशस्तवकसंगमनम् ॥ १६ ॥

## ॥ अथानन्दवृन्दावनचम्पूकाव्यस्य ॥

॥ सप्तदशस्तबकारम्भः ॥



अथ चतुर्मुखमुखसर्वगर्वगरिमखण्डनानन्तरमनन्तरमदमदकलकन्दर्पदर्पदमनाय ॥ १ ॥

जयत्यतुलमाधुर्यवर्षिणी विश्वहर्षिणी ।
लक्ष्मीसंतर्पिणी रासक्रीडा गोपीप्रकर्षिणी ॥

* कैशोर—इति पा॰

† प्रह—इति पा॰ ।

शुभ्रांशुवेणुनिनदप्रमदाभिसार-
कूटाभिधानविरहाधिविषादवाचः ।
कान्तप्रसादनविहाररतिरोहितानि .
वर्ण्यानि सप्तदशके स्तबके क्रमेण ॥

अथ वनसीम्नः सीमन्तं सीमन्ततुल्यं वर्त्म· आश्रित्य भगवान् प्रदोषे समये स्वयोगमायामखिलेषु कार्येषु तदुपयोगिषु नियोज्य रन्तुं मनश्चक्रे· इत्यन्वयः ।

तत्र चत्वारि प्रयोजनानि चकारद्वयेन· आनुषङ्गिकत्वमुख्यत्वाभ्यां द्विशो द्विशो विभज्य क्रमेण निबध्नाति, अनन्तरेण निश्छिद्रेण निबिडेन निरवधिना वा मदेन मदकलो मत्तो यः कन्दर्पस्तस्य दर्पदमनाय, यथा· अहं परमेष्ठी महैश्वर्यवानिमं मोहयामीति प्राकृतजगदैश्वर्यमत्तस्य चतुर्मुखस्य मदं चिदानन्दघननिजाचिन्त्यमहैश्वर्याविष्कारेण व्यखण्डयत् तथैवाहमेव. शृङ्गाररसमयो धीरललितो विश्वमेव मोहयामीत्यात्तमदं कन्दर्पमपि निजरासादिविलासदर्शनेन "साक्षान्मन्मथमन्मथ" इति ब्रह्माणमिव तमपि संमोह्यैव गर्वपर्वतादवरोहयामासिवेत्यर्थः ॥ १ ॥

निजमुरलिकालिकात्तशिक्षापरीक्षापरीष्ट्ये च ॥ २ ॥

निजा मुरलिकैव· आलिका· अनुकम्पितसखी तस्याः सकाशात् तया वा· आत्ता गृहीता या शिक्षा तस्याः परीक्षापरीष्ट्ये प्राकाम्याय, "परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रिया"मिति मेदिनी, यथेष्टपरीक्षार्थमित्यर्थः ॥ २ ॥

भुजयुगयुगलेन युगपदनेकरमणीरमणीयपरिरम्भाय ॥ ३ ॥

भुजयुगं यौति मिश्रयति यद्गलं तेन, "मितद्र्वादिभ्य उपसंख्यान"मिति डुः ॥ ३ ॥

कात्यायन्युपासनासनातनानां कुमारीणामारीणाममृतधारामिव नवानुरागरसलहरिकामकामबृंहितां हितां समकालमकालपाकेन केन-

चिदिच्छाविशेषेणाशेषेणानुमोदयितुं च समये मयेमा रंस्यथ चपा इति मनीषितबहुतरजनी रजनीरेकान्तदीर्घा निर्मातः ॥ ४ ॥

कात्यायन्युपासनमेव· आ सम्यक् सनातनं नित्यं यासां तासां, विशेषोपचारमयमासमात्रार्चनव्रतं समाप्यापि नित्यं तामुपासीनानामित्यर्थः, आरीणां सम्यक् तरन्तीं न कामेन बृंहितां, कान्तसुखतात्पर्यकत्वात् प्रेम्णैवेत्यर्थः, हितां स्वीकारोचितां, समकालं परोढारासंभोगादेस्तुल्यकालमेव ।

ननु ताः कनीयस्यो विचित्रनाट्यगानवैदग्ध्यप्रगाढसंभोगयोग्यतावत्यः सहसैव कथमभूवंस्तत्राह, अकालेऽपि पाको यस्मात् तेन, तदीयेच्छाशक्तेः किमशक्यमिति भावः, मनीषितस्य बुद्धिविषयस्य रासादिविलासस्य बहुतरा जनिरुत्पत्तिर्यासु ता रजनी रात्रीरेकान्ततो दीर्घा ब्रह्मरात्रिकल्पा निर्मातः, "तृचन्तो"ऽयम् ॥ ४ ॥

मातापित्रोरपि पूर्वपूर्वनिशानिशान्तावस्थानप्रत्ययं प्रत्ययं भगवान् कृतशक्तिनिक्षेपोऽक्षेपोदारसारसाधुतया धुतया लोकापेक्षयाक्षयामोदः ॥ ५ ॥

अक्षेपा विक्षेपरहिता· उदारा महती सारा श्रेष्ठा या साधुता तया पूर्वपूर्वनिशास्विव निशान्तावस्थानप्रत्ययं सुखशय्यायां मया शायितः पुत्रः सुखेनैव निद्रातीति गृहस्थितिप्रतीतिं प्रति कृतः शक्तिनिक्षेपो येन सः, यतोऽयं भगवान् लोकद्वयापेक्षया धुतया खण्डितया सत्याऽक्षय आमोदो यस्य सः, तदुक्तं"रागेणोल्लङ्घयन् धर्म"मित्यादि ॥ ५ ॥

वनसीमसीमन्तमाश्रित्य प्रदोषे प्रदोषे विराजमानो मानोज्ज्वलाः संकल्पितसंकल्पितगणराजदेवता वताये मूर्तिमतीराज्ञाप्रतीक्षणक्षणवतीरालोक्य सकलाः सकलाः सत्यो भवत्यो भवन्त्विति निगद्य च ॥ ६ ॥

प्रकृष्टा दोषा रात्रिर्यस्मात् तथाभूते प्रदोषे समये संकल्पिताः सम्यक्कल्पवदाचरिताश्च ताः संकल्पिताः प्रतिज्ञाताः शारदाश्चेति या

गणरात्रदेवता बहुरात्र्यधिष्ठात्र्यस्ता आलोक्य, "गणरात्रं निशा बहूः" इत्यमरः, इयमुत्प्रेक्षैव ज्ञेया, वस्तुतस्तु यदि सकला एव रजन्यः पूर्णचन्द्रा विलासबहुला अतिदीर्घाः संभवेयुस्तदैव मे विचित्ररासादिविलासः सिध्येदिति यदैव तदिच्छा समजनि तदैव तस्य सत्यसंकल्पत्वात् तास्तथाभूता बभूवुरिति ॥ ६ ॥

विशेषरहश्चिकीर्श्चिकीर्षितकेलिकलाकलापस्यानियोजितसर्वाध्यक्षतयाक्षतया भगवतीं स्वयोगमायामायासरहितामखिलकार्येषु नियोज्य रन्तुं मनश्चक्रे ॥ ७ ॥

योगमायानियोजनमप्येवं ज्ञेयम् । रहो रहस्यं तस्य चिकीः कर्तुमिच्छुः "सन्नन्तात् क्विप्" । अनियोजितसर्वाध्यक्षतया नियोगं विनापि· अभिप्रायज्ञानादेव या सर्वाध्यक्षता तया· आयासरहिताम् ॥ ७ ॥

अथ ताश्च निशा निशातमहसो महसोषूयमाणसुरभिसुरभिनिदाघशरत्कालिकशोभाबहुशोभाबहुलतयापरिमिता अपरिमिता अभवन् ॥ ८ ॥

नितरां शातं सुखमयं महो यासां ताः, महेन· उत्सवेन सोषूयमाणा अतिशयेनोत्पद्यमानाश्च ताः सुरभयो मनोज्ञाश्च याः सुरभिनिदाघशरत्कालिक्यः शोभास्तासां बहुशो भूरिशो भाबहुलतया प्रकाशबाहुल्येन· अपरिमिताः परिमाणशून्याः, "मनोज्ञे च सुगन्धौ च वाच्यवत् सुरभि स्मृतमिति विश्वः, "वसन्ते पुष्पसमयः सुरभि"रित्यमरः, न विद्यते परि सर्वतोभावेन मितमुपमा यासां ताः ॥ ८ ॥

त्रयाणामेव ऋतूनामनूनामनूत्तमां कुसुमादिश्रियं च शिश्रियुः ॥ ९ ॥

अनु· अनन्तरम्· उत्तमां कुसुमादिसमृद्धिं च शिश्रियुः श्रितवत्यः, कीदृशम्, अनूनां न· ऊनां, संपूर्णामित्यर्थः ॥ ९ ॥

तथाहि ।

हरिति हरिति हारी पूर्णयन् कर्णमोदं
मदकलकलकण्ठीकण्ठनादो जजृम्भे ।
सुमधुरमधुराजन्माधवीगन्धबन्धु-
र्गतिमतनुत मन्दश्चान्दनो गन्धवाहः ॥ १० ॥

तामेवैकैकपद्येन क्रमाद्वर्णयति, हरिति हरिति दिशि दिशि ॥ १० ॥

कुसुमकुलमफुल्लं मल्लिकावल्लिकानां
मदमधुपयुवानोऽलङ्कृता भङ्कृतेन ।
उपरि परिपिबन्तो वादयन्ते स्म शङ्खा-
निव निबिडनिदाघश्रीविहारोत्सवस्य ॥ ११ ॥

मल्लिकावल्लीनाम्, अफुल्लमविकसितमेव कुसुमकुलं परिपिबन्तो मदमधुपयुवानः शङ्खानिव वादयन्ते स्म, अत्र दार्ष्टान्तिके कोरकाणां पानं दृष्टान्ते च शङ्खानाम्, अग्रभागे मुखं विन्यस्य वादनं मत्तत्वव्यञ्जकम् ॥ ११ ॥

किंच ।

सरसि सरसि सारं सारमामोदमीयु-
र्मदकलकलहंसाः सारसाः सारसाश्च ।
विकचकुमुदिनीनां मण्डले गन्धलुब्धा
व्यधिषत रतिकेलिं चञ्चलाश्चञ्चरीकाः ॥ १२ ॥

सारं सारं सृत्वा सृत्वा, आमोदं हर्षम् ॥ १२ ॥

अथसेवासमयसमयमानादरोदरोच्छलत्किरणः समुदियाय तुहिनकिरणः स च प्रथमं कोपारुणमुखकमलायाः कमलायाः कपोलपोलकः कनकताटङ्क इव ॥ १३ ॥

कोपेति, मानिन्याः कमलाया लक्ष्म्याः कपोले पोलकः, स्फीत

इत्यर्थः, "पुल महत्त्वे," कनकताटङ्कः स्वर्णकुण्डलं, स्वस्य पीतिम्ना गण्डस्यारुणिम्ना मिलितस्य पीतरक्तस्य मण्डलाकृतेस्तस्य· उद्यच्चन्द्रसारूप्यम् ॥ १३ ॥

युवजनहृत्पटरङ्गकुण्डवलय इवानङ्गरङ्गरञ्जकस्य ॥ १४ ॥

तस्य कामोद्दीपकत्वमाह युवजनेति ॥ १४ ॥

नभःकुण्डताण्डविता रसमयसमयनिश्चयघटिका घटिकापात्रीव ताम्रमयी ॥ १५ ॥

मध्यगगनचिक्रमिषया तस्योदयस्थानात् किंचिच्चलनमालक्ष्याह, नभ एव कुण्डं तत्र ताण्डवितं वलनविशेषो यस्याः सा रसमयस्य स्निग्धस्य समयस्य निश्चयं घटयतीति सा घटिकापात्री दण्डप्रहरादिप्रमात्री, अनेन युवजनसंप्रयोगादिमनोरथसाधकत्वमुक्तम् ॥ १५ ॥

भगवद्दिदृक्षयाक्षयामोदं पीतनपीतनवकान्तिकन्दलीकमुन्मुखं मुखं हरिहरिदङ्गनाया इव ॥ १६ ॥

ततोऽपि किंचिच्चलने त्यक्तारुण्यगुणस्य पीतिमानमालक्ष्याह, हरिरिन्द्रस्तस्य दिगेवाङ्गना तस्या मुखं भगवतो दिदृक्षया·उन्मुखम्· उद्गताग्रमिव, पीतनेन कुङ्कुमेन पीता नवा कान्तिकन्दली यत्र तत्, अनेन तस्य प्रागभावकारणमपि सूचितं भगवतः पराङ्गनासमाकर्षकत्वगुणनिदर्शकत्वं चोक्तम् ॥ १६ ॥

कमलपरागरागपिञ्जरो राजहंस इव पूर्वदिक्सरसः ॥ १७ ॥

अथ तदैव नक्षत्रमण्डलीं प्रकटोदयां शरत्कालिकत्वेन पूर्वदिशोऽपि स्वच्छतामालक्ष्याह कमलपरागेति, कमलेति प्रथमातिशयोक्त्या नक्षत्राण्युक्तानि, व्रजविधोः श्रीकृष्णस्यापि राधानुराधादिस्वप्रेयसीगणकुचकुङ्कुमपिञ्जरितत्वापादकभाविविहारशुभसूचकत्वमप्युद्गातम् ॥ १७ ॥

तत्कालकालपुरुषमथ्यमानगगनदध्युदध्युदितो नवनीतपिण्ड इव ॥ १८ ॥

क्षणान्तरे च तमदृष्टचरस्निग्धाह्लादमयशुभ्रश्वेतिमधरं स्वकान्त्या च श्वेतीकृतगगनमालक्ष्य सचमत्कारमसौ वर्णितलक्षणश्चन्द्रो न भवति किन्त्वसावन्य एवेत्युत्प्रेक्षते, तत्कालेन शीघ्रेणैव काल एव पुरुषस्तेन मथ्यमानं गगनमेव दध्युदधिस्तस्मादुदितोऽभ्युद्गतो नवनीतपिण्ड इवेति, अनेनान्तर्बहिःस्नेहमयत्वेन लब्धविश्वासस्य विरहिणीजनस्यापि दिदृक्षणीयत्वम् ॥ १८ ॥

सितपटमण्डप इव रश्मिरश्मिवितानितः. ऋतुराजस्य ॥ १६ ॥

ततश्च विरहिणीभिर्दुःसहतेजस्त्वेन कुञ्चितनेत्रतया दृश्यमानस्य तस्य किरणानां रज्जूपमत्वमालक्ष्याह सितपटेति,रश्मयः किरणा एव रश्मयो रज्जवस्तैर्वितानितो विस्तारितः, ऋतुराजस्य वसन्तस्य, तत्र शरदि तस्यापि सत्त्वात् ॥ १९ ॥

जगदण्डमण्डपस्यनभोविटङ्कस्य विटङ्कस्य समेधवलधवलपारावत इव ॥ २० ॥

कान्तसंयुक्ताभिस्तु संपूर्णनेत्रतया दृश्यमानस्य तस्य तत्क्रीडोपकरणायमानत्वमेवेत्याह, जगदण्डमेव मण्डपस्तत्रस्थं नभ एव विटङ्कः कपोतपालिका तस्य पारावत इव । कीदृशस्य, विशिष्टष्टङ्को बन्धो यस्य तस्य, "टकि बन्धे" । सम्यगेधते वर्धत इति समेधं बलं यस्य स चासौ धवलश्चेति सः ॥ २० ॥

अविकलकलङ्कशङ्किततांम्बूलप्रतिबिम्बः स्फटिकसंपुटपुटक इव दिगङ्गनानाम् ॥ २१ ॥

तन्मध्यगतं मालिन्यं निभाल्याह, अविकलेन कलङ्केन शङ्कितो वितर्कितस्ताम्बूलप्रतिबिम्बो यत्र सः ॥ २१ ॥

नभोऽकूपारपारमागन्तुमुद्यत इव सकलधौतकलधौतपोतः कालपोतवाणिजस्य ॥ २२ ॥

स्फटिकताम्बूलसंपुटस्य चलनं न संभवतीत्यन्यथोत्प्रेक्षते, नभ एवाकूपारः समुद्रस्तस्य पारम् आ सम्यक् गन्तुमुद्यतः सकलं धौतं

यस्य स चासौ कलधौतपोतो रजतनौका, काल एव पोतवाणिजस्तस्य अनेन स एव तन्मध्यवर्ती कालवर्णः कलङ्कस्योपमा ॥ २२ ॥

सपल्लवो राजतकुम्भ इव रजनीजनीमहोत्सवस्य ॥ २३ ॥

कलङ्कित्वेऽपि सौन्दर्यं माङ्गल्यं चाह सपल्लव इति ॥ २३ ॥

एवं हीरककुण्डलमिव कुतूहलहलधरस्य ॥ २४ ॥

कलङ्क एव न भवति किंतु मध्ये छिद्रमेव तथात्वेनालक्ष्यत इत्याह हीरकेति ॥ २४ ॥

अण्डमिव शरत्कीर्तिहंस्याः ॥ २५ ॥

सच्छिद्रत्वमपि दुष्कीर्तिरिति तां वारयितुमाह· अण्डमिवेति, अन्तर्वर्तिनोऽजातपक्षस्य शावकपिण्डस्य प्रतिबिम्ब एव कलङ्कतयोच्यत इत्यर्थः ॥ २५ ॥

मृणालोपधानमिव स्वमदोष्णकंदर्पस्य ॥ २६ ॥

मृणालोपधानेति तापहारित्वं कामिलोकालम्बनत्वं चोक्तम् ॥ २६ ॥

मालतीकुसुमगर्भक इव विदोषप्रदोषप्रभादेव्याः ॥ २७ ॥

मालतीति साध्वीजनस्याप्यादरणीयत्वम् । गर्भकः केशमध्यस्थमाल्यम् ॥ २७ ॥

पाञ्चजन्य इव· उरीकृतविष्णुपदस्य विष्णुपदस्य ॥ २८ ॥

पाञ्चजन्येति भगवद्भक्तजनस्यापि रसोद्दीपनत्वं, विष्णुपदस्य· आकाशस्य, उरीकृतं विष्णोः पदं चिह्नमपि येन तस्य ॥ २८ ॥

रजतातपत्रमिव मदनराजचक्रचक्रवर्तिनः ॥ २९ ॥

रजतेति कामिलोकमात्रवशयितृत्वं सुखदशिशिरशीकरवर्षित्वं च ॥ २९ ॥

स्फटिकाज्यस्थालीव तमोऽभिचारचारवोत्पादस्य यज्ञस्य ॥ ३० ॥

स्फटिकेति सर्वजननेत्रोद्वेगहारित्वं मानिनीजनमानकालुष्यनाशकत्वं स्वच्छत्वं च ॥ ३० ॥

विकीर्णतरतारानाकारातुलमौक्तिकपटलः शुक्तिसंपुट इव गगनक्षीरनीरनिधेः ॥ ३१ ॥

विकीर्णं ताराकाराणामतुलमौक्तिकानां पटलं येनेति शरत्कालसमुल्लसितत्वं, क्षीरनीरनिधेरिति तत्कान्त्या गगनस्य श्वेतीभूतत्वात् ॥ ३१ ॥

दर्पण इव शोभादेव्याः ॥ ३२ ॥

दर्पण इति द्वीपसमुद्रादिसर्वशोभाव्यञ्जकत्वम् ॥ ३२ ॥

चन्दनतिलकमिव रजनिरमण्याः ॥ ३३ ॥

चन्दनेति रात्रिशोभादायित्वम् ॥ ३३ ॥

कर्पूरपूर इव लोकलोचनानाम् ॥ ३४ ॥

कर्पूर इति नयनसुखदत्वम् ॥ ३४ ॥

एकं पुण्डरीकमिवानन्दसरोवरस्य ॥ ३५ ॥

पुण्डरीकेति आनन्दान्तरस्यापि साफल्याधायकत्वम् ॥ ३५ ॥

हिण्डीरपिण्ड इव मधुरिमजलराशेः ॥ ३६ ॥

हिण्डीर इति माधुर्यम् ॥ ३६ ॥

सौध इव सौन्दर्यदेवतायाः ॥ ३७ ॥

सौध इति सौन्दर्यम् ॥ ३७ ॥

सैकतवलय इवाकाशगङ्गायाः ॥ ३८ ॥

सैकतवलय इति पावित्र्यम् ॥ ३८ ॥

मदमुदितकोकिलसमूह इव सकलकलः पुण्यराज इव सुचारुमण्डलश्रीः दाशरथिरिव सारस इव सलक्ष्मणः ॥ ३९ ॥

एवमाकारसाम्येन षड्विंशतिधा उपमाय शब्दसाम्येनापि दशधा उपमिमीते । सकलकलः कलकलयुक्तः, पक्षे सकलाः समस्ताः कला यत्र सः । सुचारुमण्डलानां देशविशेषाणां श्रीः संपत्तिर्यतः सः, पक्षे सुचारुणा मण्डलेन श्रीः शोभा यस्य सः । लक्ष्मणो रामभ्राता लक्ष्मणा सारसस्य स्त्री लक्ष्मणं कलङ्कचिह्नं च ॥ ३९ ॥

भगवद्भक्त इव कुमुदामोदकः संतापहारकश्च· उपदेष्टेव सदोषधीशः· मदन इव रतिवर्धनः· विवेकीव· अवनीतमोऽपहः सुग्रीव इव ताराधीशः समुद्र इव सदाहिमकरः करनिकरेण वृन्दावनं मार्जयामास ॥ ४० ॥

कोः पृथिव्या एव मुदम्· आमोदयति विस्तारयतीति सः, पक्षे स्पष्टम् । सदोषां धियं बुद्धिं श्यति नाशयतीति सः पक्षे सदैव· ओषधीशः, "शकन्ध्वादिः" सतीनामोषधीनामीशो वा । रतिं स्वकान्तां सौभाग्येन वर्धयतीति सः, पक्षे स्पष्टम् । अवन्यास्तमोऽज्ञानमन्धकारं च· अपहन्तीति सः । सदैव· अहयो मकराश्च यत्र सः, पक्षे हिमकिरणः ॥ ४० ॥

एवमुदित एव नभोमध्यमध्यवस्थाय स्थितश्च तरुतरुणगणानां चपलपलाशान्तरन्तरर्पितकिरणलवलवनिपातसहचरपलाशच्छायाच्छायामशाबल्येन वल्येन प्रतितरुतलं वनशोभाचालनीकारश्चालनीकारणचतुर इव क्षणं तदा वनशोभासुभगंभावुकभावुक आसीत् ॥ ४१ ॥

तादृशपलाशच्छायानामच्छो निर्मल आयामो विस्तारस्तस्य शाबल्येन श्वेतिमश्यामलिममिश्रणेन, प्रतितरुतलं वल्येन वलनीयेन सुवलनेनेत्यर्थः, वनशोभायाश्चालनीकार इव, कीदृशः, चालन्याः कारणं कालनं चालनमिति यावत्· तत्र चतुरो निपुणः, वनशोभायाः सुभगमनुकूलं भवतीति सुभगंभावुकं "खुकञ्", तादृशं भावुकं मङ्गलं यस्मात्, यद्वा वनशोभायाः सुभगंभावुका या भा तदानींतनी कान्तिस्तस्या आवुको जनकः ॥ ४१ ॥

ततश्च निविडोडुगणमुक्ताफलफलदम्बरवितानमध्यलम्बी वलद्विकिरणकिरणकेशरराजिरुचामरोरुचामरोत्तमः सित इव ॥ ४२ ॥

इत्यधस्तनीं शोभां वर्णयित्वा· उपरितनीमपि वर्णयति, निविडोडुगणानेव मुक्ताफलानि फलति यदम्बरं तदेव वितानं चन्द्रातपस्तन्म-

ध्यलम्बौ, वलद्विकिरणं क्षेपो येषां ते किरणा एव केशरराजयस्तासां रुचा अमराणामुरुचामरोत्तमः मितः, "इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेने"त्यस्य प्रायिकत्वाद् विकिरणमित्यत्र न गुणः ॥ ४२ ॥

किंवा भावलिभावलितनभोमुक्तातपत्रस्य विगतदण्डस्य मध्यनिस्यूतो धवलपट्टसूत्रपुण्डरीकबिम्ब इव विरराज ॥ ४३ ॥

चतुर्षु दिक्षु अवनतम् उपरि तून्नतं गगनमालक्ष्य नेदं वितानं तथात्वे समन्तात् साम्यापत्तेरिति विमृश्यान्यथोत्प्रेक्षते, भावलिर्नक्षत्रश्रेणिस्तस्या भा कान्तिस्तया वलितं नभ एव मुक्तातपत्रं तस्य ॥ ४३ ॥

तमथ मथनो वक्रस्य कस्यचन शोभाविशेषस्य जनकं न कं रञ्जयन्तं जयन्तं सर्वतोभावेन भावेन दिगवलावलाकर्षणकरैः करैर्धवलयन्तं वलयन्तं च मुदा भुवो वलयं निम्नोन्नततारहित्येन ताराहित्येन न सौहित्येन हित्येन प्रीणयन्तं समालोक्य मालोक्यचरितो निखिलरमणीसुहृदयं हृदयंगमां मुरलीं वादयामास ॥ ४४ ॥

तं तुहिनकिरणं भुवो वलयं भूमण्डलं मुदा वलयन्तं प्रवलीकुर्वन्तं सौहित्येन प्रीणयन्तं, "सौहित्यं तर्पणं तृप्ति"रित्यमरः, कीदृशेन, निम्नोन्नततया राहित्यं यत्र तेन, एकरूपेणेत्यर्थः, आहितम् अर्पितं तस्य भाव आहित्यं ताराभिर्नक्षत्रैराहित्यम् अर्पितत्वं यत्र तेन, हित्येन हितमर्हता, मा शोभा तया आलोक्यं दर्शनार्हं चरितं यस्य सः, यद्वा मा इति निषेधे, अलौकिकचरित्र इत्यर्थः ॥ ४४ ॥

सर्वाकर्षी यदपि युगपन्निस्वनः कृष्णवेणोः
कृष्णेच्छातस्तदपि समये श्रूयते कैश्चिदेव ।
आह्वाने वा खगमृगग[1]वां मोहने वाङ्गनानां
यस्मिन् यर्हि प्रसरति मनस्तत् तदासौ शृणोति ॥ ४५ ॥

---

[1] समासान्तविधेष्टचोऽनित्यत्वमत्र शरणम् ।